S. M. S. O. SABHA PUBLICATIONS

जगद्गुरु श्रीमदुत्तरादिमठाधीश

'अभिनव आनंदतीर्थ' इति प्रख्यात

श्री १००८ श्रीसत्यध्यानतीर्थ विरचितं

# चंद्रिकामण्डनम्



S. M. S. O. SABHA

Padma Sarovar–CHIRATANUR (A. P.)

1984

॥ श्री ॥



S. M. S. O. SABHA PUBLICATIONS

जगद्गुरु श्रीमदुत्तरादिमठाधीश
'अभिनव आनंदतीर्थ' इति प्रख्यात
श्री १००८ श्रीसत्यध्यानतीर्थ विरचितं

# चंद्रिकामण्डनम्



'जगद्गुरु श्रीमदुत्तरादिमठाधीश
'अभिनव सत्यध्यान' इति प्रख्यात
श्री १००८ श्रीसत्यप्रमोदतीर्थानां
अनुग्रहभूमिकया समेतम्



श्रीमध्वसिद्धांतोन्नाहिनी सभया प्रकाशितम्
संपादकाः संशोधकाश्च
श्री विद्यारत्न माधवाचार्य श्री. कट्टी

S. M. S. O. SABHA
Padma Sarovar-CHIRATANUR (A. P.)

1984

॥ श्री ॥

श्रीदिग्विजयरामो विजयते

श्रीमदुत्तरादिमठाधीशाः

श्री १००८ श्रीसत्यध्यानतीर्थ श्रीपादाः



वेदांतशास्त्रे गहने नदंतं
श्रुत्वैव यं मायिगजेंद्रसंघाः ।
पराद्रवन् दिक्षु विदिक्षु सत्य-
ध्यानाभिधं केसरिणं नतोऽस्मि ॥

॥ श्री ॥

श्रीमदुत्तरादिमठाधीशाः

श्री १००८ श्रीसत्यप्रमोदतीर्थ श्रीपादाः



अपास्याद्वैतमसुधां ये सुधां समपाययन् ।

तान् सुधामण्डनाचार्यान् गुरून् वंदे निरंतरम् ॥

श्रीरामवेदव्यासा विजयन्तेतराम्

## वाङ्मुखम्



सर्वोऽपि प्राण-भृत्प्रपञ्चः स्वभावत एव स्वेष्टं प्रप्सुः स्वानिष्टं परिजिहीर्षुश्च बोभवीतीति निश्चप्रचमिदं प्रमेयं सर्वेषामाविपालगोपालम्। विदिततरं चेदं विद्वदपश्चिमानां यद् धर्मार्थकाममोक्षेषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थ इति। तत् संप्राप्तिश्च गुरूपसत्या वेदशास्त्रार्थश्रवणमनननिदिध्यासनजन्यभगवत्साक्षात्कारजन्यपरमभक्तिप्राप्यात्युद्रिक्तप्रसादमात्रायत्ता। अतो जिज्ञासाशालिनां शास्त्रे बद्धादराणां मुमुक्षूणां प्राज्ञानां जिज्ञासा-तितर्पयिषया इयमत्र वाक्ततिः प्रस्तूयते। इदं तावत् मनःसमाधाय श्रोतव्यं यत्त्रिवर्गं दूरीकृत्य ऊरीकृत्यापि तं ज्ञानसंपत्तिं लक्ष्यीकृत्य तत्साधनतया तमनुष्ठाय ज्ञानमेव संपादनीयमिति सर्वेषु वेदेषु निखिलेषु शास्त्रेषु निरर्गल उद्घोषः। वेदपारीणाः शास्त्रनदीष्णा एवमेवाकलयन्ति समुपदेदिश्यन्ते च शिष्यसंघानव्याकुल मानसा इति। अनाद्यनन्तस्य सर्वज्ञशिखामणेरसंख्यातजीवराशीनां समुद्धरणकरणचणस्य बृहत्तमस्य, ब्रह्माण्डस्य रात्रिंदिवं सृष्ट्याद्यष्टव्यापारपरायणस्य नारायणस्य निःश्वासभूतः दिव्यदर्शनैः प्रार्चनीयमर्चनिकाभिर्मौनिमतल्लिकाभिर्ज्ञानिमूर्धन्यैर्मूर्धाभिषिक्तमानत्वेन मामन्यमान आम्नायसमाम्नायस्त्रिवर्गमापाततः पुनःपुनः प्रतिपादयन्नपि मोक्षस्यैव परमपुरुषार्थत्वं भूयो भूयः प्रतिष्ठापयति। ज्ञानस्यैव तत्साधनत्वमिति सावधारणं प्रतिपादयति। समर्थयति च भूरिभिः प्रमाणैः। तत् ज्ञानं च सर्वजडजीवपारतन्त्र्यज्ञानसमानाधिकरणविष्णुस्वातन्त्र्यज्ञानमेव। इदमेव सिद्धान्तं शतकृत्व आम्रेडयित्वा स्थूणानिखननन्यायेन दृढयन्त्याम्नायाः। वेदापरपर्यायपदवाच्या आम्नाया अनन्ता एव। एते वै वेदा "अनन्ता वै वेदा इति हि श्रुतिः वेदामामानन्त्यं

स्पष्टमुद्घोषयति। एतादृशां सर्वेषां वेदानां समीचीनः सर्वाङ्गीणः समन्वयः सर्वज्ञतमं नारायणं विना इतरैर्दुःसाध्यः। अत एव ब्रह्मरुद्राद्यर्थितो नारायणः स्वतो, व्यासत्वेन भूमाववतीर्य वेदोक्तवेदानुक्तप्रमेयपरिबृंहितं भारतं वेदार्थोपबृंहकानि पुराणादीनि लोकहितार्थं, रचयामास। तदर्थनिर्णयाय कमनीयशब्द सुन्दरंमननीयप्रमेयबन्धुरं सूत्रकदम्बकं व्यरीरचदित्युदन्तं शुभान्तं महान्तः सन्तो नित्यमनुवदन्ति। बहूनि च महान्ति प्रमाणानि एतत्सर्वं प्रमापयन्ति सन्देहगन्धविधुरं प्रतिष्ठापयन्ति च। तदिदमित्थमवश्यं ज्ञेयम्। "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।" इति श्रुत्यनुसारेण श्रुतीनां नितान्तं श्रोतव्यार्थत्वेपि नितान्तं गहनार्थत्वादचिन्त्यातर्क्यतत्वबोधकत्वाच्च प्रगाढज्ञानशालिनोपि देवा मुनयश्च तदर्थं वेत्तुं न प्रभवन्ति। अतो नारायण एव सूत्रनिकायं विरचय्य सर्ववेदसिद्धान्तमित्थमिति आगमानुगामिनीभिर्युक्तिभिर्निरचैषीत्। इत्थं च वेदानामानन्त्यात् गहनार्थत्वाच्चापि ब्रह्मादीनां नारायणपर्यंतानुधावनं कृतमिति ज्ञेयम्। वस्तुत इदं विष्णुसंख्याकं सूत्रसन्दर्भरूपं महाशास्त्रमनेकैरात्मनो भाष्यकारत्वं ख्यापयद्भिर्नैकधा व्याख्यातं समस्ति। तानि सर्वाणि भाष्याणि कृष्णद्वैपायनहृद्गमर्थं सामञ्जस्येन सामस्त्येन च न प्रकाशयन्ति च। कानि चिद्सूत्राशयाति विरुद्धार्थं प्रतिपादयन्त्यपि प्रतिप्रतिष्ठां प्रापिवांसि प्रदृश्यन्ते। पूर्वतनानि भाष्याणि सूत्रकाराभिमतं सिद्धान्तं न प्रकाशयन्तीति बहुत्र प्रदर्शयन्तः श्रीमदाचार्याः सूत्रकारसम्मतं सिद्धान्तं सर्वशास्त्राणि समालोड्य तेषु परस्परसमन्वयं संपाद्य प्राचीकशन् जगतां निःश्रेयसाय। श्रीमदानंदतीर्थानां भाष्यं कविकुलतिलकनारायणपण्डिताचार्योक्तदिशा "व्यासदेव हृदयातिवल्लभं वासुदेवमगणेयसद्गुणम्। साधयत्सकलदोषवर्जितं ज्ञानभक्तिदमनन्तसौख्यदम्। उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः। व्यंजयत्स्मृतिवचोभिरञ्जसा तस्य चार्थमतियुक्तयुक्तिमत्। बालसंघमपि बोधयद्भृशं दुर्निरूपवचनं च पण्डितैः अप्रमेयत्हृदय प्रसादवत् सौम्यकान्ति च विपक्षभीषणम्॥ अस्तदूषणमवन्ध्यभाषणं लक्षितं सकललक्षणैः समं। माननीयमपि नाकिनायकैरूपमन्यदिव धन्य-

त्मात्मनः" । इत्यादिश्लोकप्रतिपादितमहामाहात्म्योपेतम् । अदसीयभाष्यगाम्भीर्यं कविकुलतिलकत्रिविक्रमपण्डिताचार्यैः "कवीन्द्रैर्न समाप्यन्ते संगृह्यापि यतोऽनिशम् । न्यायरत्नानि भाष्याब्धेरस्य गाम्भीर्यमद्भुतम् ।" इत्यादिसुश्लिष्टशब्दान् प्रयुञ्जानैरूपवर्णितम् । एतादृशस्य एतस्य भाष्यस्य टीकात्रयी वरीवर्ति । एका पद्मनाभतीर्थभट्टारकैः यतिशेखरैः श्रीमदानन्दतीर्थाचार्यशिष्यवरेण्यैर्विरचिता सत्तर्कदीपावलीनामिका अपरा तत्वप्रदीपिका नामिका कविकुलतिलकैः कृता तृतीया च भाष्यकाराशयवारांशि सदावगाहमानैर्भाष्यचञ्चरीकैः कर्मन्दीश्वरैर्नैकगम्भीरग्रन्थनिर्माणचणैस्त्रिभुवनविदिताश्चर्यचर्यैर्जयीन्द्रैर्निर्मिता तत्वप्रकाशिका इति । श्रीपद्मनाभतीर्थभट्टारकाणां महाज्ञानं श्रीमज्जयतीर्थश्रीमच्चरणैरेव "न तत्वमार्गे गमनं विना यदुपजीवनं" इति "महानुभावैर्विवृतातिभावभाष्यानुवादेन न मेऽपराधः । न हींदिराराध्यपदो मुकुन्दो दूर्वांकुरैर्मन्दधनैरपूज्यः" इतिरीत्या तोष्टूयते. कविकुलतिलकनारायणपण्डिताचार्यैरपि "श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया । अस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभाम्'- वेदान्ताब्धि न यो जातु जहौ विद्वत्तिमिङ्गिलः । युक्तिप्रवाहसंरम्भात् परशास्त्रनदीचरः । व्याख्याप्रणादमात्रेण वीरंमन्यान्स्वमण्डले । मायाविप्रार्मसिहान् यो वादिसिंहो निराकारोत् । मत्तदुर्वादिमातङ्गतर्कमस्तकदारणे । पञ्चास्यो योऽभवदव्यक्तं चतुरास्योपि केवलम् । सन्याय-' रत्नावलिरप्युदपादि यतः शुभा टीका परानुव्याख्याया अनर्घा बोधसागरात् । वेदप्रवचनाचार्यशिष्योसाविति पूजितः । सभ्यः सभायां यो वेदं व्याचख्यौ वेदसारवित्" इति संस्तुतं समस्ति । "सप्ताष्टानि दिनान्येवं वादं कृत्वा सहामुना । "येनाहमिहकुमार्गादुद्धृत्याभिनिवेशितः सम्यक् श्रीवैष्णवे मार्गे पूर्णप्रज्ञं नमामि तम्" । इत्यादि श्लोकोक्तरीत्या पूर्वं "परपक्षरथारूढै खरतर्कमहायुधैः" वादानन्तरं स्वीकृतश्रीमदाचार्य शिष्यत्वैः कविकुलतिलकैस्त्रिविक्रमपण्डिताचार्यैर्विरचिता द्वितीया व्याख्या तत्वप्रदीपिकानामिका । तृतीयातु महानुभावैः सर्वज्ञकल्पत्वेन मामन्यमानैः श्रीमज्जयतीर्थमुनिचरणैर्निर्मिता तत्व प्रकाशिकानामिका ।

सर्वज्ञाचार्याणां भाष्यादि बहुग्रंथश्रेष्ठटीकाकर्तृत्वात् असाधारण्येन व्यपदेशा भवन्तीति न्यायेन विशिष्य टीकाकृत्पादा, इति भृशं स्पृहणीयपदवीभाजा, एत एव महानुभावाः। अस्याः साकल्येन महामुनिन्द्रैरपि दुरवगाहाशयाया टीकायाः कोमलकमनीयपदावलीषु गूढार्थानां, प्रकाशिका बह्व्यः सन्ति टिप्पण्यः। तैस्तैः संयमीन्द्रैर्महादेशिकैः लौकिकैरपि विद्वच्चूडामणिभिः विरचिता वरीवृत्यन्ते ताः सर्वाष्टिप्पण्यः टीकापदपदावलीषु निगूढार्थाविष्करणे भृशमुपकारिका। या विना नैव स्यात् टीका पङ्क्त्यवगाहनाशापि। तन्मध्ये श्रीमद्वादिराज श्रीपादैः कृता गुर्वर्थदीपिकानामिका एका, श्रीमद्रघूत्तमतीर्थश्रीमच्चरणैः कृता भावबोधनामिका द्वितीया श्रीमद्राघवेन्द्रतीर्थश्रीमच्चरणैः कृता भावदीपनामिका तृतीया, श्रीमत्सत्यनाथश्रीमच्चरणैः कृता अभिनवचन्द्रिका नामिका तुरीया लौकिकैरपि श्रीनिवासतीर्थैः कृता, वाक्यार्थविवरणनामिका पञ्चमी एते टीकावाक्यार्थावगाहने अत्युपयुक्ता वर्तन्ते। एते सर्वे ग्रन्था मुद्रापिताः प्राकाश्यं प्राप्ता वर्तन्ते। अपरे टिप्पणीग्रंथा वर्तन्ते येऽद्याप्यलब्धप्रकाशाः। श्रीमद्व्यासतीर्थश्रीमच्चरणैः कृता तात्पर्यचन्द्रिकाटिप्पण्येव। तथापि सा टीकास्थपदपङ्क्त्यर्थाविष्करण ननैर्भर्यविशेषवती। अपि तु टीकाकारैरविक्षिता पूर्वपक्षाः किं स्वरूपिणः ते कैः कृता वर्तन्ते इत्याद्युक्त्या पूर्वपक्षस्य रचनां पूर्वपक्षरीत्या सपरिकरं कृत्वा तस्य पूर्वपक्षस्य शास्त्रीय पद्धत्या खण्डनं विधाय तदेतत्पूर्वपक्षः केन टीकापदेन कैश्चित्कापदैर्वा प्रतिपाद्यते सूच्यते वा इत्याद्युच्यते पूर्वपक्षकरणे सिद्धान्तप्रतिपादने च समग्रं मीमांसाशास्त्रं सहकारितां प्रापय्यते। एवं प्रत्यधिकरणं पूर्वपक्षं सप्रपञ्चं समुपन्यस्य पश्चात् पूर्वपक्षं सपरिकरमपाकृत्य सिद्धान्तमन्वक् सम्यक् प्रतिष्ठापयन्ति। पण्डितसार्वभौमाः श्रीव्यासतीर्थश्रीचरणाः। न केवलं प्रत्यधिकरणं अपि तु एतैर्महानुभावैः प्रतिसूत्रं खण्डनमण्डने विदधीयेते तथा चोक्तं तैरेव "प्रतिसूत्रं प्रकाश्येते घटनाघटने मया॥ स्वीयान्यपक्षयोः सम्यक् विदाङ्कुर्वन्तु सूरयः" इति इदमत्र हृदयम् तत्वप्रकाशिका अतिगहना गंभीरा च वर्तते प्रत्येकमपि पदं महातात्पर्यपूर्वकं गूढा-

भिसन्धिपूर्वकं च प्रायौक्षीत् टीकाकारमर्चिका इति प्रदर्शयितुं तात्पर्यचन्द्रिकां प्रायैषुर्व्यासतीर्थश्रीमच्चरणाः । तथा चोक्तं तैरेव "श्रीमद् भाष्यस्य या टीका जयतीर्थार्यनिर्मिता । गम्भीरा निर्मला चेमां व्यकरिष्ये यथामति" "व्यासतीर्थेभ्योपि प्राचीनैर्विष्णुदासाचार्यैः स्वकृत वादरत्नावल्यां टीकाकृत्पादशैली प्राशस्यते तदित्थं "नोधत्ते जडतां न भङ्गमयते नीचस्थलं नेहते स्खालित्यं न च याति नैति कृशतां क्षोभं क्वचिन्नाञ्चति। मानं नोज्झति नो जहाति च पदं व्यर्थं न कोकूयते कल्येयं जयतीर्थकोविदवचःकल्लोलिनी सेव्यताम्"।। व्यासतीर्थैरेवोक्तम् "चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः। गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ।। इति श्रीराघवेन्द्रतीर्थैरुक्तम् "प्रतिवाक्यं प्रतिपद मनेकाकूतगर्भिता । प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते इति "धाटी श्रीजयतीर्थवर्यवचसां पेटीभवत्स्वर्धुनी पाटीरानिलफुल्लमल्लि-सुमनोवाटीलसद्वासना पेटी युक्तिमणिश्रियां सुमतिभिः कोटिरकै-श्लाघिता सा टीका निचयात्मिका मम चिराद्धाटीकतां मानसे"।। इति श्रीमत्सत्यप्रियतीर्थैरुक्तम् ।। एवमेवासङ्ख्यैर्विद्वद्धुर्यैष्टीकामाहात्म्यं तोष्टूयत इत्यलं पल्लवितेन ।। श्रीमद्व्यासतीर्थश्रीमच्चरणैः प्रौढग्रन्थ त्रयी विरचिता वरीवृत्यते । न्यायामृतं, चन्द्रिका, तर्कताण्डवं चेति । तत्र चन्द्रिकायाः, सिद्धान्तप्रतिपादकत्वात्, सपरिकरं तत्समर्थकत्वाच्च गम्भीरटीकाव्याख्यानरूपत्वात् च न्यायामृततर्कतांडवापेक्षया चन्द्रिकायाः श्रैष्ठ्यम् । अत एव श्रीमद्व्यासतीर्थाश्चन्द्रिकाचार्या इत्येव सम्बोध्यन्ते विद्यावद्वरेण्यैः । अखण्ड्यस्यास्य ग्रन्थस्य महामहोपाध्याय बिरुदाङ्कितश्रीरामसुब्रह्मण्यशास्त्रिभिः खण्डनाभासरूपं कञ्चन ग्रन्थं लिखित्वा तं मुद्राप्यापि श्रीमत्सत्यध्यानतीर्थश्रीचरणेषु वादिदन्तीन्द्र-पञ्चाननेषु स्वसिद्धान्तरक्षणपरेषु भूमितले रात्रिदिवं चक्षुरुन्मील्य जागरूकेषु स्थितेषु तस्य प्रकाशनं प्रचायनं च दुःसाहसं मन्वानैर्मुद्रापितान्यपि प्रायः सर्वाणि पुस्तकानि स्वज्ञातिगृहे चिदम्बरे गोपायितानि । कतिपयान्येव स्वात्मनः विशिष्यप्रीतिपात्रेभ्यः प्रेषितानि। एकं पुस्तकं तिरुपतिपत्तनमधिवसतः कुप्पूरायेतिनामकस्य गृहस्थस्य सकाशे कवाटे

चिरं स्थितं कुट्टीतिनामकतन्मित्रेण मुहुर्दृष्टम्। यदा श्रीपादाः सभां वैभवसंभारेण प्रचालयितुं पद्मसरोवरं प्रति दिग्विजयं कृतवन्तः तदा कुट्टीद्वारा धान्यादिसंभाराः, प्रापिताः एकस्मिन् दिने तेन स्वामिपादानामभ्याशे प्रोक्तं श्रीमाध्वचन्द्रिकाखण्डनमिति किञ्चन पुस्तकं तिरुपतिपत्तनस्थस्य ममैकमित्रस्य गृहे कपाटे स्थितं वारं वारं मम दृष्टिगोचरीभवत् मामतीव दुनोति दुःखाकरोति च। तत्खंडनं स्वामिपादैः कृपया विधेयमिति बद्धाञ्चलिना, व्यजिज्ञापयत। तच्छ्रुत्वा झटित्येव तत्पुस्तकं अध्यक्षीकर्तुमिच्छामि शीघ्रातिशीघ्रं किमपि कथमपि कृत्वा तत् अस्माकं हस्तगतं करणीयमित्याज्ञापयामासुः। कुट्टिना तथैव, कृतम्। हस्तगतमात्रे पुस्तके स्वमठे देवमन्दिरेपि कवाटेपि पिधाय स्वात्मानमेव सन्निधाप्य स्वेच्छया सन्निरुध्य च तत्पुस्तकं ह्यादित आन्तं केनाप्यविदिता वाचयन्तः अध्यासिषत। मध्यान्हसमयो जातः। तिग्मभानुर्वियन्मध्ये व्यराजत। क्षुधार्तास्तृषार्ताश्च जनव्यूहा इतस्ततो बम्भ्रम्यमाणा अपि श्रीपादानदृष्टवा आकुला व्याकुला अबोभूयन्त। शिष्याः सर्वे कान्दिशीकतां गताः। विद्वांसो घोरभयाक्रान्ता किं कर्तव्यतामूढाः समजायन्त। सर्वे विद्वन्मणयः पण्डितशिरोमणीन् पाण्डुरङ्गी कृष्णाचार्यान् समुपसृत्य विज्ञातभूतार्थानकार्षुः। पं. कृष्णाचार्या अपि संभ्राता दीना दूना भूत्वा इतस्ततः आहिण्डमाना अभवन्। अन्ते देवमन्दिरमासेदिवांसः पिहितद्वारं तत् दृष्टवा सामान्यतो भावावेशशून्या अपि कृष्णाचार्या दम्भोलिशतताडिता इव दुःखातिशयदूना अभूवन्। कुत्रास्मि किमारम्भोस्मि किंकार्यं कर्तुकामोस्मि कथं लुप्तस्मृतिरहं संवृतः। कथंकारं गतप्राण इवास्मि, इत्यादि दैन्यं किञ्चित्कालमनुभूय भगवदनुग्रहेण आत्मानमचीक्लिपन्तान्ते। लब्धस्मृतयः पिहितं द्वारं सातत्येन घटिकापर्यंतं प्राहरन् तदा बाह्यसृष्टिं प्रति चेतिताः श्रीपादा द्वारमुद्घाटयामासुः। पं. कृष्णाचार्या विनयादरसध्रीचीना स्नानपूजाकाल व्यतिक्रान्तः कोपि देहायास इव लक्ष्यते इति व्यजिज्ञपन्। श्रीपादा ऊचुः न कोपि देहायासलेशोपि किन्तु उद्वेलो मनसो ह्यायासः। अद्य कल्य एव कुट्टिद्वारा आनायितं चन्द्रिकाखण्डनाभासपुस्तकं दृष्टवा

स्वात्मनः आशौचं निश्चिन्वाना वयं अशौचनिवृत्यनुकूलव्यापारं तत् खण्डनं कर्तुमुद्यताःसमुपेक्षितसर्वदैनंदिनाचाराः खण्डनकार्य एव, ग्रस्त चित्ता ध्वस्तकार्यान्तरस्मृतिलेशा वयमिदानीम्। चतुर्वादनपर्यन्तं विरचित तत्खण्डना विद्वत्सदसि प्रश्नोत्तरपूर्वकं आक्षेपसमाधानपूर्वकं चन्द्रिकाखण्डनखण्डनं तन्मण्डनं च विधाय निवृत्ताशौचा भूत्वा स्नानपूजे सायं पञ्चवादनसमये निर्वर्त्य रामवेदव्यासपूजाया महानन्दं निर्वोढुमाकाङ्क्षामहे इत्युक्त्वा सर्वान्निवर्त्य लेखनं प्रारिप्समानाः लेखनसामग्रीमानाययामासुः। चतुर्घण्टापर्यन्तं खण्डनं विलिख्य विदुषां पुरतः दशसहस्रजनपरिवृताः स्वकृतमण्डनानुवादं व्यधुः। प्रश्नानामुत्तराणि आक्षेपाणां समाधानानि प्रदाय विनिवृत्ताशौचा, वयमिदानीं स्नास्यामः इत्युक्त्वा गगनस्पृक् तुमुल जयजयकारप्रखरकरतालिकावादनसममेव सभाया जग्मुः स्नानमन्दिरम्। अहो निश्चला निष्ठा सिद्धान्ते। अहो अक्षय्या दीक्षा परमतखण्डने। अहो वैषयिकसुखपराङ्मुखता मुनीश्वराणां। अहो विस्मापकं धैर्यम्। अहो विचित्र आत्मविश्वासः। अहो अगाधं पाण्डित्यम्। अहो वावदुकता प्रखरा तर्ककर्कशता। अहो आश्चर्यकारिणी ग्रन्थोपस्थितिः। अहोमानातीता प्रत्युत्पन्नमतिता इत्यादिवचांसि महामोदेन वदन्तः विद्वांसः कालमत्यवाहयन् भक्ष्यभोज्यादि च द्विगुणं तद्दिने सर्वे प्रापिवांसः। चन्द्रिकामण्डनं विरचय्य पं. महामहोपाध्यायरामसुब्रह्मण्यशास्त्रिभ्य वादाहवार्थमह्वाय आह्वानपत्रं प्रेषयामासुः श्रीपादाः। श्रीरामसुब्रह्मण्यशास्त्रिभिः क्षिप्रमेव उत्तरं प्रेषितम्। तस्य सारांशस्तु। पूज्याः श्रीपादाः मध्वमतचन्द्रिकाखंडन रूपो ग्रन्थोऽयो बहोः कालात् पूर्वं यौवन परमोन्मेष समये मया लिखितः। इदानीं ममैव तत्रानुरागो नास्ति। न च वर्तते अभिमानः नैव तत्र आग्रहलेशोऽपि भवति। वयोनुरूपं मम ज्ञानं परिपक्वतां प्राप्तम्। तदीय नैर्मल्यं विकस्वरं जातम्। मनो गुणानुरागि संवृत्त। हृदयं दुराग्रहदूरं समस्ति। भावना विशाली भूता। प्रेम्णः शक्तिः पूर्णा तथा प्रफुल्ला इति अनन्तरं मासत्रयाभ्यन्तरे पुस्तकान्तरं नवीनतया विलिख्य प्रेषितम्। तत्सहचरी चैका पत्रिकाऽपि प्रेषिता तत्र न कश्चन भेदः अस्म

दीयभवदीयमतयोरिति विलिखितमासीत्। तद्ग्रंथारम्भे अयं श्लोको दृष्टिगोचरो बभूव। "शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा साकं प्रत्यक्षतर्कैर्मुनिगणसुमतैर्भारतादिप्रमाणैः। तत्रैव व्यास सूत्राण्यकुटिलविधया भान्ति तात्पर्यवन्ति। प्रत्नैराचार्यरत्नैरपि परिज गृहे शङ्करार्यैः स चापि" (द्वितीयपादे नैके पाठभेदा वर्तन्ते) तत्रैवोक्तं अल्पीयांसो मतभेदाः सर्वत्र स्युरेव। द्वैतिनां सतामपि श्रीव्यासरायमठीयानां श्रीराघवेन्द्रमठीयानां श्रीमदुत्तरादिमठीयानां तादृशा उपेक्ष्या भेदाः सर्वथा उपलभ्यन्ते। नैते वादाहवप्रयोजका मताः। एतैरेव महाभागैः महाद्वैदमर्दनमिति ग्रन्थे विष्णोरेव सर्वोत्तमत्वं मोक्ष दातृत्वं च इति महता संरभेण प्रतिपादितम्। तत्प्रतिषेधितं, च विधिशिवाधीनम्। "वेदाहमेतं पुरुषं महांतमादित्यवर्ण तमसः परस्तात्।" "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यते अयनाय"। इति सर्वसंप्रतिपन्नपठ्यमानपुरुषसूक्तश्रुतौ, मोक्षहेतुज्ञानविषयत्वस्य महापुरुषशब्दितनारायण कथनात् 'नान्यः पन्था इत्यत्र सिद्धोपायांतर निषेधपरत्वेन मोक्षहेतुज्ञानविषयमहापुरुषान्यस्य मोक्षोपायत्वप्रतिषेधाच्च। अतो विष्णुरेव मोक्षहेतुज्ञानविषयः मोक्षोपायश्चेति सिद्धम्। अस्यां श्रुतौ इह शब्दनिर्देशात् विष्णुनिष्ठस्य अस्मिन्नेव जन्मनि मोक्षः न त्वन्यनिष्ठस्येति सिध्यति एतेन ज्ञानकांडबहिर्भूतश्वेताश्वतरोपनिषदि यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः हिरण्य गर्भं जनयामास पूर्वं स नो बुध्या शुभया संयुनक्तु। "विश्वस्यैकं परिवेष्टितारमीशानं ज्ञात्वा अमृता भवन्ति। तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय। य एवं विदुरमृतास्ते भवन्ति। अथेतरे दुःखमेवापियान्ति" इत्यादिभिर्वचनैः। उमासहायमित्युपक्रम्य प्रवृत्तेन कैवल्योपनिषद्वचनेन शिवस्य मोक्षहेतुज्ञानविषयत्वं मोक्षदातृत्वं च कथितमित्युक्तमपास्तम्। त्वदुदाहृतवचनेषु शिवस्य मोक्षहेतुज्ञानविषयत्वकथनेपि इहेतिपदाभावेन, पुरुषसूक्तोक्तमोक्षहेतुज्ञानविषयविष्णावेतज्जन्मनि मोक्षदातृत्वप्रतिपादनाच्च जन्मान्तरे मोक्ष हेतुविष्णुज्ञानजननद्वारा शिवज्ञानस्य मोक्षहेतुत्वसिध्या अग्निहोत्रादि-

कार्यागामित्र मोक्षप्रयोजकत्वे एव विश्रान्त्या शिवस्य मोक्षदातृत्वासिद्धेः। यदि च परंपरामोक्षहेतोरपि तद्दातृत्वमभिमतं तदा तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन इति श्रुत्या ब्रह्म-ज्ञानद्वारा मोक्षहेतुतया प्रतिपादितयज्ञादीनां मोक्षदातृत्वं कुतो न भवेत् इत्यादि सुबहु अस्मन्मतानुकूलं प्रतिपादितं महामहोपाध्यायशास्त्रि महोदयैरित्यलं विस्तरेण ।

चन्द्रिकामण्डनकाराश्च अस्माकं परमगुरूणां श्रीसत्यप्रज्ञतीर्थानां विद्वद्वरेण्यानामाश्रमगुरवः विद्यागुरवश्च । प्रातःस्मरणीया, एते महामुनीन्द्रा अद्भुतोदारचर्याः पण्डितवर्यधुर्या सदाकृतप्रवचनमहा-कार्याः परिहृतसर्वाकार्याः वादाहवेषु सर्वविस्मापकधैर्याः स्वेच्छया स्व-बन्धकश्रुतिशास्त्रमर्यादाः विद्वद्विद्यार्थिविश्राणितसर्वकार्याः सर्वविश्रुत-महौदार्या तामसमततततमःसूर्या वैदिकमताम्भोनिधिरजनीभार्याः, श्रीमत्सत्यध्यानतीर्थमहाचार्यवर्याः। तैः स्वामिपादैः कृतं इदं चन्द्रिका-मण्डनं सुतरामप्रतिरोध्ययुक्तियूथवित्तं गहनप्रमेयप्रतिपादनशौण्डं सत्सिद्धान्तकरण्डकभूतं सर्वभव्यभाण्डं राराज्यते इत्यत्र न सन्देहगन्धोपि महास्वामिपादानां, विद्वत्सार्वभौमानामुपकारं पुनः पुनः स्मरामः ।

पंडितमंडलचक्रवर्तिभिः जगद्गुरुभिः पातःस्मरणीयैः श्रीसत्यध्यान तीर्थश्रीचरणैः विरचितः "चंद्रिकामंडनम्" इति ग्रंथः तिरुपतिश्रीमध्व-सिद्धांतोन्नाहिनीसभया मुद्राप्य प्रकाश्यं नीयते इति महान् प्रमोदः अस्माकम् ।

अनेन शुभकर्मणा यशोधवलितादिगंतास्मद्गुरुपरंपरासमाराध्यः भारतीरमणमुख्यप्राणंतर्गतजानकीजानिदिग्विजयरामः सभापतीन् सद-स्यांश्च ज्ञानभक्तिवैराग्यादीन् शुभगुणान् प्रदाय दीर्घेण सीतासमेतराम समीरसेवारतेन आयुषा समनुगृणहातु इति प्रार्थयमानाः विरमामः विस्तरात् इति शम् ।

शके १९०६ रक्ताक्षि नाम
संवत्सरआषाढकृष्णपक्ष
पंचमी, (टीकाचार्यपंचमी)
मळखेड क्यांप
१८-७-१९८४

श्रीमदुत्तरादिमठाधीशाः
श्री १००८ श्रीसत्यप्रमोदतीर्थ
श्रीचरणाः ॥

# PUBLISHER'S NOTE

The Illustrious Sri Kanchi Subba Rao established SRIMAN MADHWA SIDDHANTONNAHINI SABHA more than a Century back for propagation of Madhwa Philosophy.

Publication of Books on Dwaitha Philosophy for the benefit of Public & Madhwas in particular is one of the avowed objects of the Sabha. In the series the Publication of a rare book "CHANDRIKA MANDANA" by Sri Satyadhyana Theertharu, one of the Great Pithadhipatis of Sri Uttaradi Mutt has been taken up.

"CHANDRIKA" is a great Gift to Humanity and Madhwas in particular by the Great Sri Vyasaraja Theertharu. Any criticism without valid points should be refuted with all the force. We are grateful for the refutation by Sri Satyadhyana Theertharu in his own inimitable style in publishing "CHANDRIKA MANDANA". Only one copy of the Book was available and it was felt that this valuable book should be made available to Madhwa Public and we have therefore, taken up the Publication of this book in our Series.

We are grateful to Sri Vidyaratna Madhavacharya Katti, our Revered Vice President for his devoted service in bringing up this book.

We do hope that this book will be a useful one for all devout Madhwas.

With this hope we offer this Publication at the Lotus Feet of Lord Venkateshwar, Sri Padmavathi Ammanavaru and Sri Vedavyasa Devaru for the benefit of Madhwas.

: Sri Krishnarpanamasthu :

**S. A. N. Ranganathachar,**
*Honorary Secretary*
Sriman Madhwa Siddhantonnahini Sabha,
Chirtanur (A. P.)

Vijaya Dashami,
4-10-1984,
MADRAS-6.

॥ श्रीः ॥

# INTRODUCTION

Sri Madhwacharya has shown by cogent arguments in his works Tatwa Nirnaya and others that entities beyond our perceptual reach like Dharma, Adharma etc., are to be established finally on the basis of an eternal work. Such an eternal work is the Veda which has remained absolutely intact and unchanged from time without beginning. Vedas are to be interpreted by applying the established criteria of interpretation. Then only their real import is revealed. This difficult task, impossible to be done by others has been accomplished by Sri Badarayana, the Incarnation of Lord Hari in his unique work Brahma Sutra composed by Him at the request of His devotees Chaturmukha and others. Hence these Sutras are proclaimed as Paravidya the greatest of all Sadagamas.

The message of the Sutras was obscured and twisted by many wrong and random commentaries. Sri Vayu, at the command of the Lord, came down to the earth and wrote his famous Bhashya in which he has refuted all rival commentaries and has revealed and established the real purport of the Sutras by sound arguments and abundant authorities. Madhwa Bhashya though clear, and apparently simple is quite terse and tough. It is elucitated and elaborated to some extent by Sri Tikakara known as Sarwajnakalpa or near-Omniscient. The style and the mode

of presentation of Tikakara is similar to that of his Guru Sri Madhwacharya. It is apparently simple but really unfathomable. Sri Vyasatirtha in his work Chandrika puts it in the words.

श्रीमद्भाष्यस्य टीका या जयतीर्थार्यनिर्मिता ।
गम्भीरा निर्मला चेमां व्याकरिष्ये यथामति ॥

"The Tika of Jayatirtha is absolutely flawless and highly deep in meaning. I shall elucidate it according to my ability."

Sri Vyasatirtha has composed highly scholarly, and immortal works. Chandrika is the greatest of them all. Hence he is popularly known as Chandrika-charya. Chandrika is a commentary on Tatwaprakashika of Sri Jayatirtha. The refutation of the rival schools occuring in Bhashya and Tatwaprakashika can not be clearly understood by the ordinary intellectuals. It has been brought out in a lucid and unique manner by Vyasatirtha. In Chandrika, he has shown that the interpretation of every Sutra made by the rival schools is quite wrong and untenable whereas that of Sri Madhwacharya is absolutely correct and unimpeachable. He says at the beginning of Chandrika :

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोः सम्यक् विदां कुर्वन्तु सूरयः ॥

"I shall show in this work that the interpretation of every Sutra by Sri Madhwacharya is sound and logical and that of the opponent wrong and illogical. I have done this for the benefit of the learned."

In Chandrika, the opponent's views are briefly described mentioning their names. They are then refuted thoroughly. While refuting the opponent's views their fallacies are pointed out one after the other, and powerful counter arguments are advanced until the opponent is completely dumb-founded. The Nyayas or the conclusions of Purwa Mimamsa and those of grammar are copiously used in addition to the other authorities to establish a particular tenet. The meaning of a certain word or the interpretation of a certain Sutra given by the opponent may be the same as that of ours. But Chandrika shows that the view is tenable and acceptable according to our Siddhanta. But it is absolutely untenable and unacceptable on the basis of the opponent's philosophy. This is another characteristic of Chandrika and Sri Vyasaraja's style. The three works Chandrika, Nyayamrita and Tarkatandawa known as Vyasatraya are immortal works in Madhwa Philosophy.

One monistic Pandit Sri Rama Subba Shastri wrote a book in which he has attempted to refute Chandrika. The book came to the notice of Sri Satya Dhyana Tirtha, the Pontiff of Uttaradi Muth and popularly known as Abhinava Ananda Tirtha. The moment, His Holiness saw the book, he deemed himself as unholy and undeserving to touch and worship Sri Rama until he refuted the book thoroughly. So he immediately sat closeted in a room and wrote out the refutation. Then only he took the bath and worshipped Sri Rama late in the evening. This was in Tirachanur in the year 1924 during the last week of December.

He could not tolerate even for a moment any attempt to tarnish the name and fame of Chandrikakara. He challenged the learned Shastri to come personally for an open debate which the latter quietly declined.

After the work Chandrika Mandana was completed, His Holiness called a meeting of the scholars of the three schools Dwaita, Adwaita and Vishishtadwaita. He explained how he had shown in his work that the attempt to throw dust on Chandrika was simply ridiculous. His Holiness has boldly asserted at the beginning of his Chandrika Mandana thus :

'सा चन्द्रिकाचालनधीरमुष्य शशाङ्कसञ्चालनधीः सुतस्य ।
अङ्के शयानस्य यथा जनन्याः तथाविधेति प्रकटीकरोति ॥'

"The author Sri Satyadhyana Tirtha shall show in this work that the attempt to tarnish Chandrika is as vain and ridiculous as the attempt of a baby lying on the lap of his mother to seize and shake the moon shining brilliantly high in the sky."

The learned readers of Chandrika Mandana will realize fully that this assertion of His Holiness is quite sound and well founded.

Thereafter, Chandrika Book was placed with decoration on the back of an elephant and taken in grand procession by His Holiness round the Padma Sarowara. His Holiness walked on foot. Thousands witnessed the procession in great joy and admiration. Thus the pure and pious name and fame of Chandrika was vindicated. Sri Satyadhyana Tirtha earned unbounded merit and abundant blessings of all his Gurus.

Such a great work Chandrika Mandana was lying absolutely unnoticed and unappreciated. It was going to be lost for ever as there was only one old complete copy available. Sri Madhwa Siddhant Onnahini Sabha of Tirupati dedicated as usual to the spread of Madhwa Siddhanta for over a century, took up the sacred task of publishing it and bringing it to light. The book can be considered as a holy idol of both Sri Satyadhyana Tirtha and Sri Vyasaraja Tirtha

'रूपमन्यदिव धन्यमात्मनः'

It is hoped that every Madhwa would do the meritorious duty of installing this idol in his house. He would thus encourage the S.M.S.O. Sabha to render more service to the Madhwasiddhanta. By doing so, he will certainly achieve all round welfare through the blessings of the great Gurus.

The Sabha is thankful to Sri Narayanacharya Mathad of Dharwad for help in correcting the proofs and to Sri Anandatirtha Panchamukhi for having printed the book with dedication, care and neatness.

The S.M.S.O. Sabha is greatly indebted to His Holiness Sri Satya Pramodatirth, the present illustrious Pontiff of Uttaradi Muth for having graced the book with his highly scholarly and relevant fore-ward.

**Vidyaratna Madhavacharya S. Katti,**
*Vice President,*
S. M. S O. Sabha,
Chiratanur.

Gokula Ashtami,
19-8-1984,
Dharwad-1.

## OTHER PUBLICATIONS

१) भेदपराण्येव खलु ब्रह्मसूत्राणि
श्री सत्यध्यानतीर्थानां अमरकृतिः

२) पद्यमाला श्री जयतीर्थ विरचितम्
With English Translation and Introduction by
Sri Madhawacharya S. Katti

३) महाभारत तात्पर्य निर्णयार्थ संग्रहः
श्री राघवेंद्रतीर्थ विरचितम्
With English Translation and Introduction by
Sri Madhawacharya S. Katti

४) आन्हिकमंजरी

ॐ

॥ श्रीदिग्विजयरामो विजयते ॥

## ॥ अद्वैतखण्डनपूर्वक चंद्रिकामंडनम् ॥



जयताज्जानकीजानिः कल्याणगुणवारिधिः ।
दुर्वादिमतविच्छित्तौ प्रेरयन्मन्मनः सदा ॥१॥

मायावादतमोव्याप्तिरंजसा येन वारिता ।
प्रकाशितं च तत्वं तं भजे मध्वदिवाकरम् ॥२॥

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम्।
लभंते मानुषा नूनं तान्जयादिगुरून्भजे ॥३॥

श्रीसत्यध्यानतीर्थार्यः रामसुब्बेन मायिना ।
यया धिया प्रतिज्ञातं चंद्रिकाचालनं मुधा ॥४॥

सा चंद्रिकाचालनधीरमुष्य शशांकसंचालनधीः सुतस्य ।
अङ्के शयानस्य यथा जनन्याः तथाविधेति प्रकटीकरोति ॥५॥

(चंद्रिकानुवादः) तत्र भामत्युक्तमधिकरणं "प्रत्यगात्मन एव ब्रह्मत्वात् तस्य चाहमितिप्रकाशमानत्वेनासंदिग्धत्वात् न विषयत्वं ॥ नाप्यविद्यानिवृत्तिः प्रयोजनं । उक्तरीत्या आत्मनि भासमानेऽपि तदनिवृत्तेः ॥ न च वाच्यं, अहंप्रत्ययः, स्थूलोऽहं कर्ता भोक्ता दुःखीति गृह्णाति, तद्विपरीतश्च वेदांतप्रतिपाद्यः संदिग्ध इति, विषयादिसिद्धिरिति । वेदांतानां अध्ययनविध्यापादितप्रयोजनवदर्थावबोधानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरितार्थत्वाद्वा । तथाच

वेदांतविचारो नारब्धव्य इति पूर्वपक्षः । सित्धांतस्तु वेदांतवाक्यैः ज्ञानानंदैकरसाद्वितीयोदासीनस्वभाव आत्मा उपक्रमादिभिः प्रतिपाद्यते ।। न च क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणि सन्ति युक्तमुपचारितार्थानीति वक्तुं ।। प्रत्यक्षं तु संभावितदोषं अपौरुषेयेण निर्दोषेणागमेन बाध्यते । तेन वेदांतवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसिद्धि"रिति ।।

तन्न । तथाहि । शुद्धो न भातीति कोऽर्थः । किमात्मस्वरूपे किञ्चिद्भाति किंचिन्न भातीति । किंवाऽऽत्मस्वरूपमेव न भातीति । यद्वा अनात्मापि भातीति। आद्येऽभासमानोंशः शरीरादिभ्यो भेदो वा, कर्तृत्वभोक्तृत्वाद्यभावो वा, ब्रह्मात्माभेदो वा, द्वितीयमात्राभावो वा । आत्मभिन्नः सत्यश्चेदपसिद्धांतः । अभावद्वैतं त्वन्यत्र निरस्तं । मिथ्याचेन्न तत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षांतर्भावः ।। तथाऽपि कल्पितेन भेदेनागृहीत इव भातीति चेन्न । तत्वतो गृह्यमाणेऽधिष्ठाने भेदकल्पनायाः अगृहीतत्वारोपस्यचायोगात् ।। न च मिथ्याभूतेनापि तेनोपलक्षित आत्मा शास्त्रवेद्यः, स च सत्य इति वाच्यं। स्वप्रकाशत्वेन नित्यसिद्धात्मावबोधनार्थमुपलक्षणोक्त्ययोगात्। उपलक्षण एव तात्पर्ये चाप्रामाण्यापातात् । अत एव न द्वितीयः । तस्य स्वप्रकाशस्याप्यविद्यावशादभाने अविद्यादेर्दुःखादेश्च प्रकाशो न स्यात् । तस्य चैतन्यप्रकाशाधीनप्रकाशत्वोपगमात् ।।

एतेन, स्वप्रकाशत्वात् स्फुरति चैतन्यं, अविद्यावृतत्वाच्चन स्फुरति। न च विरोधः । स्फुरणस्य तात्विकत्वात् अस्फुरणस्यातात्विकत्वात् । एवंच न कोऽपि दोषः। स्फुरत्वादज्ञानादि साधकत्वस्य अस्फुरत्वाद्विषयस्य च संभवादिति निरस्तं ।

स्फुरत्यस्फुरणारोपायोगस्योक्तत्वात् । न च स्वरूपचितः प्रकाशेपि तस्या अज्ञानाविरोधित्वात् विरोधिन्याश्च वृत्तेरभावेनाविद्यावृतत्वात् संदिग्धत्वमिति युक्तं । स्वरूपचितोऽज्ञानाविरोधित्वे तद्वेद्ये दुःखादावज्ञानप्रसंगात् । त्वन्मते अयं घट इत्याद्यपरोक्षवृत्तेरपि घटाद्यवच्छिन्नचिद्विषयत्वाच्च । श्रवणादिजनितसंस्कारसहितांतःकरणवृत्तिनाश्यत्वे च मिथ्यारूप्यादौ तददर्शनात् सत्ये भ्रमरादिध्याननिवर्त्यकीटत्वादौ च तद्दर्शनादज्ञानस्य सत्यत्वं स्यात् ॥ न तृतीयः । अनात्मनोऽधिकस्य भानेपि आत्मनोऽसंदिग्धत्वेनाविषयत्वतादवस्थ्यात् । अधिष्ठाने तत्वतः स्फुरत्यनात्मारोपायोगाच्च ॥

एतेन यथा षड्जाद्यो गांधर्वशास्त्राभ्यासात्प्रागपि स्फुरंतस्तद्रूपेणानुल्लिखिता न श्रोत्रेण व्यज्यंते । व्यज्यंते तु शास्त्रवासितेन तेन । एवं वेदांतवाक्यजन्यब्रह्मैक्याकारवासनावासितांतःकरणेन तद्भावाभिव्यक्तिर्नप्रागिति भामत्युक्तं निरस्तं । तत्र प्रागस्फुरतः पश्चाच्च स्फुरतः षड्जत्वादि जातिभेदस्यैव प्रकृते तस्याभावात् ॥ एतेनैव, तत्त्वमसीति वाक्यात् यद्यप्यात्मनो ब्रह्मत्वं ज्ञातं । तथापि वादिविप्रतिपत्त्या संशयात् तत्र जिज्ञासेति भामत्युक्तं निरस्तं । चिन्मात्रे धर्मिणि निश्चिते तन्मात्रैक्ये संशयायोगात् ॥ युक्तं चापौरुषेयस्याप्यागमस्य शङ्कितताल्पर्यभ्रमरूपदोषस्य यजमानः प्रस्तर इत्यादेरिव प्रत्यक्षविरोधेन प्रतीतार्थप्रच्यावनं । उक्ता च त्वयापि तत्त्वमसिवाक्ये प्रत्यक्षाविरोधाय लक्षणा॥ तस्मात्परमतेस्वरूपमात्रस्य स्वप्रकाशत्वेन नित्यसिद्धत्वात् अन्यस्य चाज्ञानकल्पितत्वेनाज्ञानविषयत्वायोगेनाज्ञानासंभवात्, अज्ञातो विषयः अज्ञाननिवृत्तिः फलं

अज्ञानी चाधिकारी न युक्त इति शास्त्रमनारंभणीयमेवेति भामतीमतं तावदयुक्तमिति ।।

(रामसुब्ब ग्रंथानुवादः) तन्न। शुद्ध इत्यस्य अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूप इत्यर्थकत्वेन तस्याहं प्रत्यये भानाभावेन त्वदुक्तविकल्पदूषणानां शुद्धशब्दार्थाबोधविलसितत्वादिति ।।

(खंडनं) तत्तुच्छं। 'शुद्धो न भातीति कोऽर्थः। किमात्मस्वरूपे किंचिद्भाति किंचिन्न भाती'ति प्रथमकल्पे अभासमानोंशः शरीरादिभ्यो भेदो वा कर्तृत्वभोक्तृत्वाद्यभावो वेति कृते अवांतरविकल्पे, यः देहादिभिन्नचिद्रूपः शुद्ध इति पक्षः। तस्मात् पक्षात् 'देहादीनां अविद्यातत्प्रयुक्तान्यतरत्वेन अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपः शुद्धः' इति त्वदीयपक्षस्याबहिर्भावेन तद्दूषणेन दूषितत्वात् ।। अद्वैत्यभिमतशुद्धपदार्थान् सम्यक्विज्ञायैव दूषितवतां शुद्धशब्दार्थानवबोधोक्तेरेवाशुद्धत्वाच्च ।।

(रा) 'स्वरूपचैतन्यस्याज्ञानाविरोधित्वे' इत्यादि चंद्रिकोक्तदोषपरिहारार्थं, 'तन्न। यस्य घटादेः न जानामीत्यनुभवः तद्विषयकमज्ञानं। सुखादेर्हि न जानामीत्यनुभवाभावात् तत्राज्ञानप्रसक्त्यभावात्। घटाकारवृत्त्या, घटावच्छिन्नस्य विशिष्टचैतन्यस्य विषयीकरणेऽपि शुद्धस्याविषयीकरणात् शुद्धाज्ञाननिवृत्त्यभावात्' इति यदुक्तं ।।

(खं) तत्तुच्छं। सुखं न जानामीत्यनुभवाभावादेः अस्मदुक्ततर्कांगसाकल्यसंपादकत्वेन तर्कबाधकतया त्वदीयवर्णनस्य तर्काङ्गाज्ञानमूलकत्वात्। तथाहि। तर्के हि आपाद्यस्यानिष्टत्वमंगं। अनिष्टत्वं च प्रामाणिकपरित्यागः, अप्रामाणिककल्पनं चेति द्विविधं। प्रकृते सुखं न जानामीत्यनुभवाभावोक्तेः सुखादिविषयकाज्ञानमप्रामाणिकमिति ज्ञापनद्वारा सुखादावज्ञानप्रसंग इत्यापादनस्य अनिष्टविषयत्वरूपांगसंपादकत्वं। एवं घटाकारवृत्त्या शुद्धाज्ञाननिवृत्त्यभावोक्तेः शुद्धाज्ञाननिवृत्त्यापाद-

नस्य अनिष्टविषयत्वरूपांगसंपादकत्वमेवेति ॥ घटावच्छिन्नचितः विषयीकरणे शुद्धचितोऽपि विषयीकृतत्वात्, शुद्धस्याविषयीकरणादित्युक्तेरयुक्तत्वात् । अन्यथा दंडी देवदत्त इतिज्ञानस्य देवदत्ताविषयकत्वप्राप्त्या तेन देवदत्तविषयकाज्ञानसंशयनिवृत्त्यभावापातात् ॥

"सर्वं प्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते ।
प्रपँचस्य प्रविलयः शब्देन प्रतिपाद्यते ॥"

इति शुद्धब्रह्मणः सर्वप्रत्ययविषयत्वस्य णद्वैतिभिरङ्गीकाराच्च ॥

(चं) एतेन, 'न प्रत्यक्ब्रह्मैक्यं विषयः। कर्तृत्वादेर्विरुद्धधर्मस्य सत्यत्वेनैक्यायोगात् । नापि तन्निवृत्तिः प्रयोजनं । ज्ञानस्याज्ञानमात्रनिवर्तकत्वेन सत्यस्य ज्ञानान्निवृत्त्ययोगादिति प्राप्ते सत्यं । कर्तृत्वादि प्रपंचस्य सत्यत्वे विषयादिर्न सिध्यतीति । प्रपंचस्तु मिथ्यैव । अत एव भाष्ये अध्यासवर्णनं' इति विवरणाभिप्रेतमधिकरणं निरस्तं । कर्तृत्वादिविशिष्टस्य संभावितदोषेणातत्वावेदकेन प्रत्यक्षानुमानादिना मिथ्याभेदे गृहीतेऽपि तात्त्विकाभेदे मानांतरविरोधाभावेन तत्त्वंपदमुख्यार्थत्वाय, तल्लक्षिते चिन्मात्रे भेदाप्रसक्त्या तत्त्वमसिवाक्यावैयर्थ्याय च, विशिष्टस्यैव निर्दोषया श्रुत्या तात्त्विकाभेदबोधनसंभवेन, विषयार्थमध्यासस्यावक्तव्यत्वात् ॥ न च विरुद्धधर्मस्य सदा सत्त्वे भेदस्तात्त्विकः स्यादिति वाच्यं । अस्याप्यनुमानस्य श्रुतिविरुद्धत्वेनातात्त्विकविषयत्वात् ॥ नापि प्रयोजनार्थं तदुक्तिः । सेत्वज्ञानाकार्यस्यापि पापस्य सेतुज्ञानान्निवृत्तेः । विस्तृतं चैतन्न्यायामृते । तस्मान्न विवरणमतमपि युक्तमिति ॥

(रा) तन्न "एकमेवाद्वितीयं" 'तद्धास्य विजज्ञौ" इत्युपक्रमोपसंहाराभ्यां अद्वितीयब्रह्मनिर्विशेषविषयाभ्यां, तन्मध्यपतितस्य निर्विशेष-

विषयत्वावगमेन तद्घटक 'तत्त्वमसि' इत्यादेरपि जीवत्व ब्रह्मत्वोपलक्षितचिन्मात्रे तात्पर्यावगमात् ।। विशिष्टयोरभेदे तत्त्वमसिवाक्यतात्पर्यस्यैवाभावात् । सेतुज्ञानस्य पापनाशं प्रति हेतुत्वेऽपि उपादानेन सह कार्यनिवृत्तिरूपबाधं प्रति अप्रयोजकत्वात् ।। बाधितस्य तु अध्यासवर्णनं। न तु नाशमात्रप्रतियोगिन इति विवरणाचार्याभिप्रायादिति ।।

(खं) तत्तुच्छं । "तम आसीत् । तमसागूहूलमग्रे" इति तमआदीनां सत्त्वश्रवणात् ।।

"जीवईशो विशुद्धाचित् भेदस्तस्यास्तयोर्द्वयोः ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ।।"

इत्यद्वैतिभिः अनादीनां जीवादीनामङ्गीकाराच्च । त्वत्कृते शांकरभाष्यगांभीर्यनिर्णयाख्ये ग्रंथे, "क्षरश्चाक्षर एव च" इति गीताश्लोकव्याख्यानपरभाष्ये 'न क्षरतीत्यक्षरः' इत्येतादृशैर्बहुभिः शांकरवाक्यैः मायायाः अविनाशित्वं शांकराभिमतमि'ति त्वदुक्त्यैव मायाया नित्यत्वसिद्धेश्च ।। "आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किंचनमिषत्' इति श्रुत्या ब्रह्मातिरिक्तव्यापारविशिष्टद्वितीयवस्तुनो निषेधेन व्यापाररहितद्वितीयवस्तुसद्भावस्यावगमात् । तथैव शंकरादिभिर्व्याख्यातत्वाच्च । अग्र इति, आसीदिति आत्मेति च पदैः काल सत्ता जगत्कर्तृत्वादिगुणानां प्रतिपादनात् । विद्यारण्यादिभिः 'कालादीनां प्रतिभासो भवति' इत्युक्तत्वाच्च ।। "नैवेह किंचनाग्र आसीत्। मृत्युनैवेदमावृतमासीत्" इति श्रुत्यापि अग्र इतिपदेन कालस्य आवृतमित्यनेनावरणीयवस्तुनः सत्वबोधनात् ।

शाङ्करभाष्ये "यदिहि किंचिदपि नासीद्येनाव्रियते यच्चाव्रियते तदा नावक्ष्यत् मृत्युनैवेदमावृतमासीत्" इति । न हि भवति 'गगनकुसुम छन्नो वंध्यापुत्रः' इति । ब्रवीति च मृत्युनैवेदमावृतमासीदिति । तस्माद्येनावृतं कारणेन यच्यावृतं कार्यं प्रागुत्पत्तेः तदुभयमासीत् । श्रुतेः

प्रामाण्यात् अनुमेयत्वाच्च" इत्यादिना आवरकाव्रीयमाणवस्तुद्वयसद्भाव-परतया व्याख्यानाच्च। अर्थान्तरासंभवाच्च। प्रलयकाले द्वितीय-वस्त्वभावस्यैवासिद्धेः। ब्रह्मणः अद्वितीयत्वस्यानुपपन्नत्वात्।

"एको गोत्रे" इति पाणिनिसूत्रव्याख्यानावसरे कथ्यते "एक शब्दोऽयं अन्यः प्रधानासहाय संख्या, प्राथम्य, समानवाची" इत्युक्तत्वेन "एकः" सुपर्णः" इति मंत्रव्याख्यावसरे, "एकः असहायः" इति विद्या-रण्योक्त्या च "एकमेवाद्वितीयं" इति श्रुतिगतस्य एकपदस्य प्रधानाद्यने-कार्थत्वसंभवात्, द्वितीयशब्दस्य 'असिद्वितीय इति असिसहायः' इति महाभाष्ये सहायपरतया व्याख्यानात्, "अस्य गोः द्वितीयोन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्विष्यते नाश्वः पुरुषो वा" इति शांकरभाष्ये महाभाष्ये च सजातीयद्वितीयवस्तुपरतया उक्तत्वाच्च श्रौताद्वितीयपदस्य सहकारिवस्तुरहितः सजातीय द्वितीय वस्तुरहित इत्याद्यर्थकत्वसंभवेन, 'एकमेवाद्वितीयं' इति श्रुतेः सामान्यतः द्वितीय वस्त्वभावपरत्वस्यानिर्ण-यात् तया ब्रह्मणः अद्वितीयत्वासिद्धेः॥

'एकमेवाद्वितीयं' इति वाक्यव्याख्यावसरे– 'एकमिति स्वकार्य-पतितं अन्यन्नास्तीत्येकमेवेत्युच्यते' इति ब्रह्मातिरिक्तब्रह्मकार्यभूत वस्त्व-भावबोधस्य अद्वितीयमिति, मृद्व्यतिरेकेण मृदोयथान्यत् घटाकारेण परिणमयितृ कुलालादिनिमित्तकारणं दृष्टं, तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वंतरं प्राप्तं निषिध्यते। अद्वितीयमिति इति सहकारिभूतद्वितीयवस्त्वभावबोधस्य च एकाद्वितीयपदाभ्यां जायमान-तया शंकराभ्युपगतत्वेन द्वितीयवस्तुसामान्याभावस्य तद्व्याख्यानरी-त्याप्यसिद्धेश्च॥

'सदेव सौम्येदमग्र आसीत्' इति पूर्ववाक्ये अग्र इति पदेन कालस्य बोधनात्, अद्वितीयमित्यादिपदेन त्वदुक्तरीत्यैव द्वितीयवस्त्वभावसत्त्व-बोधनात् सामान्यतःद्वितीयवस्त्वभावबोधनासंभवाच्च॥ एकमिति प्राधान्यादिधर्माणां, आसीदिति सत्तारूपविशेषस्य, ऐक्षतेति ईक्षण-

क्रियायाः असृजतेति सर्जनक्रियायाः अनुप्रविश्येति प्रवेशस्य चोक्त्या निर्विशेषब्रह्मपरत्वस्याप्यसंभवात् ॥ "तद्धास्य विजज्ञौ" इत्युपसंहार-वाक्यस्यापि 'तत्––ब्रह्म विजज्ञौ––ज्ञातवान्' इति ब्रह्मविषयकज्ञानमात्र-प्रतिपादकत्वेन ब्रह्मणोऽद्वितीयत्वनिर्विशेषत्वाप्रतिपादकत्वात् प्रत्युतवि-जज्ञाविति ज्ञानकर्मत्वरूपविशेषस्य ज्ञातृज्ञेयभावेन जीवब्रह्मभेदस्य च तत्पदेन सर्वज्ञत्वादि रूपविशेषस्य च प्रतिपादितत्वेन ब्रह्मणोऽद्वितीयत्व–निर्विशेषत्वयोः प्रतिकूलत्वाच्च ॥

'एकामेवाद्वितीयं' 'तद्धास्य विजज्ञौ' इत्युपक्रमोपसंहारयोरेव अद्वि-तीयब्रह्मनिर्विशेषविषयकत्वासंभवेन तत्प्रतिकूलत्वेन च तन्मध्यपतितस्य निर्विशेषविषयत्वावगमस्य दूरापास्तत्वात् ॥ "स आत्मातत्त्वमसि" इतिवाक्यस्य जीवत्वब्रह्मत्वोपलक्षितचिन्मात्रे तात्पर्यासिद्धेः । जीवब्र-ह्मैक्यप्रमाणभंगे अस्मदुक्तरीत्या जीवस्य ब्रह्माधारत्वब्रह्मजन्यत्वादौ जीवब्रह्मणोर्भेदे च तात्पर्यसिद्धेश्च ॥ भेदग्राहकप्रत्यक्षस्यातत्वावेद-कत्वेन तेन मिथ्याभेदे गृहीतेऽपि तात्त्विकाभेदे मानांतरविरोधाभावेन विशिष्टयोरभेदेंगीक्रियमाणे श्रुतेर्मुख्यार्थत्वप्राप्तेः चिन्मात्रे भेदस्याप्रस-क्त्या चिन्मात्रयोरभेदकथने उक्तश्रुतेः अप्रसक्तनिषेधकत्वप्राप्तेश्चनिर्दो-षया श्रुत्या विशिष्ठयोरेव जीवेश्वरयोः तात्त्विकाभेदबोधनसंभवेन अध्यासवर्णनमंतरापि ऐक्यरूपविषयसित्द्या 'यतः कर्तृत्वादेर्मिथ्यात्वे विषयादिसिद्धिः अत एव भाष्ये अध्यासवर्णनं इति विवरणाभिप्रायोऽ-संगत इति चन्द्रिकोक्तदूषणस्य विशिश्ठयोरभेदे तात्पर्याभावोक्त्याऽनि-वारणात् ॥

यदुक्तम् सेतुज्ञानस्य इत्यादि तदपि तव विवरणकारस्य च श्रुति सूत्रार्थाज्ञानकल्पकमेव ॥ "तमेवं विद्वानमृत इह भवति" "तरति शोकमात्मवित्" इत्यादि श्रुतौ "अथातोब्रह्मजिज्ञासा" इति सूत्रे च ब्रह्मज्ञानेन बंधसंबंधवियोगरूपमोक्षस्य प्रतिपादनेऽपि उपा-दानेन सह कार्यनिवृत्तिरूपबाधस्याप्रतिपादनात् अप्रामाणिकनिवृत्ति-

सिद्ध्यर्थं अध्यासवर्णनोक्तेरयुक्तत्वात् ॥ दाहात् उपादानकारणी· भूततंतुनासह पटरूपकार्यनाशदर्शनेन ज्ञानादपि उपादानेन सह सत्य-भूतकार्यस्यापि निवृत्तौ बाधकाभावेन तदर्थं अध्यासवर्णनोक्तेरसंग-तत्वाच्च ॥ अद्वैतिनां मते ब्रह्मणो निर्विशेषत्वेन अद्वितीयत्वेन च लोके अध्यासकारणतया दृष्टानां सामान्यधर्मविशेषधर्मारोप्यमाण सादृश्यतद्ज्ञानाज्ञानतदाश्रयाणामसंभवेन अध्यासायोगाच्च ॥ *विस्त-रस्तु अद्वैतखण्डनभागे द्रष्टव्यः ॥

(रा. ८१.) यदुक्तं विवरणमतानुवादावसरे प्रपञ्चस्तु मिथ्यैव। अत एव भाष्ये अध्यासवर्णनं। मिथ्यात्वंतु आरंभणा-धिकरणे स्फुटी भविष्यति' इति ॥

(खं.) तत्तुच्छं। अद्वैतिनां मते अध्यासस्यासंभवेन प्रपञ्चस्य मिथ्यात्वासंभवात् ॥ "नेह नानास्ति किञ्चन" 'अतोऽन्यदार्तं' इत्यादि श्रुतीनां अन्यार्थत्वेन विश्वं मिथ्या दृश्यत्वात् इत्याद्यनुमानानां दुष्टत्वेन प्रपञ्चमिथ्यात्वविषये प्रमाणाभावात् ॥ प्रत्युत प्रपञ्चसत्यत्वग्राहकाणां †"यथा वृक्षोवनस्पतिः तथैव पुरुषोऽमृषा" "विश्वं सत्यं" "याथातथ्यतोऽ-र्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" "तदेतत्सत्यं" इत्यादि श्रुतीनां 'घटः सन् पटः सन्' इत्यादि प्रत्यक्षाणां विश्वं सत्यं अर्थक्रियाकारि-त्वात् इत्याद्यनुमानानां च सत्वात् ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
राजन् कार्यस्य मिथ्यात्वं नैर्गुण्यं परमात्मनः ॥
"मायावादमसच्छास्त्रं"

इत्यादिषु जगन्मिथ्यात्वनिंदाश्रवणाच्च ॥ आरंभणाधिकरणस्य

---

* अध्यासवादभंगे, † बृहदारण्योपनिषच्छांकरभाष्य (३०८-१) 'अमृषा सत्यं' इति व्याख्यातम् ॥

जगन्मिथ्यात्वाप्रतिपादकत्वात् ॥ यथा आरंभणाधिकरणस्य न मिथ्यात्वप्रतिपादकत्वं तथोपपादितमद्वैतखण्डनभागे ॥१॥

( चं ३१. ) अत्र वेदार्थनिर्णायकन्यायग्रथनात्मकमिदं शास्त्रं अनारंभणीयमुतारंभणीयमिति चिंता । तदर्थं न्यायानुसन्धानरूपविचारो न कर्तव्य उत कर्तव्य इति। तदर्थं विचारविधेः विषयादिकं न संभवत्युत संभवतीति ॥ तदर्थं विषयीभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव उत तदन्यदिति ॥ यदि ब्रह्म प्रत्यगर्थ एव तदा तस्य निश्चितत्वेन विषयाद्यसंभवात् शास्त्रमनारंभणीयमिति पूर्वपक्षे फलफलिभावः । यदि तु ब्रह्म प्रत्यगर्थादन्यत् तदा प्रत्यगर्थस्य जीवस्य निश्चितत्वेऽपि ब्रह्मणो विषयत्वसंभवाच्छास्त्रमारंभणीयमिति सिद्धांते फलफलिभावः पूर्वपक्षस्तु ॥

(पूर्वपक्षसंग्रहः) जीवान्यब्रह्मणोऽभावात्तस्य च स्वप्रभत्वतः । तद्ज्ञानान्मुक्त्यभावाच्च जिज्ञासा नावकल्पते इति न शास्त्रमारंभणीयं न्यायानुसंधानात्मकविचाररूपजिज्ञासाया एवाकर्तव्यत्वात् । तदकर्तव्यत्वंच निर्विषयत्वादिहेतुभ्यः ॥ तत्र तावद्विषयत्वेनाभिमतं ब्रह्म न जीवचैतन्याद्भिन्नं मानाभावात् । कर्मकांडस्य कर्मपरत्वात् । वेदांतश्चोपक्रमादिभिः अद्वैतिरीत्या अखंडप्रत्यगात्ममात्रप्रत्यायनात् । तस्य चाहमिति स्वप्रकाशतया भासमानत्वात् । अन्यस्य च सत्यस्याभावात् ॥ नापि जिज्ञासायाः प्रयोजनमस्ति । प्रत्यग्रूपे ब्रह्मणि अहमिति ज्ञायमानेऽपि मोक्षानुपलंभात् ॥ विषयाद्यभावादेव नाधिकारी ॥ नापि संबंध अतः तद्विजिज्ञासस्व इत्यादि वेदांता न विचारविधायकाः । अप्रमाण चेति ॥ एवं पूर्वपक्षे प्राप्ते सिद्धांतितं भगवता सूत्रकारेण ॥

ॐ अथाऽतोब्रह्मजिज्ञासा ॐ ॥

१. जगन्मिथ्यात्वनिराकरणप्रकरणे,

इति सिद्धांतस्तु--

जिज्ञास्यं ब्रह्मशब्देन गुणपूर्त्यभिधायिना ।
अपूर्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते ॥

जिज्ञास्यमेव ब्रह्म । "तद्विजिज्ञासस्व तद्ब्रह्म" इत्यादि श्रुतेः श्रौतब्रह्मशब्दोक्त्या गुणपूर्त्या अल्पगुणत्वेनानुभूयमानाज्जीवाद्भिन्नत्वेन संदिग्धत्वाच्च ॥

निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः ।
गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यते ॥

न केवलं "अथ कस्मादुच्यते ब्रह्मेति बृहंतो ह्यस्मिन्गुणाः" इति श्रुत्या गुणपूर्तिर्ब्रह्मशद्बार्थः । किंतु ब्रह्मशब्दावयवशक्त्याऽपि । अपरिछेदे हि तस्यावयवशक्तिः परस्यापि संमता। गुणापरिछेदोऽपि चापरिछेद एव। न च संकोचे हेतुरस्ति। अन्यथा कालमात्रपरिच्छेदस्तदर्थ.स्यात् ॥ तथाच ब्रह्मणो जीवाद्भिन्नत्वेन अहमिति ज्ञानस्य ब्रह्माविषयकतया ब्रह्मज्ञानत्वाभावेन तेन मोक्षानुपलंभेऽपि ब्रह्मज्ञानमोक्षयोः 'तमेवंविद्वानमृत इह भवति' इत्यादि श्रुतिसिद्धकार्यकारणभावस्य निर्बाधत्वेन ब्रह्मज्ञानेन मोक्षसंभवात् विषयप्रयोजनयोः सतोः प्रयोजनेच्छया विषयजिज्ञासोरेवाधिकारित्वात् यथायोग्यं संबन्धस्य च विद्यमानत्वात् ब्रह्म जिज्ञास्यं । तद्विजिज्ञासस्व इत्यादि विचारविधायका वेदान्ताः प्रमाणमिति ॥

रा (८२.) तन्न । मध्वमते पूर्वपक्षो नोपपन्नः । तत्र हि वेदान्तानां जीवब्रह्मैक्यपरत्वं मिथ्यावाद्युक्तरीत्या निश्चित्य शास्त्रानारंभ उपपादितः ॥

१. चं ४२.

तत्राद्वैतस्य *सिद्धत्वे न वेदांतस्य गोचरः ।
सिद्धोऽपि यदिवेदांतगोचरस्तर्हि गोचरः ॥
विचारस्य कथं न स्यादद्वैते न च सिद्धता ।
नितांतन्तु विचारस्य गोचर स्याद्यथातथम् ॥
अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदा ।
निष्प्रत्यूहैर्भेदवाक्यै स्तदाभेदः सुनिष्ठितः ॥ इति ॥

(खं) तत्तुच्छं। अस्मदीयपूर्वपक्षे ब्रम्हण एव विचाराविषयत्व-वेदांतविषयत्वयोः कथितत्वेन अद्वैतस्य विचाराविषयत्ववेदांतविषयत्व-योरनुक्त्वा अद्वैतस्य सिद्धत्वासिद्धत्वपक्षयोः दूषणोक्तेः अस्मदीय पूर्व-पक्षाज्ञानविजृंभितत्वात् ॥ किंच एतदधिकरणपूर्वपक्षस्य वेदांताप्रामाण्य-पर्यन्ततया वेदांतानां पूर्वपक्षिणा अप्रामाण्यप्रयोजकसिद्धजीवब्रह्मैक्य-विषयकत्वांगीकारसंभवेऽपि असंदिग्धे न्यायानवतारेण न्यायानुसंधाना-त्मकविचारस्य सिद्धजीवब्रह्मैक्यविषयत्वांगीकारासंभवेन सिद्धोऽपि यदि वेदांतगोचरस्तर्हि गोचरः । विचारस्य कथं न स्यात् इत्याक्षेपस्यात्यं-तमसंगतत्वात् ॥ एतेन सिद्धब्रह्मणः वेदांतविषयत्वे विचाराविषयत्वा-सम्भवशङ्कापि परास्ता ॥ 'अद्वैतवाक्यनिचयः कर्म शेषो भवेत्तदा । निष्प्रत्यूहैर्भेदवाक्यैस्तदाभेदः सुनिष्ठितः ॥ इति वाक्यं तु स्वप्रतिज्ञात-पूर्वपक्षानुपपन्नत्वासाधकत्वात् असंबद्धप्रलपनरूपमेवेति ।

(रा. ८२.) सिद्धांतोऽप्यनुपपन्नः । सर्वेषां वेदांतवाक्यानां निर्विशेष चैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय 'तद्विजिज्ञासस्वे'ति विचारविधिवाक्यगतो ब्रह्मशब्दः मध्वमते स्थापितः। नचैको ब्रह्मशब्दः सर्वानपि वेदांतान् उपक्रमादिदृढन्यायैः निर्णीताद्वैत: तात्पर्यात् प्रच्यावयितुं शक्तः ॥ 'विप्रतिषेधे भूयसां स्यात् स्वधर्मत्वं' इति प्रसङ्गलक्षणन्यायात् अद्वैते उपक्रमाद्यभाव एव सिद्धांतहेतुर्वाच्यः । तमनुक्त्वा ब्रह्मशब्दस्य हेतुत्वकथनमयुक्तमिति ॥

* तत्पुस्तके 'स्यासिद्धत्वे' इतिस्यवर्णः दीर्घो मुद्रितोऽस्ति। स चात्यंतासंगत इति स्यवर्णो ह्रस्वोऽनूदितः ॥

(खं.) तत्तुच्छं अल्पगुणत्वपूर्णगुणत्वरूपविरुद्धधर्माधिकरणत्वरूपयुक्त्या जीवब्रह्मणोर्भेदस्य साधितत्वेन अद्वैते उपक्रमादिषु बलिष्ठतमयुक्तिविरोधस्य अर्थात् तदभावस्य च सिद्धांतिभिः प्रदर्शितत्वेन अद्वैते उपक्रमाद्यभावरूपहेत्वकथनोक्तेः चन्द्रिकावाक्यतात्पर्याज्ञानविजृंभितत्वात् उक्तं हि चन्द्रिकायां ॥

जिज्ञास्यब्रह्मशब्देन गुणपूर्त्यभिधायिना ।
अपूर्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते ॥ इति,

अखण्डे ब्रह्मणि अद्वैते वा तात्पर्यप्रत्यायकतया अद्वैतिप्रदर्शितोपक्रमादेश्च तत्तात्पर्यव्यवस्थापकत्वाभावस्य प्रत्युत तत्प्रतिकूलतायाः जीवब्रह्मैक्यप्रमाणभंगे उपपादितत्वेन अखण्डे ब्रह्मणि अद्वैते वा वेदान्तानां तात्पर्यस्य अनिर्णयात् एकोऽपि निरवकाशः ब्रह्मशब्दः अद्वैत्युत्पादितभ्रम विषयात् तात्पर्यात् वेदांतान् प्रच्यावयितुं समर्थः किमु ब्रह्मशब्देन उपलक्षणतया सूत्रकृद्भिर्गृहीतानि प्रत्यक्षानुमानकर्मकांडसृष्ठ्यादि प्रतिपादक भेदग्राहकाणि प्रमाणानि । स्वीकृतञ्च कर्मकांडानां सृष्ठ्यादिप्रतिपादकोपनिषदां प्रत्यक्षानुमानानाञ्च भेदग्राहकत्वं त्वद्भाष्यकर्त्रा[१] "शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादि प्रबंधैः ॥ तत्रैव व्याससूत्राण्यकुटिलविधयाभान्ति तात्पर्यवन्ति प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्करार्यैः स चापि इति विष्णुतत्वरहस्यविवरणे त्वया सर्वेषां प्रमाणानां भेदतात्पर्यकत्वं तथा शाङ्कराभिप्रेतत्वञ्च उपपादितं च निपुणतरं भेदसाधकत्वं तस्मिन्नेव ग्रन्थे । एवञ्च अभेदग्राहकप्रमाणस्यैव त्वन्मतरीत्याऽभावात् इतराद्वैतिमतरीत्या अभेदप्रतिपादकतयाङ्गीकृतानां तत्वमस्यादि पञ्चषाणां भेदप्रतिपादकवाक्यापेक्षया अल्पत्वात् विप्रतिषेधे भूयसां स्याद् सधर्मत्वं इति प्रसंगलक्षणन्यायः त्वत्प्रतिकूलएवेति ॥

(चं. २८.) एतेन प्रथमसूत्रस्य समन्वयाद्यशेषविचार-

---

१ बृहदारण्ये २०, १. २०: मे मंत्रव्याख्याने.

हेतुत्वात् ॥ शास्त्रप्रथमाध्यायप्रथमपादसङ्गतय इति कल्पतरूक्तं निरस्तं द्वितीयाध्यायतो व्यावृत्तस्य शास्त्रसङ्गत्यतिरिक्तस्य प्रथमाध्यायादिना सङ्गतिविशेषस्यानुक्तत्वेनाध्यायपादपीठत्वमात्रस्य न्याय्यत्वादिति ॥

(रा. ७४.) तत्र "प्रथमाध्यायवत् द्वितीयाध्यायादिसंगतत्वादस्याधिकरणस्य द्वितीयाध्याये संघटनापत्तिः" इति भवदभिप्रायो वक्तव्यः। सचासङ्गतः। संगतेः साधारणत्वेऽपि प्रथमातिक्रमे कारणाभावात् प्रथमाध्याय एव संगत्या एतदधिकरणसंघटनस्य युक्तत्वादिति॥

(खं.) तत्तुच्छं। चंद्रिकानभिमतं वाक्यादप्रतीयमानं चाभिप्रायं कल्पयित्वा दूषणोक्तेः छलोत्तरत्वात्। तथाहि चंद्रिकाभिप्रायः। समन्वयाद्यशेषविचारहेतुत्वात् शास्त्र प्रथमाध्यायप्रथमपादसंगतयः इति प्रकृतचतुरध्यायात्मकशास्त्रं प्रति अस्य सूत्रस्य प्रयोजकत्वोक्त्या उपोद्घात संगतेरेव भवता उक्तप्रायत्वेन शास्त्रारंभे सिद्धे प्रथमाध्यायो मास्तु प्रथमपादो मास्तु इति विशेषाशङ्कायाः प्रथमसूत्रेणानिवृत्तेः। शास्त्रत्वेन रूपेण प्रथमाध्यावादोनामपि संगत्युक्तौ द्वितीयतृतीयसूत्राणां शास्त्रत्वेन रूपेण संगतेर्विद्यमानत्वात् शास्त्रप्रथमाध्यायप्रथमपादद्वितीयतृतीयसूत्रसंगतयः इत्यपि वक्तव्यत्वापातात् इति। ननु द्वितीयाध्याये संघटानापत्तिरिति। उपोद्घातसंगतेः संघटनां प्रत्यप्रयोजकत्वात् ॥

(चं. २८.) एतेनैव "श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदांतवाक्यानामपि ब्रह्मणि समन्वयस्य च निमित्तत्वादाद्यसूत्रं समन्वयेन संगतं" इति विवरणोक्तं निरस्तं। तद्वाक्यस्य स्वार्थे समन्वयप्रतिपादनमात्रेण समन्वयाध्यायसंगतौ तृतीयाध्यायादेरपि समन्वयसंगतिप्रसंगात्। विचारकर्तव्यताप्रतिपादनेन ब्रह्मणि समन्वयनिमित्तत्वस्यैवा-

विरोधादिनिमित्तत्वस्यापि सत्वेन द्वितीयादितो व्यावृत्तस्य प्रथमेन संगतिविशेषस्यासिद्धेश्च ॥ पादसंगत्यनुक्तेश्चेति ॥

(रा. ८४.) तन्न । द्वितीयाध्यायादेः ब्रह्मणि वेदांतसमन्वहेतुभूतसमन्वय परत्वाभावेन तदीयाधिकरणानां समन्वयाध्यायसंगतत्वाभावात् । जिज्ञासाधिकरणस्य येन समन्वयेन द्वारभूतेन अविरोधहेतुत्वं तत्रैव संगतत्वेन अविरोधाध्यायसंगतत्वाभावात् । उपोद्धातरूपस्याधिकरणस्य स्पष्टब्रह्मलिंगवाक्यविचाररूपत्वस्यातिस्फुटत्वात् प्रथमपादसंगत्यनुक्तिरित्यलमिति ॥

(खं.) तत्तुच्छं । वाक्यप्रतिपाद्येऽर्थे भासमानबाधकपरिहारेण तादृशार्थपरत्वसमर्थनं हि श्रोतव्यादिवाक्यानां स्वार्थे समन्वयः । तस्य चाद्यसूत्रे क्रियमाणत्वात् तत्सूत्रं यथा समन्वयाध्यायसंगतं तथा 'आत्मन आकाशः संभूतः इत्यादि वाक्यानामपि तत्प्रतिपाद्येऽर्थे बाधकपरिहारेण स्वार्थपरत्वसमर्थनरूपसमन्वयस्य द्वितीयाध्यायीयाधिकरणैः क्रियमाणतया विरोधनिरासद्वारा ब्रह्मणि वेदांतसमन्वयहेतुसमन्वयपरत्वेन तेषामधिकरणानामपि समन्वयाध्यायसंगत्यापत्तेरवारणात् । स्वार्थे समन्वयस्य ब्रह्मणि वेदांतसमन्वयं प्रतीव अविरोधं प्रत्यपि हेतुत्वेन समन्वयपरे अध्याये संगतिः न त्वविरोधपरे अध्याये संगतिरित्यस्यार्धजरतीयन्यायेनानुपपत्तेः ॥ श्रोतव्यादिवाक्यानां स्वार्थे समन्वयद्वारा विचार्यमाणवेदांतवाक्यानां ब्रह्मणि समन्वयहेतुत्वोक्त्या अत्र ब्रह्मणि पदानां समन्वयाप्रतिपादनस्य भवता अंगीकृतत्वेन समन्वेतव्य पदस्यैवाभावेन श्रोतव्यादिवाक्यानां आनंदमयाधिकरणे भवता परिछिक्रयमाणेन जडजीवमात्रधर्मतया झटिति प्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वरूपस्पष्टत्वेनोपेतब्रह्मलिंगवाक्यरूपत्वस्यैवाभावेन स्पष्टब्रह्मलिंगवाक्यविचाररूपत्वस्यातिस्फुटत्वादित्युक्तेः अज्ञान मूलत्वाच्च ॥

(चं ५९.) अत्र परेषां भाष्यं "तत्राथशब्द आनंतर्यार्थः

परिगृह्यते । नाधिकारार्थः । ब्रह्मजिज्ञासाया अनधिकार्यत्वात्" इति । तन्न । इच्छाया आरभ्यत्वासंभवेऽपि विवरणरीत्या जिज्ञासाशब्दस्य विचारलक्षकत्वेन तस्यारभ्यत्वसंभवादिति ॥

(रा. ८५.) तन्न । लक्ष्यार्थस्यारभ्यत्वेऽपि शक्यार्थेनाद्यैर्वाचार्यैरनारभ्यत्वोक्तेरिति ॥

(खं.) तत्तुच्छं । लक्षणया वा शक्त्या वा पदतात्पर्यविषयीभूत एव पदार्थांतरान्वययोग्यतायोग्यते ऽित्यर्थे । नतु तात्पर्याविषयभूते शक्य एवार्थे पदार्थांतरान्वययोग्यता विचारणीया । अन्यथा गंगायां घोष इति वाक्येऽपि घोषपदार्थभूतायाः पल्याः, तात्पर्याविषयीभूते गंगापदशक्ये प्रवाहे अन्वययोग्यताभावात् घोषपदार्थता न स्यात् । तथा च प्रकृते विवरणरीत्या जिज्ञासापदलक्ष्ये विचारे आरभ्यत्वान्वययोग्यतायाः संभवात् ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति शांकरभाष्यस्य विवरणव्याख्यानरीत्या अयुक्तताया अपरिहारात् ॥

(चं. ६४.) अन्येषां भाष्येतु– "मंगळस्य च वाक्यार्थे समन्वयाभावात्" इत्युक्तं । तन्न । अपदार्थत्वहेतौ समन्वयाभावे भामत्यां "पदार्थ एवहि वाक्यार्थे समन्वीयते । स च वाच्यो लक्ष्यो वा । न चेह मंगलमथशब्दस्य वाच्यं लक्ष्यं वा" इत्युक्तस्यापदार्थत्वस्य हेतुत्वेनान्योन्याश्रयापातादिति ॥

(रा. ८५) तन्न । वाक्यार्थानन्वितस्यापि घट इत्येकपदमात्रप्रयोज्यस्मृतिविषयस्य घटरूपार्थस्य पदार्थत्वसंप्रतिपत्त्या अन्योन्याश्रयासंभवादिति ॥

(खं.) तत्तुच्छं । नहि चंद्रिकाकृतां वाक्यार्थानन्वितस्य पदार्थत्वमेव नास्तीत्यभिप्रायः । किंतु 'मंगळस्य च वाक्यार्थे समन्वायाभावादिति' शांकरभाष्येण 'मंगलस्य वाक्यार्थे समन्वयाभावात् पदार्थ

एवहि वाक्यार्थे समन्वीयते स च वाच्यो लक्ष्योवा न चेह मंगलं अथशब्द-वाच्यं लक्ष्यं वा । किंतु मृदंगशंखध्वनिवत् अथ शब्दश्रवणमात्रकार्यं । न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शब्दव्यवहारे दृष्ट इत्यर्थ'' इति भामत्या च ''मंगळं अथशब्दार्थो न भवति वाक्यार्थसमन्वयाभावात् ।, ''मंगलं वाक्यार्थे समन्वया भाववत् अथशब्दवाच्यलक्ष्यान्यतरत्वाभावात् इत्यनुमाने सूचिते भवतः । तत्र अथशब्दवाच्यलक्ष्यान्यतरत्वाभावरूप-हेतुसिद्धौ वाक्यार्थसमन्वयाभावरूपहेतुसिद्धिः वाक्यार्थे समन्वयाभावरूप-हेतुसिद्धौ अथशब्दार्थत्वाभावरूपहेतुसिद्धिरिति परस्परज्ञप्त्यधीनज्ञप्ति-कत्वेन अन्योन्याश्रय इति ॥ एतादृशान्योन्याश्रयस्य वाक्यार्थानन्वि-तस्य घटरूपार्थस्य पदार्थत्वसंप्रतिपत्तिकथनमात्रेणापरिहारात् । वाक्यार्थानन्वितस्यापि घट इत्येकपदमात्रप्रयोज्यस्मृतिविषयस्य घट-रूपार्थस्य पदार्थत्वसंप्रतिपत्त्येतिवदता त्वयैव वाक्यार्थसमन्वयाभाव पदार्थत्वाभावयोः घट एव व्यभिचारस्य दर्शितत्वेन समन्वयाभावरूप हेतुनाऽपदार्थत्वं साधयतो भाष्यकारस्याकौशल्यस्यापत्तेश्च ॥

(चं ६०) नापि ''नतावज्जिज्ञासायां मंगळं कर्त्रादि-भावेन वैय्यधिकरण्येनान्वेति कर्त्रादिभावे मानाभावात् कर्त्रा-द्यंतरभावाच्च । नापि सामानाधिकरण्येन जिज्ञासामंगळ-मित्यर्थवादत्व प्रसंगा'' दिति विवरणोक्तो हेतुः सधूमो गिरिः साग्निक इतिवत् ईक्षतेर्नाशब्दमित्यत्र त्वत्पक्षेऽशब्दमितिवच्च मंगळत्वात्कर्तव्येति हेतुत्वेनान्वयोपपत्तिरिति ॥

(रा. ८६) तन्न जिज्ञासाया मंगळकरत्वेऽपि मंगळत्वाभावेन तस्य तत्र हेतुत्वेनान्वयासंभवात् । मंगळकर एवाथशब्दार्थ इति चेन्न लक्षणापत्तेरिति ॥

(खं) तत्तुच्छं विवरणकारेणैव जिज्ञासामंगळमित्यन्वये अर्थवा-दत्वप्रसंगादिति वदता जिज्ञासाया मंगळरूपत्वमंगीकृतं । शांकरसूत्र-

भाष्यव्याख्यात्रा आनंदगिरिणाऽपि 'नच ब्रह्मजिज्ञासा मंगळमितिसामानाधिकरण्यं प्रशंसात्वेन सूत्रस्यार्थवादत्वापत्तेः तन्मांगल्यस्य च प्रसिद्धत्वा" दिति स्पष्टं जिज्ञासाया मंगळरूपत्वमंगीकृतमिति ॥ जिज्ञासायाः मंगळकरत्वेऽपि मंगळत्वाभावेनेत्युक्तेः विवरणादिस्वीयग्रन्थानवलोकनिबन्धनत्वात् तथाच मंगळस्य वाक्यार्थे समन्वयाभावादिति शांकरभाष्यं विवरणरीत्या अयुक्तमेवेति चंद्रिकाकृदुक्तदूषणं वज्रलेपायितमेवेति ॥

(चं ६५) **पूर्वप्रकृतापेक्षायाश्च फलतआनंतर्याव्यतिरेकात् इति परेषां भाष्यं तस्य भामत्यनुसारेणाथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वाशंकानिरासायानंतर्यार्थं इव पूर्वप्रकृतापेक्षार्थत्वेऽपि जिज्ञासाहेतुभूतस्य पूर्वप्रकृतस्य लाभात् फलाभेदाच्चार्थं आनंतर्यार्थत्वाग्रहोऽस्माकमिति यद्यर्थः तर्हि भाष्ये आनंतर्यार्थ इत्युक्त्ययुक्तिः। सूत्रे कल्पांतरानुपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमशक्यशंकंच । किंच किं नित्यः शब्दोऽथानित्य इत्यादि कल्पांतरोपन्यासेऽपि सामानाधिकारण्यार्थमनुषक्तस्य धर्मिणोऽनित्य इत्यत्रापेक्षायामपि नासावथशब्दार्थः अन्यथा उतानित्य इत्यादावुतादेरपि पूर्वप्रकृतापेक्षार्थत्वं स्यादिति ।**

(रा. ८६) तन्न आनंतर्यार्थं इति व्याख्यानपदस्य पूर्वप्रकृतापेक्षार्थ इति व्याख्यानपदापेक्षया अल्पाक्षरत्वलाघवात् आनंतर्यार्थः परिगृह्यते इत्युक्तेः सुसंगतत्वात् इति ॥

(खं) तत्तुच्छं "कल्पांतरोपन्यासे पूर्वप्रकृतापेक्षा नचेह कल्पांतरोपन्यास" इति भामत्यां पूर्वप्रकृतापेक्षार्थत्वस्य सयुक्तिकं निरासात् पूर्वप्रकृतापेक्षार्थत्वमंगीकृत्य पूर्वप्रकृतापेक्षार्थं इति व्याख्यानपदापेक्षयाऽल्पाक्षरत्वलाघवात् इति कथनस्य भामत्यनवलोकननिबंधनत्वात्भामतीग्रन्थमनवलोक्य तद्व्यवस्थापनाय प्रवृत्तस्य साहसमुपहासास्पदमिति ॥

किंच पूर्वप्रकृतापेक्षार्थानन्तर्यार्थयोरविशेषेऽपि स्वोक्तौ शब्दलाघवगौरवमात्रस्य भाष्यकृतोऽभिप्रेतत्वे 'पूर्वप्रकृतापेक्षायाश्च फलत आनंतर्याव्यतिरेकात्' इति अथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वांगीकारसूचकाग्रिमगुरुभूतवाक्यापेक्षया अथशब्दः आनंतर्यार्थः परिगृह्यत इत्यत्रैव आनंतर्यार्थः पूर्वप्रकृतापेक्षार्थो वा इति लघुभूतवाक्यविन्यासस्याकरणेनाकुशलत्वापत्तेश्च । चंद्रिकोक्तानां दूषणांतराणामपरिहाराच्च ।।

(रा. ८६) सूत्रे कल्पांतरानुपन्यासेनेत्युक्तिरसंगता नित्यानित्यवस्तुविवेकादिमुमुक्षुत्वांतस्य तद्यथेह कर्मचितः इत्यादि वेदसिद्धस्य ब्रह्मजिज्ञासापदघटकीभूत परब्रह्मार्थकब्रह्मशब्देन वेदस्तत्वं तपोब्रह्म इति रीत्या उपस्थापित वेदस्यापि परामर्शिना सौत्रातःशब्देन तद्यथा इत्यादि विवेकादिबोधक वेदेन पूर्वमुपस्थापितत्वात् अथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वोपपत्तेः भामतीकल्पतरूक्तातःशब्दार्थरीत्या सिद्धत्वादिति ।।

(खं.) तत्तुच्छं भामत्यामेवकल्पांतरोपन्यासे पूर्वप्रकृतापेक्ष नचेह कल्पांतरोपन्यास इति पारिशेष्यादनंतर्यार्थ एवेति युक्तमिति स्पष्टं कल्पांतरोपन्यासाभावस्योक्तत्वेन अथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वोपपत्तेर्भामतीकल्पतरूक्तातः शब्दार्थरीत्या सिद्धत्वादित्युक्तेः भामतीग्रन्थानवलोकननिमित्तत्वात् अथशब्दानंतरवर्तिना अतःशब्देन त्वदुक्तरीत्या नित्यानित्यविवेकादिमुमुक्षांतस्य उपस्थितत्वेऽपि कल्पांतरोपन्यासाभावेन पूर्वमुपस्थितत्वाभावेन च 'पूर्वमुपस्थितत्वात् अथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वोपपत्तेः भामतीकल्पतरूक्तातः शब्दार्थरीत्या सिद्धत्वात्, इत्यस्यात्यंतमयुक्तत्वाच्च ।।

(चं. ६५) नापि प्रकृतादर्थादर्थांतरत्वाशंकानिरासार्थ अर्थांतरत्वं हि यतः कुतश्चित्प्रकृताच्चेद्व्यर्थं पुष्कळ कारणाच्चेदानंतर्याभिधानं विना कारणत्वासिद्धिः आनंतर्याभिधाने च

प्रकृतादर्थात् अर्थांतरत्वस्यांतर्णीततया सिद्धिरिति विवरणोक्तोऽभिप्रायः आनंतर्याभिधानेऽपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धेः अन्यथा आनंतर्यार्थत्वे तत्प्रतियोगिनो हेतुत्वासिद्धिः पूर्वप्रकृतादर्थांतरत्वाभिधानेप्यानंतर्यार्थस्यांतर्णीततया सिद्धेश्चेति ॥

(श. ८७.) तत्र परमानंदो मोक्षः ज्ञानं तु संपादनीयं इत्यत्र ज्ञानात्पूर्वं प्रकृतस्य ज्ञानजन्यफलत्वसंप्रतिपत्तेः वैयर्थ्यपरिहारार्थं प्रकृतस्य हेतुत्वसिद्धिरिति भवद्वचनस्य तत्र व्यभिचारात् आनंतर्याभिधाने तु आनतर्यप्रतियोगिनः प्रकृतस्य फलत्वासंभवेन हेतुत्वं सिध्यतीति विवरणाभिप्रायात् इति ॥

(खं.) तत्तुच्छं ॥ यत्र यत्र पूर्वप्रकृतत्वं तत्र तत्र वैयर्थ्यानुपपत्या हेतुत्वमिति नियमो नाभिप्रेतश्चंद्रिकाकृतां किंतु प्रकृतादर्थादर्थांतरस्याथशब्दादिना बोधने पूर्वप्रकृतार्थस्य वैयर्थ्यानुपपत्या हेतुत्वं बोध्यते इत्येवाभिप्रेतं परमानंदो मोक्षः ज्ञानं तु संपादनीयमित्यत्र पूर्वप्रकृतादर्थादर्थांतरत्वबोधकपदाभावात् परमानंदो मोक्ष इत्यस्य ज्ञानफलबोधकतया सार्थक्येन वैयर्थ्याभावाच्च तत्र व्यभिचारचोदनस्य चंद्रिकार्थाज्ञानविजृंभितत्वात् ॥

चैत्रागमनांतरं मैत्रो गतः कृत्तिकोदयानन्तरं रोहिण्युदय इत्यादौ अकार्यकारणयोरपि आनन्तर्यतत्प्रतियोगित्वयोः दृष्टत्वेन आनन्तर्यप्रतियोगिततयोक्तस्यापि वैयर्थ्यानुपपत्त्यैव कारणत्वस्य वक्तव्यतया समानयोगक्षेमत्वेन पूर्वप्रकृतस्यहेतुत्वबोधनार्थं आनन्तर्यार्थत्वमेवाथशब्दस्य वक्तव्यं न तु पूर्वप्रकृतादर्थादर्थांतरपरत्वमिति विवरणकृतः शांकरभाष्याभिप्रायवर्णनस्यायुक्तत्वाच्च ॥

(चं ६२) भामतीरीत्या जिज्ञासाशब्दस्येच्छा वाचकत्वे-

प्यार्थिकार्थेन विचारेणात्ध्याहृतकर्तव्यपदस्येव श्रुतस्याधिकारार्थथशब्दस्याप्यन्वयोऽस्तु यथोक्तं कल्पतरौ आर्थिकेयचास्मिन्नर्थे कर्तव्यपदाध्याहार इतीति ।।

(रा. ८७.) तन्न श्रूयमाणस्य श्रूयमाणजिज्ञासापदेनान्वये सम्भवति तत्परित्यज्याक्षिप्तेनान्वयापादनस्यायुक्तत्वात् । कर्तव्यत्वस्य जिज्ञासायामन्वेतुमयोग्यत्वेन आक्षिप्तविचारान्वयः स्वी कृतो भामत्यां इति ।।

(खं) तत्तुच्छं अथ शब्दः आनन्तर्यार्थः परिगृह्यते नाधिकारार्थं ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति शांकरभाष्ये अथ शब्दस्याधिकारार्थत्वाभावे ब्रह्मजिज्ञासाया अनधिकार्यत्वरूपो हेतुः प्रतिपादितः स चायुक्तः विवरणरीत्या जिज्ञासापदस्य विचारार्थत्वेन विचारस्यचारभ्यत्वरूपाधिकार्यत्वसम्भवेन हेतोरसिद्धेः ।।

भामतीरीत्या जिज्ञासपदबोध्येच्छाया अनारभ्यत्वेऽपि जिज्ञासाक्षिप्तविचारेऽध्याहृतकर्तव्यपदस्येवाधिकारार्थकाथशब्दस्याप्यन्वयसंभवेन अथ शब्दस्याधिकारार्थत्वाभावे जिज्ञासाया अनारभ्यत्वरूपोक्तहेतोरप्रयोजकत्वान्न तेन अथशब्दस्याधिकारार्थत्वाभावसिद्धिरित्येव च चंद्रिकाकृतामभिप्रेतत्वेन तैः आक्षिप्तविचारेऽन्वयस्यानापादित्वात् इत्थंच तद्दूषणमाशयानवबोधनिमित्तमेवेति ।।

यस्त्वित्यादिना चन्द्रिकानुवादावसरे 'आनन्तर्यार्थक श्रुताथशब्दस्याप्याक्षिप्तविचारान्वयः स्यात्' इत्यनुवादस्तु प्रमादमूल एवेति ।।

(चं ६८.) नापि परेषां भाष्योक्तात् 'नित्यानित्यवस्तुविवेक इहामुत्रार्थ फलभोगविरागः शमदमादिसंपत्तिर्मुमुक्षुत्वंचे' ति साधनचतुष्टयसम्पद्रूपादधिकारात् । तथाहि । नित्यानित्यविवेको नाम किं ब्रह्मैव नित्यमन्यदनित्यमिति विवेकः

किंवात्मानात्मसमुदाये नित्यत्वानित्यत्वे स्तो धर्मौ तयोश्च धर्मिभ्यां भवितव्यमिति निश्चयः यद्वाऽनित्यस्य सम्सारस्य किंचिदधिष्ठानमस्तीति निश्चयो नतु ब्रह्मेति। नाद्यः ज्ञातव्यस्य प्रागेव ज्ञाततया विचारवैफल्यात्। नच सगुणनिर्गुणविवेकाखण्डसमन्वयाद्यर्थं शास्त्रमितियुक्तं। भामत्यां नित्यानित्यशब्दयोः सत्यानृतपरत्वेनोक्ततया ब्रह्मैव सत्यमन्यदनृतमिति विवेकस्य प्रागेव सिद्धौ तदर्थस्य सगुणनिर्गुणविवेकादेरप्यनपेक्षितत्वात्। नहि श्रुतितात्पर्यधीः स्वरूपेणापेक्षिता। किंतु ज्ञेयनिश्चायकतया न चोक्तादन्यन्मुमुक्षुज्ञेयमस्ति। जीवब्रह्मभेदस्यापि ब्रह्मातिरिक्ततया तन्मिथ्यात्वस्य तदभेदस्यापि ब्रह्ममात्रतया तत्सत्वस्यापि तेनैव निश्चितत्वाच्च। न द्वितीयः तन्मात्रेणानात्मप्रहाणेनात्मविचारे प्रवृत्त्ययोगात्। ऐहिकामुष्मिकभोगविरागायोगाच्च। नान्त्यः ब्रह्मशब्दार्थत्वादेः प्रकारस्याज्ञानेऽपि वस्तुतो ब्रह्मणोऽनात्माधिष्ठानस्य शास्त्रवेद्यस्य ज्ञातत्वेन शास्त्रवैय्यर्थ्यात् इति ॥

(रा.) तत्र प्रथमविकल्पस्य भामतीकल्पतर्वोरनुक्तत्वात् अनात्मनां प्रायेणानित्यत्वविकारवत्त्वादिदोषवत्त्वदर्शनेन तत्प्रहाणेनात्मविचारप्रवृत्तेरुचितत्वात् वैषयिकफलवैराग्यस्य सम्भवेन द्वितीयविकल्पस्य दोषविकलत्वात् जीवत्वोपलक्षितज्ञानेश्वरत्वोपलक्षितज्ञानेतरकालीनजीवत्वेश्वरत्वोभयोपलक्षिताखंडचैतन्यज्ञानस्य शास्त्रतात्पर्यविषयत्वेन तस्य जीवेश्वरस्वरूपविचारमन्तरेणालब्धसत्ताकतया संसाराधिष्ठानं किंचिदस्तीति वज्जीवेश्वरविचारमन्तरेणाप्युत्पद्यमानं ज्ञानं तद्विलक्षणतया च तृतीयपक्षे दोषाभावात् इति ॥

(खं) तत्तुछं भवदभिमतद्वितीयतृतीयपक्षयोरुक्तदोषाणां त्वयाऽनुद्धारात्। तथाहि। आत्मानात्मसमुदाये नित्यत्वानित्यत्वे स्तो धर्मौ

तयोश्च धर्मिभ्यां भवितव्यमिति निश्चयः इति हि द्वितीयः पक्षः एतादृग्निश्चये वैषयिकफले वैराग्यायोगः एवं अनात्मप्रहाणेनात्मविचारे प्रवृत्तेरप्ययोग इति नच अनात्मनां प्रायेणानित्यत्वविकारवत्वादिदोषदर्शनसहकृतत्वस्य तादृशनिश्चये विशेषणदानेऽपि अनित्यत्व विकारवत्वादि दोषविषयीभूत अनात्मनि वैराग्यं स्यात् नतु सर्वेष्वनात्मसु आत्मविचारे प्रवृत्तिस्त्वसंगतैव तत्कारणीभूतस्यात्मज्ञानफलनित्यताज्ञानस्याभावात् चंद्रिकानुक्ते किंवा नित्यत्वतदाश्रययोरनित्यत्वतदाश्रययोश्च धर्मधर्मिणोः परस्परं विवेक इति त्वदुक्तद्वितीयविकल्पेऽपि पूर्वोक्तदोषाणामनपगमात् ॥

जीवत्वोपलक्षितेश्वरत्वोपलक्षितज्ञानोत्तरकालीनजीवत्वेश्वरत्वोभयोपलक्षिताखण्डचैतन्यस्याप्रामाणिकत्वेन तद्ज्ञानस्य शास्त्रतात्पर्यविषयत्वासंभवात् त्वया तस्य शास्त्रतात्पर्यविषयत्वे प्रमाणानामनुदाहृतत्वात् अभावाच्च। शास्त्रेण शक्यतावच्छेदकलक्ष्यतावच्छेदकाद्यन्यतमाविषयकधर्मिविषयकज्ञानस्याजननाच्च। तादृशज्ञानस्य शास्त्रतात्पर्यविषयत्व कल्पनं शास्त्रप्रयोजनत्वकथनमत्यंतासङ्गतमेव। अनित्यस्य संसारस्य किंचिदधिष्ठानमस्तीति ज्ञानेन संसारे वैराग्योत्पत्तावपि आत्मविचारे प्रवृत्त्ययोगश्च ॥

(चं ६९) न च विवरणरीत्या ध्वंसप्रतियोग्यप्रतियोगिपरौ- तथाच ब्रह्मज्ञानफलं स्थायि कर्मादिफलंत्वस्थायीति विवेको नित्यानित्यविवेक इति युक्तम्। प्रतिपन्नोपाधावत्यंताभावप्रतियोगित्वरूपबाध्यत्ववतोऽनात्मनो ध्वंसप्रतियोगित्वायोगात्। पारमार्थिकत्वाकारेणात्यंताभावः स्वरूपेण तु ध्वंस इति चेन्न। पारमार्थिकत्वस्याबाध्यत्वरूपत्वेनान्योन्याश्रयात्। तथात्यंताभावस्य निराकारे ब्रह्मण्यपि संभवाच्च। अतात्विके शुक्तिरूप्यादावनित्यत्वाव्यवहाराच्च। 'गौरनाद्यंतवती एषोऽश्वत्थः सनातन'

इत्यादि श्रुत्यनुसाराय मोक्षेप्यतात्विकी अनुवृत्तिर्निवृत्तिस्तु तात्विकी इति ॥

(रा ८८) तन्न पारमार्थिकत्वाकारेणात्यंताभावप्रतियोगित्वस्य स्वरूपेण ध्वंसप्रतियोगित्वेनाविरोधात् पारमार्थिकत्वं तु ज्ञानानिवर्त्यत्वं न तूक्तात्यंताभावाप्रतियोगित्वमिति नान्योन्याश्रयः इति ॥

(खं.) तत्तुच्छं प्रतिपन्नोपाधावत्यंताभावप्रतियोगिनः ध्वंसप्रतियोगित्वासम्भव इति दूषयित्वा पुनः पारमार्थिकत्वाकारेणात्यन्ताभावः स्वरूपेण तु ध्वंस इति तत्परिहारमाशंक्य पारमार्थिकत्वस्याबाध्यत्वरूपत्वेन अबाध्यत्वेनात्यन्ताभावप्रतियोगित्वम् बाध्यत्वमित्युक्तं स्यात् तथाच बाध्यत्वशरीरे अबाध्यत्वस्य प्रवेशेन अबाध्यत्वज्ञानमन्तरा बाध्यत्वज्ञानं न संभवति अबाध्यत्वस्य बाध्यत्वाभावरूपतया बाध्यत्वज्ञानमन्तरा अबाध्यत्वज्ञानं न सम्भवतीति परस्परज्ञप्त्यधीनज्ञप्तिकत्वेनान्योन्याश्रयदोषोऽभिहितः तत्परिहारार्थं पारमार्थिकत्वस्य ज्ञानानिवर्त्यत्वरूपत्वकथनमयुक्तमेव तथाहि ज्ञाननिवर्त्यत्वस्य ज्ञानजन्यध्वंसप्रतियोगित्वरूपत्वेन कर्मफलादेः ध्वंसप्रतियोगित्वेन ध्वंसाप्रतियोगित्वाभावात् ध्वंसाप्रतियोगित्वेन अत्यन्ताभावप्रतियोगित्वं संभवतीत्यत्र पर्यवसानेन ध्वंसप्रतियोगित्वं प्रति ध्वंसप्रतियोगित्वस्य प्रयोजकत्वादात्माश्रयापातात्। ज्ञाननिवर्त्यत्वस्यापि त्वन्मते मिथ्यात्वरूपतया तत्घटितगुरुभूतमिथ्यात्वनिर्वचनायासवैयर्थ्याच्च शाङ्करभाष्यगाम्भीर्यनिर्णयाख्यग्रन्थे ब्रह्मसाक्षात्कारान्न मायायाः नापि तत्प्रयुक्तानां स्वरूपतो नाशः किन्तु मायाकार्यस्य मनुष्योहमित्यध्यासस्येत्यादिना महता प्रबन्धेन तत्तदधिकरणीयशांकरभाष्यमुल्लिख्य मायादीनां ज्ञाननाश्यत्वाभावस्य शङ्कराभिमतत्वं त्वयैवोपपादितमिति पारमार्थिकत्वप्राप्त्या अपसिद्धान्ताच्चेति ॥

(रा. ८८) पारमार्थिकत्वेनात्यन्ताभावप्रतियोगित्वस्य निराकारे ब्रह्मण्यपि सम्भवाच्चेति चन्द्रिकोक्तदोषपरिहारार्थं यदुक्तं निराकारे उक्तात्यन्ताभावप्रतियोगित्वरूपाकारस्याप्यसम्भवादिति ॥

(खं) तत्तुच्छं निराकारत्वरूपहेतुः प्रतियोगित्वाभावरूपसाध्य-भावाभावाभ्यां व्याघातप्राप्तेः तथाङ्गीकर्तुमशक्यत्वात् ॥

(चं. ७०) अतात्विके रूप्यादावनित्यत्वाव्यवहाराच्चेति ॥

(रा.) तन्न मूलाज्ञानाकार्यशुक्तिरूप्यादेरुत्तरावस्थाऽभावेन स्वरूपेण ध्वंसप्रतियोगित्वं नास्ति मूलाज्ञानपरिणामरूपे प्रपञ्चे तदस्त्येव अतो घटादावनित्यत्वव्यवहार : न तु शुक्तिरूप्यादावित्ति विवेक इति ॥

(खं.) तत्तुच्छं असदेव रजतं प्रत्यभादित्यनुभवेन रजतस्यासत्व सिद्धेः कार्यत्वाभावात् त्वन्मतरीत्या मूलाज्ञानकार्यत्वस्य मूलाज्ञानपरिणामित्वातिरिक्तस्य दुर्वचत्वेन मूलाज्ञानपरिणामिघटादिप्रपञ्चस्य स्वरूपेण ध्वंसः शुक्तिरूप्यस्य तु नेति विशेषस्य वक्तुमशक्यत्वेन घटादाविव शुक्तिरूप्यादावप्यनित्यत्वव्यवहारापत्तेर्दुर्वारत्वात् ॥

(चं. ७०) गौरनाद्यन्तवती एषोऽवस्थः सनातन इत्यादि श्रुत्यनुसाराय मोक्षेप्यतात्विकी अनुवृत्तिः निवृत्तिस्तु तात्त्विकी-मुक्तेर्बंधाद्वैषम्यं तात्विकनिवृत्तिमत्तामात्रेणेत्यापाताच्चेति ॥

(रा. ८८) नन्न सनातनपदस्यापेक्षिकनित्यत्वपरत्वेन मोक्ष दशाभावित्वागमकत्वात् : अन्यथा अतोन्यदार्तमिति श्रुतिविरोधापत्तेरिति ॥

(खं.) तत्तुच्छं आर्तशब्दस्य दुःख्यर्थकत्वेन योगरूढयन्यतरवृत्यापि अनित्यार्थत्वाभावेन 'अतोन्यदार्तं' इति श्रुतिविरोधाभावात् सनातनपदस्यापेक्षिकनित्यत्वरूपगौणार्थांगीकारस्यानुचितत्वात् ॥

शाङ्करभाष्यगांभीर्यनिर्णयाख्यग्रन्थे त्वयैव प्रकृत्यादीनां मायाया मुख्यनित्यत्वस्योक्तत्वेन अपसिद्धान्ताच्च ॥

(चं) विवेको भेदस्य तद्व्याप्तस्य वा ज्ञानं तस्य च भ्रमत्वे ब्रह्मविचारो न नित्यफलकस्स्यात् प्रमात्वे तु भेदः सत्यः स्यात् तस्मात्परमते नित्यानित्यवस्तुविवेको न युक्त इति ॥

(रा.) तत्र ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहार-दशाऽबाध्यविषयकत्वरूपप्रमात्वाविरुद्धत्वेन ब्रह्मविचारस्य नित्यफलक-त्वोपपत्तेरिति ॥

(खं.) तत्तुच्छं वस्तुनः अतात्विकत्वे बाध्यत्वमात्रस्य प्रयोज-कत्वेन इदानींतनबाधविषयत्वस्य तदानींतनबाधाविषयत्वस्य वाऽप्रयो-जकत्वेन ब्रह्मज्ञानफलं नित्यं अन्यफलमनित्यमित्यादि ज्ञानरूपस्य विवे-कस्य ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वांगीकारे ब्रह्मज्ञानफलनिष्ठ-नित्यतायाः बाध्यत्वेनातत्त्वतया तद्विरुद्धब्रह्मज्ञानफलानित्यतायाः तत्त्व-ताप्राप्त्या ब्रह्मविचारः अनित्यफलकः स्यात् इतिदोषस्यापरिहारात् अन्यथा इदं रजतमिति ज्ञाननिष्ठस्यापि नेदं रजतमितिज्ञानबाध्यार्थ-विषयकत्वरूपभ्रमत्वस्य इदं रजतमिति भ्रमदशाऽबाध्यार्थविषयकत्व-रूपप्रमात्वाविरुद्धत्वेन रजतस्य घटादिवत् सत्यत्वं तद्ज्ञानाज्जायमान-प्रवृत्तेः सफलत्वञ्च स्यादिति ॥

(चं) विवरणे विषयैरपि नित्यमात्मस्वरूपसुखमेवा-भिव्यज्यते नतु जन्यसुखमस्तीति वैषयिकसुखस्य ब्रह्मरूप-त्वोक्त्या तस्यैव प्राप्यत्वेन तत्र वैराग्यायोगात् स्वरूपसुखरूप-मोक्षे रागवतः तत्त्वतः ततो भेदहीनभोगे विरागायोगाच्चेति इहामुत्रार्थभोगविरागस्य परमते अधिकारिविशेषणत्वपक्षे दूषणमुक्तम् ॥

(रा.) तत्र शिखी ध्वस्त इत्यादाविव विषयविनाशेन विषया-भिव्यक्तत्वविशिष्टब्रह्मरूपसुखस्य स्वरूपतोऽनाशिनोऽपि विशिष्टरूपेण विनाशसंभवेन तत्र वैराग्योपपत्तेरिति ॥

(खं.) तत्तुच्छं विवरणकृता विषयैः नित्यसुखं ब्रह्मैवाभिव्यज्यत इत्युक्तम् न तु विषयाभिव्यक्तत्वविशिष्टब्रह्मरूपसुखमिति तस्मात् विशिष्टसुखस्याभिव्यक्त्यनङ्गीकारात् विशिष्टरूपेण विनाशासंभवेन तत्र वैराग्योपपत्तेरिति समाधानस्याप्युक्तत्वात्। किंच विशिष्टरूपेण नाशेऽपि अपेक्षितस्य स्वरूपसुखस्य स्वरूपतोऽनाशिनोपीति त्वयैव नित्यत्वेनाङ्गीकृतत्वात् तत्र वैराग्यायोगः अन्यथा अपेक्ष्यमाणात्मस्वरूपरूपमोक्षस्य पूर्वमेव सिद्धत्वेऽपि अविद्यानिवृत्त्युपलक्षितात्मस्वरूपमोक्षस्यासिद्धत्वेन तत्रेच्छायाः सम्भवादिति त्वदुक्तेः असाङ्गत्यापत्तेः अविद्यानिवृत्त्युपलक्षितत्वविशिष्टात्मस्वरूपरूपमोक्षस्य स्वरूपतोऽनाशिनोऽपि विशिष्टरूपेण नाशसम्भवेन तत्रापि वैराग्यापत्तेः दुर्वारत्वात् ॥

(चं.) परमते शमदमादिरित्यत्रादिशब्दो न युक्तः तेन तितिक्षादेरेव ग्रहणं नतु विवेकादेरिति नियमहेतोः तितिक्षाद्यनुगतस्य विवेकादिव्यावृतस्य चोपसंग्राहकधर्मस्याभावादिति ग्रन्थेन तितिक्षावत् विवेकादेरपि आदिपदेन गृहीतुं शक्यत्वात् विवेकादेः स्वशब्देन ग्रहणम् तितिक्षायाः आदिपदेन ग्रहणमयुक्तमिति दूषणमुक्तम् ॥

(रा.) तत्र पदानुपात्तस्यैव आदिपदग्राह्यत्वेन विवेकादेस्तत्पदेनैव गृहीतत्वेन तस्यादिपदेन ग्रहणापादनासाङ्गत्यादिति ॥

(खं.) तत्तुच्छं विवेकादेः स्वशब्दगृहीतत्वेन आदिपदेन ग्रहणापादनासांगत्यकथनस्य आदिपदेन तितिक्षादेर्ग्रहणमिव विवेकादेरपि गृहीतुं शक्यत्वेन विवेकादेः स्वशब्देन ग्रहणं कुत इति चंद्रिकोक्ताक्षेपापरिहारकत्वात् तदाक्षेपाज्ञानज्ञापकत्वाच्च ॥

(चं) मुमुक्षा च परमते न युक्ता मोक्षस्य नित्यसिद्धात्ममात्रत्वेन तत्रेच्छाऽयोगात् वृत्त्युपलक्षितस्याप्यात्मनो वृत्तेः पश्चादिव पूर्वमपि सत्वाच्चेति ॥

(रा.) तन्न अविद्यानिवृत्त्युपलक्षितात्मस्वरूपरूपमोक्षस्यासिद्धत्वेन तत्रेच्छायाः सम्भवात् न चाविद्यानिवृत्तेः पूर्वं आत्मनोऽविद्यानिवृत्त्युपलक्षितत्वं सम्भवति भूतस्योपलक्षणत्वसंप्रतिपत्तिवत् भाविनः उपलक्षणत्वस्य क्वाचित्कतया सार्वत्रिकत्वासंप्रतिपत्तेरिति ॥

(खं.) तत्तुच्छं तदुपलक्षितत्वं नाम यदाकदाचित् तद्विशिष्टत्वं अविद्यानिवृत्तेः इदानीं अभावेऽपि उत्तरकालभावितया इदानीं यदाकदाचित् अविद्यानिवृत्तिविशिष्टत्वरूपतदुपलक्षितत्वस्य च सिद्धत्वात् "भाविनः उपलक्षणत्वस्य क्वाचित्कतया सार्वत्रिकत्वासंप्रतिपत्तेरि" ति त्वयैव भाविनोऽपि उपलक्षणत्वस्य अङ्गीकृतत्वाच्च भाविनः उपलक्षणत्वव्यवहारस्य क्वाचित्कत्वेऽपि उपलक्षणतायाः सार्वत्रिकत्वेन तत्रासंप्रतिपत्त्युद्भावनस्यासङ्गतत्वाच्च अविद्यानिवृत्त्युपलक्षितत्वविशिष्टात्मनः मोक्षरूपत्वे विशिष्टरूपेण विनाशित्वप्राप्त्या त्वद्रीत्या विशिष्टरूपेण विनाशिनि विषयाभिव्यक्तत्वविशिष्टात्मस्वरूपसुख इव रागानुदयापाताच्च ॥

(चं.) किंच अहं मुक्तः स्यामितीच्छा परमते न सम्भवति तन्मते अहमर्थस्य मुक्त्यनन्वयादिति ॥

(रा.) तन्न अद्वैतसिद्धान्ते प्रमाणबलेन अन्तःकरणावच्छिन्नस्यापि चैतन्यस्य अहमालम्बनत्वस्वीकारेण अन्तःकरणस्य मुक्तावभावेऽपि चैतन्यस्य मुक्तावन्वयसम्भवेन 'अहं मुक्तःस्यां' इति मुमुक्षोपपत्तेः अन्यथाशरीरविशेषविशिष्टस्याहं स्वर्गी स्यामिति कामनया यागकरणानापत्तेः ब्राह्मणादिशरीररूपविशेषणस्य स्वर्गानन्वयात् विशेषणस्यानन्वयेऽपि विशेष्यस्यान्वय इतिचेत् प्रकृतेऽपि अन्तःकरणस्य विशेषणस्यानन्वयेऽपि चैतन्यस्यान्वय इति तुल्यमिति ॥

(खं.) तत्र अन्तःकरणावच्छिन्नस्य चैतन्यस्य प्रमाणबलेन अहमालम्बनत्वस्वीकारेणेत्ययुक्तं अन्तःकरणावच्छिन्नस्य चैतन्यस्य अह

मर्थत्वे प्रमाणानां अनुपन्यासात् अभावाच्च अहं स्वर्गी स्यामितीच्छावि-षयत्वं चेतनस्य त्वन्मतरीत्या अन्तःकरणावच्छिन्नस्य वा न तु शरीरवि-शेषविशिष्टस्य तस्याहमर्थत्वाभावात् अतः ब्राह्मणादिशरीरस्य स्वर्गान-न्वयेऽपि इच्छाविषयस्य स्वर्गान्वयेन अहं स्वर्गी स्यामितीच्छया यागकरणं सम्भवत्येव प्रकृते च अन्तःकरणस्य मुक्तावनन्वयेन त्वदभिमतान्तः-करणावच्छिन्नचैतन्यरूपाहंपदार्थस्य मुक्तावनन्वयप्राप्त्या तदिच्छायाः असम्भव एवेति ॥

(चं.) साधनचतुष्टये पूर्वपूर्वस्योत्तरोत्तरहेतुत्वेन मुमुक्षै-वाधिकारिविशेषणं अन्यत् तद्धेतुभूतमिति भामतीव्याख्यानं शङ्कराभिमतं स्यात् तर्हि स्वभाष्ये 'यदनन्तरं ब्रह्मजिज्ञासा इति स्वकृताशङ्कायाः उच्यते मुमुक्षुत्वं तस्मिन्सति प्रागपि धर्म-जिज्ञासाया ऊर्ध्वंच शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये तस्मादथशब्देन मुमुक्षानन्तर्यमुपदिश्यते इत्येव वक्तव्यं स्यात् न तु नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादि-साधनसम्पत् मुमुक्षुत्वञ्च तेषु सत्सु........ तस्मादथशब्देन यथोक्तसाधनसंपत्त्यानन्तर्यमुपदिश्यते इति न वक्तव्यं स्यात् तस्मात्तद्भाष्यस्य भामतिव्याख्यानं असङ्गतमेवेति ॥

(रा.) तन्न भामतीमते मुमुक्षानन्तर्यमेवाथशब्दार्थः विवेकाद्या नन्तर्यन्तु मुमुक्षाद्वारैवेति सिद्धान्तादिति ॥

(खं.) तत्तुच्छं भामतीरीत्या मुमुक्षानंतर्यस्यैव अथशब्दार्थत्वे तस्मादथशब्देन यथोक्तसाधसम्पत्यानन्तर्यमुपदिश्यते इति भाष्ये नि त्यानित्यवस्तुविवेकादिचतुष्टयानन्तर्योक्तेः असङ्गतत्वापातात् न च विवेकाद्यानन्तर्यं मुमुक्षाद्वारैवेत्यभिप्रायेण चतुष्टयानन्तर्योक्तिरिति वाच्यं तथासति यज्ञादेरपि मुमुक्षादिद्वारा आनन्तर्यप्रतियोगितापत्तेः ॥

(रा.) यदपि "कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः" ॥

इति मोक्षधर्मवचनेन "सन्यस्य श्रवणं कुर्यात्" इति स्मृतिवचनेन ब्रह्मविचाराख्यवेदश्रवणे यज्ञादिकर्मसन्यासस्य हेतुत्वोक्त्या तत्प्रतियोगिनः कर्मणः आनन्तर्यप्रतियोगित्वासम्भव इति ॥

(खं.) तत्तुच्छं "यज्ञार्थात्कर्मणोन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौंतेय मुक्तसङ्गः समाचर" ॥

इत्यादिगीतावचनेन "कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति इत्यादि श्रुत्या च निष्कामभगवदुद्देश्यककर्मणः ज्ञानं प्रति कारणत्वोक्तेः मोक्षधर्मवचनस्य सकामकर्मविषयत्वात् 'सन्यस्य श्रवणं कुर्यात्' इति स्मृतेः यज्ञादिकर्मत्यागवत एव श्रवणाधिकारिताबोधकत्वे गृहाश्रमिणां श्रवणानधिकारापत्तेः "काम्यानां कर्मणां न्यासं सन्यासं कवयो विदुः" इति गीतानुसारेण सन्यस्येत्यस्य काम्यकर्म परित्यज्येत्यर्थकत्वेन कर्मसामान्यत्यागपरत्वाभावाच्च निष्कामस्य स्वस्ववर्णाश्रमोचितकर्मणः अन्तःकरणशुध्यादिद्वारा ब्रह्मविचारं प्रति कारणत्वेन विवेकादेरिव आनन्तर्यप्रतियोगित्वस्य युक्तत्वात् ॥

(रा.) न च यस्य यस्य यद्धेतुत्वं तस्य तस्य तद्गतानन्तर्यप्रतियोगित्वं अध्ययनेन वसति इत्यादौ व्यभिचारात् किंतु आनन्तर्यप्रतियोगित्वयोग्यताकस्यैव गुरूपगमनमपि नानन्तर्यप्रतियोगि सदानिकटस्थ गुरुकपुरुषविषये तदसंभवादिति ॥

(खं.) तत्तुच्छं 'यस्य यस्य यद्धेतुत्वं तस्य तस्य तद्गतानन्तर्यप्रतियोगित्वं इत्याशङ्कायाः प्रकृतानुपयुक्तत्वात् कारणत्वस्यानन्तर्यप्रतियोगित्वनिरूपितव्याप्तौ अध्ययने व्यभिचारोद्भावनस्यायुक्तेश्च अध्ययनस्य वासं प्रति कारणत्वाभावात् तद्गतानन्तर्याप्रतियोगिनः तं प्रत्य-

कारणत्वनियमेन उक्तव्याप्तेः ध्रौव्याच्च सदानिकटस्थगुरुकस्यापि पुरुषस्य तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं इत्यादि श्रुतिस्मृतिप्रमाणानुरोधेन श्रवणार्थं नियमविशेषविशिष्ट-गमनस्यावश्यकत्वाच्च तथाच यज्ञगुरूपगमने अपि श्रवणगतानन्तर्य-प्रतियोगिनी एवेति तयोरपि भामतीरीत्या आनन्तर्यप्रतियोगितया शाङ्करभाष्ये अवश्यं वक्तव्यतया पारंपर्यविवक्षयाविवेकादीनामेव आनन्तर्यप्रतियोगितया ग्रहणं यज्ञगुरूपगमनादीनां आनन्तर्यप्रतियोगितया अग्रहणं भामतीव्याख्यानरीत्या भाष्यस्यायुक्तताख्यापकं भवत्येवेति भामतीरीत्या शाङ्करभाष्ये मुमुक्षानन्तर्यमेवाथशब्दार्थः न चतुष्टयानन्तर्यं इति चन्द्रिकोक्तदूषणस्य दुरुद्धरतेति ॥

(चं.) मुमुक्षावत् विवेकादेरपि अधिकारिविशेषणत्वं शाङ्करभाष्यस्याभिप्रेतमिति विवरणैकदेशमतेऽपि किं विवेकादे-र्विशेषणत्वं सामर्थ्यादेरिवान्वयव्यतिरेकाभ्यां गम्यं किंवा गृह-दाहादेरिव शास्त्रात्। नाद्यः शमाद्यभावेऽपि मुमुक्षामात्रेण विचारदर्शनात् ननु सविचारः शूद्रयागवत् न फलपर्यंतः तत्पर्यं-तस्तु शमाद्यभावे नास्तीति चेन्न तथापि विरागशमदमादि-मुमुक्षासु सतीषु विवेकाभावेन फलपर्यंतविचाराभावादर्शना-दिति ॥

(रा.) तन्न विवरणैकदेशिमते विवेकवैराग्याद्यभावेऽपि केवल-मुमुक्षामात्रेण प्रवृत्तविचारस्य शिथिलत्वापत्त्या नित्यानित्यविवेकादीनां मध्ये पूर्वपूर्व हेतुसहितेष्वेव उत्तरोत्तरेषु सत्स्वेव अशिथिलविचारप्रवृत्तेः उक्तचतुष्टयानन्तरमेव निष्ठत्या उक्तचतुष्टयस्यैवानन्तर्यप्रतियोगित्वमि-त्यभिप्रायादिति ॥

(खं.) तत्तुच्छं विरागशमदमादिमुमुक्षासु सतीषु विवेकाभावेन फलपर्यंतविचाराभावादर्शनादिति चन्द्रिकोक्तदूषणस्यापरिहारात् ॥

(चं.) भामत्यान्तु ब्रह्मशब्देन तत्प्रमाणं वेदः उपस्थापितः अत इति परामृश्यते। स च योग्यत्वात् 'तद्यथेह' इत्यादिः तथा च ब्रह्मज्ञानकर्मणोर्नित्यानित्यफलत्वप्रतिपादकादागमात् इहामुत्र-फलभोगविरागादि ततश्च ब्रह्मजिज्ञासा एवञ्च नातःशब्देन जिज्ञासांप्रति साधनकलापस्य हेतुतोच्यते येन पौनरुक्त्यं किंतु तत्स्वरूपालाभपरिहारोऽभिधीयते इत्युक्तम् तन्न। हेतोर्विचार-कर्तव्यत्वादिरूपसाध्यान्वयत्यागेन विरागादि साधनान्वयायोगात् अथशब्दार्थानन्तर्योपसर्जनस्य विरागस्य अतःशब्दोक्त हेत्वन्वया योग्यत्वाच्च अथशब्दोपस्थापितविरागेणैव स्वजनकस्य तद्यथे-त्यादेर्वाक्यस्य साक्षादेवोपस्थापनसम्भवे ब्रह्मशब्देन परंपरयोप-स्थापनोक्त्ययुक्तेश्च विरागहेतुत्वेन त्वदभिप्रेते सत्यानृतविवेके 'नेहनानास्ति किंचन' इत्यादेरेव हेतुतया वक्तव्यत्वेन 'तद्यथा' इत्याद्युक्त्ययुक्तेश्चेति ॥

(रा.) तन्न विचारकर्तव्यत्वस्य मुमुक्षामात्रसिद्धिकत्वेन मुमुक्षोपपादकवैराग्यासिद्धौ तदसिद्ध्यापत्या वैराग्यहेतोरेव वक्तव्यत्वा-वश्यकत्वेन तदर्थं 'तद्यथेह' इतिवाक्यस्य अतःशब्देन ग्रहणौचित्यात्। अपेक्षितान्वयस्यैव न्याय्यत्वेनानपेक्षितान्वयापादनायोगाच्च। अथ। शब्दानन्तर्यप्रतियोगिनि वैराग्ये अतःशब्दोक्त 'तद्यथेह' इति वाक्यस्य स्वजन्यप्रतीतिद्वारा जनकत्वरूपहेतुतया अन्वयस्येष्टत्वात्। अतइति सर्वनाम्ना ब्रह्मशब्दोपस्थापितवाक्यग्रहणे न्यायतः संभवतिसति वैराग्य-रूपार्थोपस्थापितवाक्यत्वेन वाक्यग्रहणस्यान्याय्यतया तदापादनोक्त्ययो-गाच्च। 'नेह नानास्ति' इतिवाक्यस्य कृत्स्नप्रपञ्चमिथ्यात्वावगमद्वारा जन्यमुख्यवैराग्यहेतुत्वेऽपि 'तद्यथेह' इति वाक्यस्य कण्ठतः कर्मफला-नित्यत्वबोधनेन साक्षादेव वैराग्यजनकत्वेन अतःशब्देन 'तद्यथेह' इति वाक्यस्यैव ग्रहणौचित्यादिति ॥

(खं.) तत्तुच्छम् विचारकर्तव्यत्वस्य मुमुक्षातदतिरिक्तानेक पदार्थसिद्धिकत्वेन मुमुक्षामात्रसिद्धिकत्वेनेत्युक्तेः अयुक्तत्वात् ।। अतः-शब्दस्य साधनस्वरूपासिद्धिपरिहारत्वाङ्गीकारे वैराग्यासिद्धौ मुमुक्षाद्यसित्ध्या वैराग्यहेतोः वक्तव्यत्वस्यैव 'तद्यथेह' इत्यादि वेदस्य प्रामाण्यापौरुषेयत्वसिद्धपदार्थबोधकत्वादीनां पुरुषस्य शाब्दबोधप्रयोजकवाच्यवाचकसंबन्धज्ञानरूपव्युत्पत्त्यादीनां च असिद्धौ 'तद्यथेह' इत्यादि वाक्ये नापि स्वजन्यशाब्दबोधप्रमाजननद्वारा वैराग्यासित्ध्या वेदप्रामाण्यादीनामपि वक्तव्यत्वस्यावश्यकत्वेन तदकथनप्रयुक्तन्यूनतापत्तेश्च ।।

मुमुक्षावैराग्यादि साधनासिद्धौ विचारकर्तव्यतायाः असम्भव इव "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायेन प्रयोजनाभावे विचारकर्तव्यतायाः असम्भवेन विचारेण जनिष्यमाणफलस्य अवश्यं कथनीयत्वेन अतःशब्दे तदर्थकत्वस्य विचारकर्तव्यतारूपसाध्यस्य तदर्थेनान्वयस्य अत्यन्तमपेक्षितत्वाच्च ।।

'हेतोः विचारकर्तव्यत्वादि रूपसाध्यान्वयत्यागेन विरागादि साधनान्वयायोगात्' इति चंद्रिकावाक्येन प्रधानसाध्येन स्वारसिकाकांक्षात्यागो न युक्त इत्यभिहितत्वेन अन्वयस्य अनापादितत्वाच्च ।। उपसर्जनीभूतवैराग्ये जनकत्वरूपहेतुतया 'तद्यथेह' इत्यादि वाक्यान्वयस्य तवेष्टत्वेऽपि पशुपदार्थोपसर्जने पशुत्वे अपश्वभेदतात्पर्येण 'पशुरपशुः' इत्यादि प्रयोगापत्त्या पदार्थोपसर्जने पदार्थांतरान्वयस्य उत्सर्गतः कैरपि वादिभिः अस्वीकारेण अतःशब्दोक्तस्य 'तद्यथेह' इत्यादि वेदस्य वैराग्ये अन्वयायोग्यत्वाच्च ।।

'ब्रह्मशब्देन तत्प्रमाणं वेदः उपस्थापितः अतः इति परामृश्यते' इति भामत्युक्तेः न शक्त्या ब्रह्मशब्दस्य वेदोपस्थापकत्वं । किंतु शक्त्या ब्रह्मरूपार्थोपस्थितौ एकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति न्यायेन एकब्रह्मरूपार्थोपस्थितौ अपरस्य ज्ञापकत्वरूपसंबन्धवतः वेदस्य स्मरणमिति अर्थद्वारैव ब्रह्मशब्देन वेदस्मरणस्याभिप्रेतत्वं अवगम्यते । अन्यथा

'ब्रह्मशब्देन वेदः उपस्थापित' इत्येवोच्येत । न तु 'ब्रह्मशब्देन तत्प्रमाणं वेदः उपस्थापितः' इति ॥ एवञ्च ब्रह्मशब्दाथशब्दाभ्यां अर्थद्वारैव वेदस्योपस्थितेः ब्रह्मशब्देन सामान्यतः वेदस्योपस्थितौ वेदत्वेन 'तद्यथेह' इति वेदविशेषस्य उपस्थितिस्वीकारापेक्षया अथ शब्देनोक्तवैराग्येणैव जनकतासंबन्धेन साक्षात् 'तद्यथेह' इति वेदस्यैवोपस्थितिसंभवेन तथैव ग्रहणस्य न्याय्यतया ब्रह्मशब्देन परंपरयोपस्थापनोक्त्ययुक्तेः समञ्जसत्वात् ॥ आपादनस्याकृतत्वेन 'तदापादनोक्त्ययोगाच्च' इत्युक्तेः असङ्गतत्वाच्च ॥

वैराग्यंप्रति हेतुतयोक्तनित्यानित्यविवेकस्य सत्यानृतविवेकतया भामतिकारेण व्याख्याततवात् सत्यानृतविवेकस्य वैराग्यप्रयोजकत्वेन तदभिमत्यवगत्या तस्य त्वन्मतरीत्या "नेहनानास्तिकिञ्चन" इत्यादि श्रुत्यैव सम्भवेन कृत्स्नप्रपञ्चमिथ्यात्वावगमिकायाः तस्या एव ग्रहणौचित्यं । न तु कर्मफलानित्यत्वप्रतिपादकस्य 'तद्यथेह' इत्यादि वेदवाक्यस्य । कर्मफलानित्यत्वज्ञानस्य वैराग्यहेतुतायाः भामतिकारेणानुक्तत्वादिति ॥

(चं.) विवरणे तु अथशब्दगृहीताया एव साधनकलापस्य ब्रह्म विचारहेतुताया "अक्षय्यं हवै चातुर्मास्ययाजिनः सुकृतं" इत्यादिना अपवादशङ्कायां प्राप्तायां तन्निराकरणं पुनरथशब्दोक्तहेतुत्वाभिधायिना अतःशब्देन क्रियते इत्युक्तम् ॥ तदपि न । अथशब्दोक्तानधिकाभिधायिना अपवादशङ्कायाः निरासे अथशब्देनैव तन्निरासप्रसङ्गात् ॥ हेतुत्वसाधकहेतोः कथन एवापवादशङ्कानिरासः । न तूक्तस्यैव हेतुत्वस्य पदान्तरेण कथन इति ॥

(रा.) तत्र एकतन्तुबन्धनात् द्वितन्तुबन्धने दार्ढ्यदर्शनेन अथ शब्द सिद्धहेतुत्वस्यैव अतःशब्देनाप्युक्तौ हेतुत्वदार्ढ्यसिद्धेः उक्तापवाद-

निराकरणसाधकत्वमक्षुण्णं अतःशब्दस्येति युक्तमेवोक्तं विवरणकृद्भि-रिति ॥

(खं.) तत्तुच्छं एकतन्तुबन्धनापेक्षया द्वितन्तुबन्धने दार्ढ्यदर्शनेऽपि दृष्टान्ते तन्तुद्वयस्येव अथशब्दसिद्धहेतुत्वस्यैव अतःशब्देनाप्युक्तौ दार्ष्टान्तिके हेतुद्वयाभावेन अतःशब्दस्योक्तापवादनिराकरणसाधकत्वाभावात् ॥

(रा.) विवेकवैराग्यादिगतहेतुत्वस्य दार्ढ्यञ्च "अक्षय्यं ह्वैचातुर्मास्ययाजिनः सुकृतं" इत्यादि वाक्यस्य आपेक्षिकामृतत्वसूचक 'यत्कृतकं तदनित्यं' इतिन्यायोपबृंहित "तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवामुत्र पूण्यचितो लोकः क्षीयते" इत्यादिवाक्यजन्यप्रतीत्यधीन-विवेकवैराग्यादि वृत्तित्वमिति ॥

(खं.) तदपि तुच्छं । चन्द्रिकोक्तदूषणपरिहारानुपयुक्तत्वात् ॥ सुकृतमित्यादिवाक्यस्येत्यस्य आपेक्षिकामृतत्वे अन्वयबधेन अन्वीयमानपदार्थान्तरस्य वाक्यादनुपस्थितेः असङ्गतपदार्थान्वयकं चेत्युपेक्ष्यमेव ॥

(चं.) भामत्यां तु 'निश्चिते जिज्ञासायोगात् सन्दिग्धत्वेन ब्रह्मैव विषयः ज्ञानमेवेच्छाविषयत्वेन प्रयोजनमिति जिज्ञासापदेनैव विषयप्रयोजने सूचिते' इत्युक्तम् । तन्न । नहि पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य तद्विचार आक्षिप्तः। किंतु विषयाद्यभावेन इच्छैव नोदेतुं युक्तेत्याक्षिप्तं । नच तं प्रति इच्छया विषयादि साधनं युक्तमिति ॥

(रा.) तन्न ब्रह्मज्ञानसाध्यो मोक्ष इति महद्भ्य उपश्रुत्य तत्वबुभुत्सुना साङ्गवेदाध्ययनजन्यजीव ब्रह्मैक्य विषयकापातप्रतीतेरहमिति ज्ञानस्य ब्रह्मज्ञानत्वमिश्चयात् उक्तज्ञानसत्वेपि मोक्षादर्शनेन जीवब्रह्मैक्य-

रूपविषयांशे तद्ज्ञानप्रयोजनरूपमोक्षांशे च सन्देहवता पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य विचारस्याक्षिप्तत्वादिति ॥

(खं.) तत्तुच्छं । तद्ज्ञानप्रयोजनरूपमोक्षांशे सन्देहसत्वे तद्ज्ञानेच्छाया एवासम्भवेन 'पूर्वपक्षिणा ब्रह्मज्ञानेच्छामङ्गीकृत्य विचारस्याक्षिप्तत्वात्' इत्युक्तेरसङ्गतत्वात् ॥ "न च सार्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा । येन जिज्ञास्यस्सन् विचारं प्रयुञ्जीत ।" इति भामत्यां जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वात् ब्रह्मज्ञानेच्छामङ्गीकृत्येत्युक्तेः भामतीविरुद्धत्वाच्च ॥

(चं.) विवरणे तु 'अथशब्देनाधिकारी जिज्ञासापदेनेच्छाविषयत्वेन ब्रह्मज्ञानं प्रयोजनं अर्थादधिकारिविशेषणं मोक्षो ब्रह्मज्ञानफलं विषयश्च सूचितः' इत्युक्तं । तदपि न । त्वन्मते जिज्ञासापदस्य विचारलक्षकत्वेन इच्छापरत्वस्याभावात् ॥ नहि 'विषं बुभुक्षते कूलं पिपतिषति' इत्यनेन विषभक्षणादेरिष्टत्वसिद्धिः । प्रतीतस्यापि मुख्यार्थस्य त्यक्तत्वात् । पूर्वपक्षिणा इच्छानङ्गीकाराच्च ॥ त्वन्मते ज्ञानेच्छाऽसम्भवस्योक्तत्वाच्च॥ मुमुक्षाया अधिकारिविशेषणत्वनिरासाच्च ॥ विषयसूचनं तु असन्दिग्धादन्यसूचनं विना न शक्यम् । अन्यथा शास्त्रारम्भसामार्थ्यादेव वा कर्तव्यतोक्तिसामर्थ्यादेव वा तत्प्रयोजकविषयादि सूचनसम्भवात् जिज्ञासापदादिना तत्सूचनोक्त्ययुक्तिरिति॥

(रा.) तन्न । आक्षेप्यस्य कर्तव्यस्य अकरणे प्रत्यवायजनकस्य नित्यकर्मणः कर्तव्यत्वस्यैव प्रयोजनाद्यव्याप्यत्वेन तत्सूचकत्वानियमादिति ॥

(खं.) तत्तुच्छम् । चन्द्रिकायां 'शास्त्रारम्भसामर्थ्यादेव वा कर्तव्यतोक्तिसामर्थ्यादेव वा तत्प्रयोजकविषयादिसूचनसम्भवात्' इत्यु-

क्तत्वेन कर्तव्यत्वमाक्षिप्य तेनाक्षेप्येण कर्तव्यत्वेन प्रयोजनादि सूचनानुक्तेरनुक्तोपालम्भनत्वात् ॥

संध्यामुपासते ये तु सततं शंसितव्रताः ।
ब्रह्मलोकमतिक्रम्य तेऽपि यांति परां गतिम् ॥

इत्यादिना नित्यकर्मभूतसंध्यायाः उत्तमगतिप्राप्तिरूपफलस्य "सूर्यश्च मामन्युश्च" इत्यादि सन्ध्यामन्त्रेण अनेकपापपरिहारादि फलस्य श्रवणात् अंततः प्रत्यवायपरिहाररूप प्रयोजनस्याप्यङ्गीकार्यत्वाच्च नित्यकर्मकर्तव्यत्वस्यापि प्रयोजनादि व्याप्यत्वेन आक्षेपविचारकर्तव्यत्वेनापि प्रयोजनादिसूचनसिद्धेः निष्प्रत्यूहत्वाच्च शास्त्रारम्भसामर्थ्यादेव विषयादि सूचनसम्भवादित्युक्तदोषस्यापरिहाराच्च ॥

(चं.) ब्रह्मशब्दश्च "अथ कस्मादुच्यते ब्रह्मेति । बृहंतोह्यस्मिन् गुणाः" इत्यादिश्रुतिबलात् गुणपूर्त्यर्थः । परपक्षे अखंडस्य ब्रह्मपदलक्ष्यस्यैव जिज्ञास्यत्वात् श्रुतिसूत्रस्थब्रह्मपदस्यैव मुख्यार्थत्याग इति ॥

(रा.) तन्न ब्रह्मपदशक्यतावच्छेदकजगत्कारणत्वादि रूपविशेषणांशस्य त्यागेऽपि अखण्डस्य विशेष्यस्य ब्रह्मपदेन शक्त्यैव ग्रहणसंभवात् ब्रह्मपदे लक्षणामुख्यार्थत्यागयोरप्रसक्तेः ॥ पदनिरूपित वृत्तिविशेष्यस्यापि शक्यत्वात् । अन्यथा 'गौरनित्या' इत्यादौ गोपदस्यव्यक्तौ लक्षणापत्तेः । तत्र गोत्वस्य विधेयानित्यत्वानन्वयेन विशेषणतया विवक्षाभावात् इति ॥

(खं.) तत्तुच्छं । भावप्रधाननिर्देशस्थले विशेषणस्य शक्तिविषयत्वेऽपि विशेष्याविषयक विशेषणविषयकबोधार्थं सर्वैर्लक्षणयाः स्वीकृतत्वेन तद्वदेव विशेषणाविषयकविशेष्यविषयकबोधार्थं लक्षणाया अङ्गीकार्यत्वात् ॥ विष्णुतत्वरहस्यविवरणे 'न च तत्वमसीति वाक्यमेव

विशेषणांशत्यागेन विशेष्यैक्ये प्रमाणमिति शक्यं तत्त्वंपदयोर्द्वयोर्विशेष्ये लक्षणापत्तेः विशिष्टयोरेव सर्वज्ञत्वकिंचिज्ज्ञत्वरूपविरुद्धधर्माक्रान्तयोरभेदस्तत्त्वमसीत्यनेन बोध्यत इति न शक्यते वक्तुं अनुप्रवेशनिमित्ताभेदे तु जीववाचकपदस्यैकस्यैव जीवानुप्रविष्टपरत्वं न तु पदद्वयलक्षणेति लाघवं' इति वदता त्वयैव लक्षणां विना विशेष्यमात्रविषयकबोधासंभवस्योक्तत्वाच्च । "तत्त्वमसि" इत्यादि श्रुतौ तत्त्वमादिपदानां विशेष्यमात्रविषयकबोधार्थं मधुसूदनब्रह्मानन्दादिभिः भवत्प्राचीनैः लक्षणायाः सहस्रकृत्वः स्वीकृतत्वात् । लक्षणानङ्गीकारे अपसिद्धान्तापत्तेश्च ।। तथाहि तद्वचनानि

ब्रह्मण्यवाच्ये यो विद्वान् वाच्यतामधिगच्छति ।
स निस्त्रपो निमित्तानां विरहैः प्रतिबोध्यताम् ।।
दृष्टा गुणक्रियाजातिसंबन्धाश्शब्दहेतवः ।
नात्मन्यन्यतमो ह्येषां तेनात्मा नाभिधीयते ।।"

'ब्रह्मणोऽशब्दवाच्यता' 'ब्रह्म आनन्दादिपदलक्ष्यं' इत्यादीनि ।।

'गौरनित्या' इत्यादौ गोपदेन शक्तया गोत्वविशिष्टगोविषयकबोधेन गोत्वस्य अनित्यत्वान्वयितावच्छेदकत्वेऽपि अनित्यत्वानन्वयित्वेन गोपदेन गोत्वविशिष्टगोबोधे बाधकाभावेन गोत्वाविषयकगोविषयकबोधस्यानावश्यकत्वात् ।। धर्माविषयकधर्मिविषयकोपस्थितेः शक्त्या लक्षणया वा शब्दाज्जननस्य अनुभवविरुद्धत्वाच्च ।।

**(चं.) यच्चपरैः 'ब्रह्मणो जीवाद्भेदे तद्रूपविकलत्वेन अल्पत्वं स्यादिति निरंकुशमहत्वासिद्धेः त्रिविधपरिच्छेदाभावरूपमहत्वार्थेन ब्रह्मपदेनैव जीवाभेदसिद्धिः' इत्युक्तं । तन्न । तेनैव घटाद्यभेदप्रसङ्गादिति ।।**

(रा.) तन्न । वस्तुपरिच्छेदाभावस्य ब्रह्मणि तत्तद्वस्तुरूपत्वस्य स्वीकारेऽपि घटादिरूपत्वप्रयुक्तजडत्वाप्रसक्तेरिति ।।

(खं.) तत्तुच्छं । चंद्रिकायां 'घटाद्यभेदप्रसङ्गात्' इति घटादिरूपत्वस्यैवापादनेन तत्प्रयुक्तजडत्वस्य अनापादनेन तत्प्रसञ्जकाभावोपपादनस्य अनुक्तोपालंभरूपत्वात् ॥

(रा.) ब्रह्मणि घटादिरूपत्वस्य घटाद्याकारेण परिणममानात्मज्ञानविषयत्वरूपत्वेन घटादिगतजडत्वाप्रसञ्जकत्वात् । अन्यथा 'यद्रजतं सा शुक्तिः' इत्यादि प्रतीतिसिद्धशुक्तिनिष्ठरजतरूपत्वेन शुक्तेः रजतवत् 'प्रातिभासिकत्वादि प्रसङ्गात्' इति यज्जडत्वप्रसञ्जकाभावोपपादनम्॥

(खं.) तदपि तुच्छं। 'यद्रजतमित्यभात् सा शुक्तिः' इत्येवप्रतीतेः सर्वानुभवसिद्धत्वेन 'यद्रजतं सा शुक्तिः' इति प्रतीतेरेवाभावात् शुक्तौ रजतरूपताया एवासिद्धेः॥ ब्रह्मणो जडभूतघटादिरूपत्वे जडत्वापादनवत् शुक्तेः प्रातिभासिकरजतरूपत्वांगीकारे प्रातिभासिकत्वापादनस्यास्मदिष्टत्वेन ब्रह्मणो जडभूतघटादिरूपत्वांगीकारे जडत्वापादने बाधकत्वाभावात्॥ ब्रह्मणि घटादिरूपत्वस्य घटाद्याकारेण परिणममानात्मज्ञानविषयत्वरूपत्वेन घटादिगतजडत्वाप्रसङ्गोक्तिरपि न युक्ता । तथाहि परिणममानात्मज्ञानविषयत्वरूपत्वेनेत्यत्र परिणममानत्वं किमात्मनो विशेषणं ज्ञानस्य वा । नाद्यः । आत्मनः निर्विकारत्वेन परिणामासम्भवात् । परिणामाङ्गीकारेऽपि जडरूपघटाद्यात्मना परिणममानत्वस्य जडरूपत्वाप्रसञ्जकत्वाभावात्। प्रत्युत जडरूपत्वप्रसञ्जकत्वाच्च। न द्वितीयः । आत्मज्ञानस्य घटाद्यात्मना परिणामस्य त्वत्प्राचीनैः कैरपि अद्वैतिभिरस्वीकारेण अपसिद्धांतापत्तेः । आत्मज्ञानस्य घटाद्यात्मना परिणामाङ्गीकारेण घटाद्यात्मना परिणममानज्ञानविषयत्वस्य ब्रह्मनिष्ठत्वेऽपि भवदभिलाषितघटादिरूपत्वासम्भवाच्च॥ आत्मज्ञानयोः परस्परं भिन्नत्वेन अन्यस्य तदात्मना परिणामः अन्यस्य तद्रूपतासंपादको नहि दृष्टः इति ॥

यद्यपि घटाद्याकारेण परिणममानात्मज्ञानविषयत्वरूपत्वेन' इत्येव रामसुब्बमुद्रापित पुस्तके वर्तते । तथापि 'घटाद्याकारेण परिणममाना-

त्माज्ञानविषयत्वरूपत्वेने'ति पाठो मदभिमतः । त्मवर्णस्य दीर्घाभावो मुद्रापकदोषायत्त इति कथञ्चित्कल्प्येत तस्मिन्पक्षेऽपि अज्ञानतद्विषयीभूतात्मनोर्भेदेन घटाद्याकारेण परिणममानाज्ञानभिन्नात्मनो घटादिरूपत्वासंभवरूपदोषः प्रागुक्तो दूरुद्धर एवेति ॥

(रा.) जीवत्वविशिष्टे चैतन्ये चैतन्यांशस्य अविद्याधीनत्वाभावेऽपि जीवत्वस्याऽऽविद्यकतया तद्विशिष्ट चैतन्यस्य जीवस्य विशिष्टरूपेणाऽऽविद्यकत्वात् विशिष्टचैतन्याकारेण परिणममानाऽऽविद्याविषयत्वरूपजीवत्वस्य ब्रह्मणि सम्भवेन ब्रह्मपदेन जीवब्रह्माभेदबोधनसम्भवादिति ॥

(खं.) तत्तुच्छं । "जीवईशो विशुद्धा चित् भेदस्तस्यास्तयोर्द्वयोः।
अविद्यातच्चितोर्योगः षडस्माकमनादयः"॥

इति त्वत्प्राचीनैः षण्णामनादित्वस्योक्तत्वेन अनादिभूतविशिष्टचैतन्यरूपजीवस्य अविद्यापरिणामत्वासंभवेन विशिष्टचैतन्याकारेण परिणाममानाविद्याविषयत्वस्यापि ब्रह्मण्यसंभवात् । 'तुष्यतु दुर्जनः' इति न्यायेन विशिष्टचैतन्याकारेण परिणममानाविद्याविषयत्वस्य ब्रह्मण्यङ्गीकारेऽपि अविद्यातद्विषयीभूतात्मनोर्भेदेन विशिष्टचैतन्यरूपेण परिणममानाविद्यान्यात्मनो विशिष्टचैतन्यरूपताऽसंभवरूपदोषस्य अपरिहार्यत्वात् । विशिष्टचैतन्याकारेण परिणममानाविद्याविषयत्वरूपपारिभाषिकजीवरूपतायाः श्रीमदानन्दतीर्थभगवत्पादाचार्यानुयायिभिरङ्गीकृतजीवब्रह्मभेदाविरुद्धत्वेन तत्सामानाधिकरण्यस्य संभवेन अस्मदप्रतिपक्षत्वात् । जीवत्वस्य आविद्यकतायाः भामतीकारेणैव *सूत्रभाष्यव्याख्यानावसरे दूषितत्वाच्चेत्यलं विस्तरेण ॥

(चं.) किंच निरंकुशमहत्वार्थं ब्रह्मणः सर्वात्मकत्वे अल्पदेशादधिकदेशे अल्पगुणादधिकगुणे च महत्वबुद्धिवत् एकात्मकाद्गगनादितः अनेकात्मकराश्यादौ महत्वबुद्धिः स्यादिति ॥

* ब्रह्मसू १. ४. ३.

(रा.) तन्न । ब्रह्मणोऽनेकात्मकत्वस्य अनेकात्मना परिणममानाविद्याविषयत्वरूपत्वात् माषराशौ तदभावेन निरतिशयमहत्वबुद्ध्यापादनासाङ्गत्यादिति ॥

(खं.) तत्तुच्छं । अविद्यात्मनोर्भिन्नत्वेन अनेकात्मना परिणममानाविद्याविषयत्वस्य आत्मनोऽनेकात्मकत्वासंपादकत्वादिति पूर्वोक्तदोषलंघनाजंघालुत्वात् ॥

(चं.) किंच परमते अपरिच्छेदस्य ब्रह्मानन्यत्वे बृंहति धात्वर्थस्य भावेऽपि प्रत्ययार्थाभावेन अपरिच्छिन्नत्वासिद्धिर्ब्रह्मण इति ॥

(रा.) तन्न । अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वमेव । बृहधातूत्तर प्रत्ययस्यापि आश्रय एवार्थः । अत्यन्ताभेदे आश्रयाश्रयिभावः "स्वे महिम्नि प्रतिष्ठितः" इत्यादाविव संभवतीति सिद्धान्ते दोषाभावादिति ॥

(खं.) तत्तुच्छं । लोके घटे घटाधारत्वादर्शनेन अभेदेऽपि आश्रयाश्रयिभावनिर्वाहार्थं वस्तुस्वभावरूपविशेषस्यांगीकार्यत्वप्राप्त्या निर्विशेषब्रह्मेतिमतस्य हानेः 'मध्वमते ब्रह्मण इव ज्ञानानंदादिगुणैर्जीवस्य अत्यन्ताभेदस्वीकारात् मुक्तिदशायां ज्ञानानंदादिगुणानां मुक्तस्य च आश्रयाश्रयिभावानुपपत्त्या ब्रह्मवन्मुक्तोऽपि निर्गुणः स्यात्' इत्यादिभिः अत्यन्ताभेदे आश्रयाश्रयिभावनिषेधकैः स्वीयवाक्यैरेव विरुद्धत्वाच्च ॥

(चं.) किंच वस्तुतोऽल्पे सत्येव तन्निरूपितमहत्वस्य वास्तवत्वमिति ब्रह्मशब्देनैव सद्वितीयत्वमिति ॥

(रा.) तन्न । महत्वनिरूपकतावच्छेदकं च अल्पत्वमात्रं । न तु पारमार्थिकत्वविशिष्टाल्पत्वं । गौरवात् । तथाच अपारमार्थिकाल्पत्वमादायापि महत्वं बोधयता पारमार्थिकद्वितीयरूपनिरूपकासिद्ध्या ब्रह्मणः सद्वितीयत्वापादनासंभवादिति ॥

(खं.) तत्तुच्छं। महत्वनिरूपकतावच्छेदकत्वं अल्पत्वमात्र-मिति वदता त्वयापि अल्पद्वितीयवस्तुज्ञापकत्वं ब्रह्मशब्दस्यांगीकृतमेव। अल्पत्वविशिष्टवस्तुनः कल्पनामात्रेण ततो महत्वांगीकारे अत्यंताणुत्वेन स्वीकृतानां भूतसूक्ष्मादीनामपि कल्पिताल्पत्वविशिष्टवस्त्वपेक्षया महत्वं स्यादिति महत्वनिरूपकस्य सत्वमावश्यकमेव ॥

न च ब्रह्मभूतसूक्ष्मोभयगतमहत्वनिरूपकत्वेनाभिमतयोः अल्पव-स्तुनोः व्यावहारिकत्वप्रातिभासिकत्वाभ्यां वैलक्षण्यात् नोक्तातिप्रसंग इति वाच्यं। व्यावहारिकस्यापि ज्ञानबाध्यत्वाज्ञानकल्पितत्वादिना प्रातिभासिकवैलक्षण्याभावात्। प्रकारांतरेण वैलक्षण्यस्य उक्ताति-प्रसङ्गावारकत्वात् ॥ इत्थञ्च महत्वनिरूपके पारमार्थिकसत्वस्यैवा-वश्यकत्वेन तेन पारमार्थिकसता सद्वितीयत्वापत्तेर्दुर्वारत्वादिति ॥

(चं.) अद्वैतीनां मते ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासेति कर्मणि षष्ठीसमासानुपपत्तिः। विचारजन्यज्ञानाकर्मणो ब्रह्मणः विचारकर्मत्वायोगात् विचारजन्यज्ञानविषयत्वांगीकारे तद्-व्यापकफलव्याप्यत्वस्यापि प्राप्त्या फलव्याप्यत्वरूपदृश्यत्वस्य मिथ्यात्वाभाववति ब्रह्मणि विद्यमानत्वेन दृश्यत्वानुमानस्य व्यभिचारापत्तेः ब्रह्मणो निवर्तमानं फलव्याप्यत्वं स्वव्याप्यं विचारजन्यज्ञानकर्मत्वं व्यावर्तयत् विचारकर्मत्वमपि व्यावर्त-यतीति ॥

(रा.) फलविषयत्वाभावेऽपि ब्रह्मणि विचाराख्यवृत्तिविषय-त्वाङ्गीकारात्। न च ब्रह्मणोऽपरोक्षवृत्तिविषयत्वेन तादृशवृत्त्यव-च्छिन्नचैतन्यरूपफलविषयत्वमापादयितुं शक्यं। स्वात्मनि क्रिया-विरोधेन चैतन्यरूपे ब्रह्मणि उक्तचैतन्याख्यफलविषयत्वायोग्यतया तदापादनासंगतेः ॥ न च तर्हि व्यापकं फलविषयत्वं निवर्तमानं

स्वव्याप्यं वृत्तिविषयत्वमपि ब्रह्मणि व्यावर्तयतीति शंक्यं। ब्रह्मणि व्यभिचारेण व्यापकत्वस्यैवासिद्धेरिति ॥

(खं.) तत्तुच्छं। विचाराख्यवृत्तिविषयत्वांगीकारे तद्व्यापकफलविषयत्वापत्तेर्दुर्वारत्वेन 'फलविषयत्वाभावेऽपि' इत्याद्युक्त्यसंगतेः ॥

(रा.) न च स्वात्मनि क्रियाविरोधेन चैतन्यरूपे ब्रह्मणि उक्तचैतन्याख्यफलविषयत्वायोग्यतया ब्रह्मणोऽपरोक्षवृत्तिविषयत्वेन तादृशवृत्त्यवच्छिन्नचैतन्यरूपफलविषयत्वापादनासंगतिरिति वाच्यं ॥

(खं.) "स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम" इति गीतातद्भाष्ययोरेकस्यैव स्ववेत्तृत्वस्ववेद्यत्वस्ववेदनसाधनत्वनिर्देशदर्शनेन ज्ञानरूपस्याप्यात्मनो ज्ञानक्रियाश्रयत्वं संभवति ॥१ 'कर्मकर्तृव्यपदेशाच्च' इति सूत्रन्तु ज्ञानक्रियाव्यतिरिक्तक्रियानिरूपितकर्तृकर्मणोः भेदपरं ॥ 'अन्यथा उदाहृतगीतातद्भाष्यविरोधापत्तेः' इति शांकरभाष्यगांभीर्यनिर्णयाख्ये स्वकृतग्रन्थे स्वेनैव स्वात्मनि क्रियाया अङ्गीकारात् ॥ ब्रह्मणोऽपरोक्षवृत्तिविषयत्वेन तादृशवृत्त्यवच्छिन्नचैतन्यरूपफलविषयत्वापादनस्य सुशकत्वेन फलविषयत्वस्याभावांगीकारे तद्व्याप्याया अपरोक्षवृत्तिविषयताया अभावस्यावश्यकत्वेन विचाराकर्मत्वोक्तेर्युक्तत्वात्॥

न च 'ब्रह्मणि व्यभिचारेण फलविषयत्वापरोक्षवृत्तिविषत्वयोः व्याप्यव्यापकभावाभावेन फलव्याप्यत्वं ब्रह्मणो व्यावर्तमानं अपरोक्षवृत्तिविषयत्वं न व्यावर्तयति' इति वाच्यं। ब्रह्मण्येव फलविषयत्वस्य आपाद्यतया आपाद्यधर्मिणि व्यभिचारचोदनस्य तर्कस्वरूपाज्ञानविजृंभितत्वात् ॥

(रा.) यत्तु कर्मणि षष्ठीपक्षे प्रमाणादि परिकरविशिष्टब्रह्मणो जिज्ञासाकर्मत्वसंभवेन प्रमाणादि जिज्ञासानामपि शाब्दत्वसंभवात् आर्थि

१ ब्रह्मसूत्र

कत्वोक्तिरयुक्तेति । तन्न । जिज्ञासाकर्मसमर्पकब्रह्मशब्देन शक्त्या केवल-ब्रह्मस्वरूपस्यैव बोधनेन प्रमाणादिविशिष्टब्रह्मबोधकत्वे लक्षणापत्त्या च स्वरूपस्यैव जिज्ञास्यत्वेन प्रतिज्ञातत्वावगतेः प्रमाणादि प्रतिज्ञाया आर्थिकत्वोक्तेरेव युक्तत्वादिति ॥

(खं.) तत्तुच्छं । अनुक्तोपालंभरूपत्वात् ॥

(चं.) यत्तु पञ्चपादीविवरणयोरुक्तम् अवयवशक्त्या ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे लक्षणया प्रयोगप्रत्ययोरूपपत्तौ न शक्त्यंतरकल्पनं । अनन्यथासिद्धकार्यांतराभावादिति जिज्ञासाशब्दो विचारे लाक्षणिको न तु रूढ इति । तन्न। यतः ॥

जिज्ञासाशब्दतो हीच्छामज्ञात्वैव विजानते ।
विचारं लौकिकास्तेन तत्रायं रूढ इष्यते ॥
अन्यथा मण्डपादीनां गृहादौ स्यान्न रूढता ।
गङ्गाशब्दात्तु तीरादि तद्धीपूर्वं प्रकाश्यते ॥

तथाहि— जिज्ञासाशब्दात् मीमांसाशब्दादिव इच्छा-प्रतीत्यभावेऽपि विचारः प्रतीयते । अन्यथा बुभुत्सापदादपि विलंबेन तद्धीसंभवात् नियमेन विचारे जिज्ञासापदं न प्रयुज्येत। स्वीकृतश्च त्वयाऽपि 'विचारसाध्यज्ञानेच्छा जिज्ञासाशब्दात्प्रतीयते। नोपदेशमात्रसाध्यज्ञानविषया' इति वदता विचारप्रतीतेः इच्छाप्रतीतिपूर्वकत्वाभावः ॥ एवञ्च 'तद्विजिज्ञासस्व' इत्यादौ अस्मिश्च सूत्रे विधौ न लक्षणा । अन्यथा लोके मंडपशब्दस्य मण्डपानकर्तृत्वरूपयौगिकार्थसंबन्धाद्गृहविशेषे प्रवीणकुशलादिशब्दानाञ्च प्रकृष्टवीणावदादिगतप्रागल्भ्यरूपगुणयोगादेव

निपुणे वाजिशब्दस्य च वाजशब्दवाच्यान्नवत्संबन्धादेवाश्वजातौ प्रयोगसंभवाद्रूढिर्न स्यात् ॥ वेदे च 'अपरिमितं देयं' इत्याधान-प्रकरणे श्रुतस्य अपरिमितशब्दस्य परिमितान्यरूपमुख्यार्थ-निष्ठानेकत्वगुणयोगादेव बहुत्ववति प्रयोगसंभवाद्रूढिर्न स्यात् । उक्ता च रूढिः षष्ठे ॥

न च प्रवीणादिशब्दे इष्टापत्तिः । यौगिकार्थप्रतीत्य-भावेऽपि नैपुण्यप्रतीतेः ॥ न चैवं "वैश्वदेवेन यजेत" इत्यादौ "वैश्वदेवीमामिक्षां" इति वाक्यविहितयागे यौगिकस्य वैश्वदेव-शब्दस्य वैश्वदेवावैश्वदेवसमुदाये गंगापदादेस्तीरादौ लक्षणा न स्यात् । किंतु रूढिरेव स्यादिति वाच्यं । तत्र मुख्यार्थप्रतीति-पूर्वकमेव इतरप्रतीतेः प्रकृते च तदभावादित्युक्तत्वात् । किंच त्वन्मते ज्ञानसामान्येच्छायाः काप्यभावात् अपरोक्षेच्छायां च जिज्ञासाशब्दस्य अवयवशक्त्यभावात् समुदायशक्तेः कल्प्यत्वा-विशेषे विचारे समुदायशक्तिः अपरोक्षेच्छायां च लक्षणा इत्येव किं न स्यात् ॥ एतेन 'जिज्ञासाशब्दवाच्यया इच्छया आक्षिप्तो विचारः इह विधीयते' इति विवरणाभिप्रेतं मतांतरं निरस्तं ॥ विचाराक्षेपस्य भामतीनिरासावसरे निराकरिष्यमाणत्वाच्च ॥ तस्माज्जिज्ञासाशब्दो विचारे रूढ एवेति ॥

(रा.) तन्न । शक्तिग्राहककोशव्याकरणादिप्रमाणेषु जिज्ञासा-शब्दस्य विचारे शक्त्यनुक्तेः ॥ माध्वव्यतिरिक्तप्रामाणिकमहाजनानां विचारे जिज्ञासाशब्दस्य प्रयोगप्राचुर्याभावेन तत्र शक्त्यसिद्धेश्चेति ॥

(खं.) तत्तुच्छं । विचारे जिज्ञासाशब्दस्य 'अथातो धर्म-जिज्ञासा' 'अथातो ब्रह्मजिज्ञासा' 'जिज्ञासितं सुसंपन्नं' इत्यादिषु महा जनाग्रेसराणां प्रयोगेण तस्य शक्तिग्राहकप्रमाणान्तर्गतया शक्तिग्राहक-

प्रमाणाभावादित्युक्तेरसङ्गतत्वात् ।। जिज्ञासाशब्दावयवशक्तेः अर्थान्तरे संभवमात्रेण विचाररूपार्थेऽनेकत्र प्रयोगेऽपि लक्षणास्वीकारे मंडप, प्रवीण, कुशल वाज्यादि शब्दानामपि मंडपानकर्तरि प्रकृष्टवीणावति कुशच्छेत्तरि अश्ववति अवयवार्थसंभवेन मंटपादिरूपार्थे शक्तिर्न स्यात् इत्यादि चंद्रिकोक्तदूषणानां दुरुद्धारत्वाच्च ।।

(चं.) भामत्यां तु न जिज्ञासा नाम विचारः । इच्छायां सन्विधानात् ।। न च शास्त्रप्रवृत्त्यंगविषयप्रयोजनसूचनेन स्वार्थपरत्वोपपत्तेः विचारे लक्षणा युक्ता । एवञ्च मुमुक्षानंतरं ब्रह्मजिज्ञासा भवितुं युक्तेत्येव श्रौतोऽर्थः । विचारस्त्वार्थिकोऽर्थः। ज्ञातुमिच्छा हि संदिग्धे विषये निर्णयाय भवति । निर्णयश्च विचारसाध्य इति इच्छानिमित्तेन विचाराक्षेपात् ।। आर्थिकेचास्मिन्नर्थे कर्तव्यपदाध्याहारात् इत्युक्तम् । तदपि न। विचारे रूढेरुक्तत्वात्।। व्याकरणस्य च साधुत्वमात्रपरत्वात् । उक्तं हि

यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते ।
स्वरसंस्कारमात्रार्था तत्र व्याकरणस्मृतिः ।। इति

भवतीत्यध्याहारस्य स्वतः सिद्धत्वेऽपि अनुवादत्वप्रसंगात्। 'तद्विजिज्ञासस्व' इति श्रुत्यनुसारिणा च सूत्रेण इच्छाया अविधेयत्वेन लक्षणयाऽपि विचारस्य विधेयत्वात् । विषयाद्यभावात् इच्छाभावं वदंतं प्रति इच्छया विषयादिसूचनोक्त्ययुक्तेश्च । किंचैवंसति तावन्मात्रेण नैराकांक्ष्यात् नार्थिकविचारकर्तव्यतापरता युक्ता । शास्त्रारंभवक्त्वस्य फलत्वेनैव सिद्धेः।। कथञ्च विचारं विना इच्छाया अनुपपत्तिः ।। येन विचाराक्षेपकता । नहि कारणस्य कार्यं विना अनुपपत्तिः।। नचेच्छा विचार-

सामग्री । फलेच्छायां सत्यामपि साधनाननुष्ठानदर्शनात् । तस्माद्भ्रामत्युक्तमयुक्तमिति ॥

(रा.) तन्न जिज्ञासापदे विचारशक्तत्वस्य पूर्वमेव निराकृतत्वात्। आक्षेपमात्रेण विचारलाभे विचारे जिज्ञासापदलक्षणोदयसंभवात्। आक्षेपलब्धस्य विचारस्य आपातप्रतीतार्थनिर्णायकतया सिद्धस्य विध्ययोग्यत्वत् । विचारकर्तव्यत्वस्य अनवधाननिवृत्त्यर्थत्वेन विचारावधानार्थप्रसायिनः सूत्रस्य अनुवादकत्वाप्रसक्तेः । जिज्ञासापदस्य विषयसूचकत्वेन सफलतया विचारकर्तव्यताया अनवधाननिवृत्तिप्रयोजनकत्वेन विचारकर्तव्यत्वतात्पर्यकत्वस्यावश्यकत्वादिति ॥

(खं.) तत्तुच्छम् पूर्वमेव जिज्ञासाशब्दे विचारशक्तेः साधितत्वात् । शक्त्यनंगीकारेऽपि लक्षणया विचारपरत्वोपपत्तेः । आक्षिप्तस्य वाक्यार्थेऽनन्वयेन जिज्ञासायाः कर्तव्यताबोधके 'तद्विजिज्ञासस्व' इति श्रुत्यनुसारिसूत्रे इच्छायाः कर्तव्यत्वासंभवेन शक्त्या वा लक्षणया वा जिज्ञासापदेन विचारबोधस्यावश्यकत्वात् ॥

यत्वित्यादिग्रन्थे किंच विचारे कर्तव्यत्वाध्याहारस्यानुवादत्वप्रसंगः । तस्मिन् कर्तव्यत्वस्य स्वत एव सिद्धत्वात्' इत्ययमनुक्तानुवादः, चन्द्रिकायां अस्य वाक्यस्य वा एतादृशार्थप्रतिपादकवाक्यांतरस्य वा अभावात् ॥ अत एव तन्नेत्यादिग्रन्थे 'आक्षेपलब्धस्य' इत्यादिः 'विचारकर्तव्यत्वतात्पर्यकत्वस्यावश्यकत्वात्' इत्यंतो ग्रन्थः अनुक्तोपालंभरूपत्वादुपेक्ष्य इति ॥

(रा.) यत्तु विषयाभावात् विचारेच्छा नोत्पत्तुमर्हतीति वदन्तं प्रति विचारेच्छया विषयसूचनोक्त्ययोगेऽपि ब्रह्मज्ञानेच्छया तत्सूचनोक्त्युपपत्तेः ॥ सर्वत्र कारणत्वावच्छेदेन कार्याक्षेपकत्वनियमाभावेऽपि जिज्ञासायां जातायां विचारस्य सर्वत्र क्रियमाणत्वप्रतीतेः जिज्ञासारूपकारणविशेषस्य विचारविशेषरूपकार्याक्षेपकत्वस्य अप्रत्यूहत्वात् । अत

एवोक्तसाधनचतुष्टयवत्पुरुषनिष्ठब्रह्मजिज्ञासा ब्रह्मविचारं प्रति पुष्कलकारणमेव । उक्तविशिष्टेच्छासत्वे विचारस्य नियमेनोपलब्धेः' इति ॥

(खं.) तदपि तुच्छं । मोक्षांशे सन्देहसत्वे तद्ज्ञानेच्छायाः एवासम्भवेनेत्यादिना पूर्वं ब्रह्मज्ञानेच्छाया असम्भवस्योक्तत्वात् । भामतीकृता जिज्ञासाक्षेपपूर्वं विचारस्याक्षिप्तत्वादित्युक्तत्वाच्च । कारणसत्तामात्रेण कार्यनियमाभावात् जिज्ञासारूपकारकसद्भावेऽपि केवलायाः उक्तसाधनचतुष्टयवत्पुरुषनिष्ठजिज्ञासायाः सामग्रीत्वाभावेन जिज्ञासायां जातायां विचारस्य नियमेन क्रियमाणत्वाप्रतीतेः सर्वानुभवसिद्धत्वाच्च जिज्ञासाया विचाराक्षेपकत्वं न संभवत्येव । संभवे वा शक्त्या लक्षणया वा पदबोध्यस्यैव वाक्यार्थेऽन्वयस्य शास्त्रे दृष्टत्वेन, शब्दकार्यस्य वा शब्दज्ञाप्यस्य वा वाक्यार्थे अन्वयस्यादृष्टत्वेन, जिज्ञासाया ज्ञाप्यविचारस्य वाक्यार्थे अन्वययोग्यताया एवाभावेन, वाक्यार्थेऽनुप्रविष्टार्थबोधक कर्तव्यपदाध्याहारस्यायुक्तेः मुमुक्षानंतरं ब्रह्मजिज्ञासा भवितुं युक्तेत्यनेनैव नैराकांक्ष्यात् कर्तव्येत्यादिपदाध्याहारप्रयोजकाकांक्षाया अभावाच्च॥

(चं.) एतेन, कौमुद्यां— "यस्मादधिकारिणां ब्रह्मज्ञानेच्छा संपन्ना तस्माद्ब्रह्मविचारः कर्तव्य इति अवान्तरवाक्ये श्रुत्या इच्छापरत्वेऽपि, महावाक्ये लक्षणया विचारपर इति उभयपरो जिज्ञासाशब्दः अतएव विचारे लाक्षणिकोऽपि विषयादिसूचकः" इति यदुक्तम् तदपि निरस्तम् । युगपत् वृत्तिद्वयप्रसंगात् ॥ उक्तरीत्या विषयप्रयोजनयोः अन्यथैव सूचनसम्भवेन, जिज्ञासाशब्दस्येच्छापरत्वे मानाभावाच्च ॥ अध्याहारसापेक्षावांतरवाक्यभेदादिकल्पनानुपपत्तेश्च ॥ तस्माज्जिज्ञासाशब्दो विचारपरः । नेच्छापर इति ॥

(रा.) तन्न । "अथातो धर्मजिज्ञासा" इत्यत्र धर्मशब्दस्य धर्मे शक्तिः, अधर्मे लक्षणा च स्वीकर्तव्या उपादानार्थं धर्मस्य जिज्ञा-

सावत्, परिहारार्थं अधर्मस्यापि जिज्ञास्यत्वावश्यकत्वात्" इति कौमारिलवार्तिकरीत्या युगपद्वृत्तिद्वयस्वीकारस्य सति प्रयोजने अदुष्टत्वात् । लोकेऽपि 'गंगायां मत्स्यघोषौ' इत्यादौ वृत्तिद्वयस्य संप्रतिपत्तेः ॥ युगपद्वृत्तिद्वयस्वीकारे दोषोक्तिस्तु युगपदेकजातीयवृत्तिद्वयविषया ॥ तथा च ज्ञानेच्छारूपहेतोः विचारकर्तव्यत्वस्य च लाभार्थं अध्याहारस्यावश्यकत्वेन अध्याहारेऽनुपपत्त्यभावात् ॥ ज्ञा धातोर्ज्ञानार्थे सन् प्रत्ययस्य च इच्छार्थे व्याकरणस्यैव प्रमाणत्वेन मानाभावादित्युक्त्यसंगतेरिति ॥

(खं.) तत्तुच्छं युगपद्वृत्तिद्वयस्वीकारस्य सति प्रयोजनेऽदुष्टत्वादिति भवदुक्तरीत्यैव, प्रयोजने सत्येव युगपद्वृत्तिद्वयस्य स्वीकार्यत्वेन उक्तरीत्या विषयफलयोरन्यथैव सूचनसम्भवेन' प्रयोजनान्तरस्य चाभावेन युगपद्वृत्तिद्वयस्वीकारस्य दुष्टत्वात् ॥ 'इच्छापरत्वे मानाभावात्' इति वाक्येन इच्छातात्पर्यकत्वे ज्ञापकाभाव उक्तः । न तु अवयवशक्त्यभावे प्रमाणाभावः । अन्यथा 'इच्छावाचकत्वे' इत्यनुक्त्वा, इच्छातात्पर्यकत्वार्थकायाः 'इच्छापरत्वे' इत्युक्तेः, 'विषयफलयोरन्यथैव सूचनसंभवेन' इति हेतूक्तेश्च असाङ्गत्यापत्तेः ॥ अतः 'ज्ञाधातोर्ज्ञानार्थे सन् प्रत्ययस्य च इच्छार्थे व्याकरणस्यैव प्रमाणत्वेन मानाभावादित्युक्त्यसङ्गतेः, इत्युक्तेः चंद्रिकावाक्यार्थाज्ञानविजृंभितत्वात् ॥ त्वन्मते ज्ञानेच्छायाः असंभवस्योक्तत्वात्,ज्ञानेच्छारूपहेतुलाभस्यानावश्यकत्वाच्च अध्याहारस्यानावश्यकत्वेन अध्याहारसापेक्षावांतरवाक्यभेदादिकल्पनापत्तेर्दुर्वारत्वाच्च ॥

(चं) यत्तु परैः अस्य शास्त्रस्य पूर्वतंत्रेण गतार्थत्वमाशंक्य 'तत्र कार्यनिष्ठो वेदभागो विचारितः। इह तु वस्तुतत्त्वनिष्ठो विचार्यते' इति अगतार्थत्वमुक्तं । तन्न । इह अतत्त्वभूतोपास्यसविशेषब्रह्मविचारस्य उपासनापादे तद्विधिविचारस्य चायोगात् ॥ न चोपासना मन्मत इव त्वन्मते मोक्षसाधनं । येन फलसाधनादियुक्तब्रह्मविचारप्रतिज्ञानात् तद्विचारः संग-

च्छेत ॥ त्वन्मते ह्युपासनाया मानसत्वेन विद्यासाम्येऽपि अनित्यफलत्वात् हेयत्वाच्च तद्वाक्यानां अतत्वावेदकत्वात् उद्गीथाद्युपासनानां कर्माश्रितत्वाच्च 'समुद्रं मनसा ध्यायीत' इत्यादिवाक्यविहितसमुद्रध्यानादिवत् कर्मकांड एव उपासनाया- विचारो युक्तः। निर्विशेषज्ञानार्थत्वादुपासनायाःइह विचारे च यागादिनित्यकर्मणामपि तदर्थत्वात्, मानससंकल्परूपतया उपासनावत् विद्यासाम्याच्च तद्विचारोपीहैव स्यात् ॥ तस्मा- त्सर्वस्यापि वेदस्य ब्रह्मपरत्वात् सर्वोपीहैव विचार्यः। कर्म- देवमीमांसयोः वेदैकदेशावांतरतात्पर्यविषयकर्मदेवताविचार इति ॥

(रा.) तन्न। ब्रह्मज्ञानवत् उपासनस्य मानसत्वाविशेषात् संगतिविशेषलोभेन अस्मिन् शास्त्रे उपासनाविधिविचारोपपत्तेरिति ॥

(खं.) तत्तुच्छं। 'समुद्रं मनसा ध्यायीत' इति ध्यानविशेषस्य पूर्वतंत्रे विचारितत्वेन ब्रह्मोपासनस्यापि ध्यानविशेषतया मानसत्व रूपव्यापकधर्मेण ब्रह्मज्ञानात् उपासनस्य अविशेषापेक्षया, मानसत्वादपि व्याप्येन ध्यानत्वरूपधर्मेण समुद्रध्यानादितः अविशेषस्य सद्भावेन ब्रह्मोपासनस्य पूर्वतंत्रे अत्यंतसंगतिसंभवात् तत्रैव विचारस्यावश्य- कत्वापत्तेः ॥ वस्तुतत्वनिष्ठवेदभागस्य इह विचार्यत्वे सविशेषभूता तत्वरूपब्रह्मविचारायोगादिति दोषस्यापरिहाराच्च ॥

(रा.) नच, 'अस्मिन् शास्त्रे मानसस्य ब्रह्मज्ञानस्य प्राधान्येन प्रतिपादनवत् पूर्वतंत्रे बृहति प्रस्तूयमाने 'समुद्रं मनसा ध्यायीत' इत्युक्त- ध्यानस्य प्राधान्येनाप्रतिपादनात् प्राधान्येन प्रतिपादितब्रह्मज्ञानेन मान- सत्वसामान्यात् ब्रह्मोपासनस्यात्रैव संगतेर्न्याय्यत्वादिति वाच्यं ॥

(खं.) एतच्छास्त्रे प्रधानप्रतिपाद्येन ब्रह्मज्ञानेन साधारणेन

मानसत्वरूपैकधर्मेण साम्यात् उपासनस्य एतच्छास्त्रे प्रतिपाद्यत्वे, पूर्वतंत्रे प्रधानप्रतिपाद्येन कर्मविचारेण अतत्वविषयत्वानित्यफलकत्वादिबहुधर्मेण साम्यसंभवात् सविशेषब्रह्मविचारस्य उपासनाविधिविचारस्य च पूर्वतंत्रे अतितरां संगतत्वेन तत्रैव प्रतिपादनप्रसंगस्य दुरुद्धरत्वात् ।। एतच्छास्त्रप्रतिपाद्यत्वेन तात्पर्याविषयाणां अनेकेषां अत्र प्रतिपाद्यात् कैश्चिद्धर्मैरविशेषेण तेषामपि एतच्छास्त्रे प्रतिपादनप्रसक्तेश्च ।।

(रा.) यत्तु 'न च पुनरावर्तते' इत्यादि श्रुतिसिद्धं अपुनरावृत्ति रूपमोक्षविशेषं प्रति साक्षादेव दहराद्युपासनस्य हेतुत्वात् मोक्षशास्त्रे अस्मिन्नेव प्रधानभूतफलांशमादाय संगत्युपपत्त्या अत्रैव ब्रह्मोपासना विचारस्य न्याय्यत्वात् उद्गीथाद्युपासनं उपासनत्वसाम्यात् आनुषंगिकतया अत्र विचार्यत इति ।।

(खं) तदपि तुच्छं । 'तमेवं विद्वानमृत इह भवति, इत्यादि श्रुत्या, ज्ञानस्यैवापुनरावृत्तिरूपमोक्षं प्रति कारणत्वावगमेन शांकरे मते उपासनस्य साक्षान्मोक्षजनकत्वानंगीकारेण च प्रधानभूतफलांशमादाय मोक्षशास्त्रे संगत्युक्तयसंभवात् ।। उद्गीथाद्युपासनविचारस्य एतच्छास्त्रासंगतत्वस्य त्वया स्वीकृतप्रायत्वेन अत्र कथनस्यायुक्तत्वात् ।। दहराद्युपासनाया एव अत्रासंगतत्वेन तादृशदहराद्युपासनासाम्येन उद्गीथोपासनायाः संगतत्वकथनस्यात्यंतमयुक्तत्वात् ।। प्रमेयत्वसाम्येन आनुषंगिकतया सर्वस्यापि अत्रैव विचार्यताप्रसंगाच्च ।।

"सव वेदा यत्पदमामनंति" "वेदैश्च सर्वैरहमेव वेद्यः" "सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राणऋच इत्येव विद्यात् ।। इत्यादिश्रुतिस्मृत्यादिभिः ब्रह्मण एव सर्ववेदप्रतिपाद्यत्वावगमा त 'कार्यनिष्ठो वेदभागः पूर्वमीमांसायां विचारितः वस्तुतत्वनिष्ठवेदभागः इह विचार्यते' इति विभागेन गतार्थताशंकानिराकरणस्यायुक्तत्वाच्च ।। अद्वैत्यभिमते निर्गुणे ब्रह्मणि पदानां शक्त्यभावेन शक्यसंबंधितया स्वरूपेण च ज्ञात एव लक्षणाप्रवृत्तेः असंगस्य ब्रह्मणः शक्यसंबंधित्वा-

भावेन अज्ञेयत्वेन स्वरूपेण च ज्ञातत्वाभावात् लक्षणावृत्तेरपि अप्रसक्त्या वेदांतानां वस्तुतत्वनिष्ठत्वासंभवाच्च ॥

(चं.) परैः 'ब्रह्मणो जिज्ञास्यत्वार्थमेव प्रत्यगर्थे अहमस्मीति प्रत्यक्त्वरूपेण सामान्येन प्रतिपत्तिः चार्वाकादीनां अहमर्थे देहेंद्रियमनः शून्यब्रह्मत्वादिविप्रतिपत्तेः विशेषविप्रतिपत्तिश्च' इत्युक्तं । तद्व्यधिकरणं ॥ प्रत्यगर्थ एव ब्रह्मेति चेत् । अस्तु तावत् । तथापि न तावत् बिंबं ब्रह्म जिज्ञासाधर्मि, प्रतिबिंबे तु सामान्यप्रतिपत्यादीति युक्तं । प्रतिबिंबमात्रे विप्रतिपत्या बिंबे जिज्ञासाऽदर्शनेन ब्रह्मोद्दिश्य प्रत्यगर्थाभेदादिविधानाय ब्रह्मण्येव तयोर्वक्तव्यत्वात् ॥ नापि देहत्वादिना विप्रतिपन्नप्रतिबिंबः प्रत्यगर्थ एव जिज्ञासाधर्मी, प्रतीचो ब्रह्मत्वेन जिज्ञासा च ब्रह्मजिज्ञासेति युक्तं। लोके निश्चतेन धर्मिणेव अनिश्चितेन प्रकारेण विशिष्य विचार पदाप्रयोगेन सूत्रेऽश्रुतप्रत्यक्पदकल्पनापातात्। 'धर्मजिज्ञासा' इत्यादाविव श्रुतस्य ब्रह्मपदस्य कस्य कथं विचार इति प्रथमाकांक्षितप्रधानधर्मिपरत्वसंभवे तत्यागेन तद्विपरीतप्रकारपरत्वायोगेन श्रुतहानापाताच्च ॥ विरुद्धांशत्यागेन मुखमात्रस्येव चिन्मात्रस्यैवाभेदस्वीकारेण विशिष्टयोर्बिंबप्रतिबिंबयोः अभेदाभावेन ब्रह्मा भेदविधानाय तस्योद्देश्यत्वासंभवाच्च। किंच धर्मिण्यतदारोपनिवृत्त्यर्थत्वात् लक्षणस्योत्तरसूत्रे प्रत्यगर्थ एव ब्रह्मत्वेन लक्षणीयं स्यात् । नहि वस्तुतः पुरुषे इदंत्वादिना ज्ञायमाने स्थाणुत्वाद्यारोपः करचरणादिमान् पुरुषः पुरुषलक्षणोक्त्या निवर्तते । किंतु अयं पुरुष इत्याद्युक्त्या । न च जिज्ञासुना प्रतीचो ब्रह्मत्वं निश्चितं। येन ब्रह्मणि लक्षिते प्रतीचि ब्रह्मलक्षणविरोध्याकारो मिथ्येति ज्ञायेत ॥

नापि लक्षणं प्रतीचोऽसाधारणधर्मतया तेन निश्चितं। येन ब्रह्मणि तत्कथनमुखेन ब्रह्माभेदो ज्ञाप्येत। त्वत्पक्षेऽपि "शारीरश्चोभयेपि हि भेदेनैनमधीयते" "प्राणभृच्च" "अधिकं तु भेदनिर्देशात्" इत्यादौ जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात्। अत एवोभयानुगतचिन्मात्रे तत्वंपदलक्ष्ये विप्रतिपत्तिः जिज्ञासाधर्मि तु बिंबं ब्रह्म चिन्मात्रमेव इति प्रत्युक्तं। विशेष्यमात्रे विप्रतिपत्त्याविशिष्टधर्मिकविचारादर्शनात्। विशिष्टस्य मुमुक्षुभिरविचार्यत्वाच्च। चिन्मात्रे देहत्वादिविप्रतिपत्तेरभावाच्च। सौत्रब्रह्मशब्दास्वारस्याच्च ॥ अथ जिज्ञासाधर्मिणि ब्रह्मण्येव प्रतीचोऽन्यत्र वेति विप्रतिपत्तेर्न वैय्यधिकरण्यं तर्हि भवदीयभाष्ये इह सूत्रे प्रतीचि देहत्वादिविप्रतिपत्युक्तिः उत्तरसूत्रे जीवाद्भेदकस्य लक्षणस्योक्तिश्चायुक्ता।.................किच, ज्ञातं सामान्यतोऽज्ञातं विशेषेण विचार्यते। ज्ञाताज्ञातविभागस्तु निर्विशेषेन युज्यते॥ उक्तं चानुव्याख्याने "इदमित्थमितिज्ञानं जिज्ञासायाः प्रयोजनं इति ॥

(रा.) तन्न। ऐक्यस्य चिन्मात्रस्यैव विप्रतिपत्ति धर्मित्वात्। तथैव भामतीकल्पतर्वोरुपपादनात्। विशेष्यविप्रतिपत्यापि विशेष्यप्रतीत्यनुकूलत्वेन जीवत्वेशत्वविशिष्टविचारस्यापि न्याय्यत्वात्। मुमुक्षुभिरपि उभयानुगतचिन्मात्रज्ञानार्थं विशिष्टस्यैव प्रथमं विचार्यत्वात्। वस्तुतोऽहमालंबने चिन्मात्र अज्ञानवशात् देहत्वेंद्रियत्वमनस्त्वक्षणिक विज्ञानत्वशून्यत्वविप्रतिपत्तेः सम्यक् संभवाच्च। सौत्रब्रह्मपदस्य निर्विशेषचिन्मात्रे स्वारस्यस्योपपादितत्वेन विप्रतिपत्तिधर्मिपरत्व संभवाच्चेत्यलमिति ॥

(खं.) तत्तुच्छं। जीवानुयोगिकब्रह्मप्रतियोगिकस्य ब्रह्मानुयोगिकजीवप्रतियोगिकस्य वा ऐक्यस्य अनेकपदार्थघटितत्वेन, अनेकपदार्थाऽ-

घटिताऽखंडचिन्मात्ररूपत्वानुपपत्तेः, ऐक्यस्य चिन्मात्रस्यैव विप्रतिपत्ति धर्मित्वोक्तेरयुक्तत्वात् ।। भामत्यां विप्रतिपत्तिप्रदर्शनावसरे "तत्र त्वं-पदार्थे तावद्विप्रतिपत्तीर्दर्शयति "देहमात्रमित्यादिना" "त्वं पदार्थविप्रति-पत्त्या च तत्पदार्थे विप्रतिपत्तिर्दर्शिता" "तदेवं त्वं पदार्थ विप्रतिपत्तिद्वारा तत्पदार्थे विप्रतिपत्तिं सूचयित्वा, साक्षात्तत्पदार्थे विप्रतिपत्तिमाह" इति त्रिभिर्वाक्यैः तत्त्वं पदार्थयोरेव विप्रतिपत्तिप्रदर्शनेन ऐक्यरूपे चिन्मात्रे विप्रतिपत्तेरप्रदर्शितत्वेन, कल्पतरावपि चिन्मात्ररूपे ऐक्ये विप्रतिपत्तेर-प्रदर्शितत्वेन 'तथैव भामति कल्पतर्वोरुपपादनात्' इत्यस्यायुक्तत्वात् ।।

विशेष्य विप्रतिपत्त्यापि विशेष्यप्रतीत्यनुकूलत्वेन जीवत्वेश्वरत्व-विशिष्टविचारस्यापि न्याय्यत्वात्" इति वाक्यं तु. असंगतपदार्थान्वय कत्वादुपेक्ष्यं । त्वदभिमतोभयानुगतचिन्मात्रस्य शशविषाणायितत्वेन मुमुक्षूणां तद्ज्ञानस्यानावश्यकत्वेन जीवेश्वररूपविशिष्टविचारस्यायुक्त त्वात् ।। भाष्यभामत्यादौ त्वंपदार्थे विशिष्टे अहमर्थे तत्पदार्थे विशिष्ट एव विप्रतिपत्तेः प्रदर्शितत्वेन चिन्मात्रे विप्रतिपत्तेरप्रदर्शितत्वात् अनेक-देहानुस्यूतमात्मानं पश्यतः पुरुषस्य आत्मनि देहत्वादिविप्रतिपत्तेरयोगाच्च ब्रह्मशब्दस्य जगत्कारणत्वादिविशिष्टबोधकत्वेन केवलचिन्मात्रपरत्वेऽस्वा-रस्यानिवारणाच्च ।।

।।ॐ अथातो ब्रह्मजिज्ञासा ॐ ।। सित्धांते सूत्रार्थस्तु अथशब्दो मंगलार्थो[1]ऽधिकरानंतर्यार्थ[2]श्च अतःशब्दः ज्ञानजन्यप्रसादजन्यमोक्षाख्य-ज्ञापकहेत्वर्थः विष्णुप्रसादरूपकारकहेत्वर्थश्च ब्रह्मजिज्ञासेति षष्ठीस-मासः सा च षष्ठीकर्मणि 'ब्रह्मपदं च बृहंतो ह्यस्मिन्गुणाः बृंहति बृंहयति-चेति श्रुत्या अनंतगुणाश्रयवाचकं सत् अल्पगुणात् जीवात् ब्रह्मणः भेदं-सूचयत् ब्रह्माभेदपूर्वपक्षसूचनद्वारा तादृशपूर्वपक्षनिरासकानंतगुणाश्रय-विष्णुं वदति जिज्ञासाशब्दश्च विचारपरः तथाच वैराग्यशमदमादिमुमुक्षा-

१. मंगलप्रयोजकः २. आनंतर्यवाचकः योग्यतयाअधिकारस्यान्वयः

रूपाधिकारसंपत्त्यनंतरं विष्णुप्रसादजन्या ब्रह्मजिज्ञासा ज्ञानजन्य-प्रसादजन्यमोक्षाख्यफलज्ञानज्ञाप्यकर्तव्यत्ववतीति ॥

(रा.) स चानुपपन्नः अथशब्दस्य मंगलानंतर्योभयार्थत्वे युगपद्वृत्तिद्वयविरोधापत्तिः युगपद्वृत्तिद्वयं तु न युक्तमितिचंद्रिकाकृता जिज्ञासा शब्दार्थं विचारेऽद्वैतिदूषणार्थमुक्तत्वात् अन्यथा सैंधव शब्दस्य युगपदश्व-लवणोभयार्थत्वापत्तिः अनुगतशक्यतावच्छेदकरूपाभावस्य सैंधवपद इव अथशब्दे मंगलानंतर्योभयानुगतशक्यतावच्छेदकाभावश्च तुल्यः गंगायां मत्स्यघोषौ इत्यादौ तु एकस्य गंगापदस्य प्रवाहे शक्तिः घोषे लक्षणेति वृत्त्योर्विलक्षणत्वात् वृत्तिद्वयं न दोषाय प्रकृते तु मंगले अधिकारेच एक-जातीयशक्ति द्वयस्यैव वक्तव्यतया दोषो दुरुद्धर इति यदुक्तं ॥

(खं.) तत् युगपद्वृत्तिद्वयविरोधादिकथनमनुक्तोपालंभत्वादुपेक्ष्यं अथशब्दो मंगलार्थोऽधिकारानंतर्यार्थश्चेति भाष्ये मंगलार्थ इत्यस्य मंगल-प्रयोजनक इत्यर्थस्यैवाभिप्रेतत्वेन अथशब्दस्य मंगलवाचकत्वानुक्तेः टीकायां तथैव व्याख्यातत्वाच्च ॥

(रा.) 'अथशब्दो मंगलार्थोऽधिकारानंतर्यार्थश्च' इति मध्व-भाष्यस्थचकारस्वारस्येन आनंतर्यसमानयोगक्षेमत्वस्य प्रतीतेः वाच्यत्वा-वगमात् इति यदुक्तं ॥

(खं.) तत्तुच्छं चैत्रः सुकृती धनी चेत्यादौ सत्यपि चकारे सुकृत-धनयोः समानयोगक्षेमत्वाप्रतीत्या चकारस्य समानयोगक्षेमत्वप्रत्यायक-ताया अभावेन मंगलार्थत्वानंतर्यार्थत्वयोः समानयोगक्षेमत्वा प्रतीतेः तेन मंगलस्य वाच्यत्वानवगतेः ॥

(रा.) यत्तु 'आनंतर्येऽधिकारस्य मंगलार्थे तथैव च । 'अथशब्द' इति मध्वभाष्योदाहृतपुराणवचने तथाशब्देन आनंतर्यस्य यथा अथ शब्दार्थत्वं तथा मंगलस्याथशब्दार्थत्वमिति प्रतीतेः आनंतर्यवत् मंगलस्य

वाचकत्वाद्यगमाच्च अतः 'ग्रंथादौ मंगलाचरणस्यावश्यकत्वात्तत्परतयाऽथशब्दं व्याचष्टे अथेतीति' तत्वप्रकाशिका प्रामादिक्येव इति ॥

(खं.) तदपि तुच्छं 'आनंतर्येऽधिकारस्य मंगलार्थे तथैव च अथशब्द' इति पुराणवाक्ये चकारसमानार्थकतथाशब्देनापि वाच्यत्वानवगतेरुक्तप्रायत्वात् अत एव आनंतर्यस्याथशब्दवाच्यत्वज्ञापनाय प्रयोजनवाच्यार्थपदाघटितस्य 'आनंतर्येऽधिकारस्य' इति मंगलस्य च प्रयोजनत्वज्ञापनाय तद्वाच्यार्थपदघटितस्य 'मंगलार्थे' इति च वाक्यस्यप्रयोग. अन्यथा आनंतर्यार्थे मंगलार्थे तथैव च अथशब्द इत्युभयत्र अर्थशब्दघटितं वा आनंतर्ये मंगले तथैव चेत्युभयत्र अर्थशब्दाघटितं वा वाक्यं प्रयुज्येत अतः पुराणकृतोऽपि मंगलानंतर्ययोः प्रयोजनत्ववाच्यत्वे एव विवक्षिते इति न पुराणेनापि मंगलस्याथशब्दवाच्यत्वसिद्धिरतो 'ग्रन्थादौ मंगलाचरणस्यावश्यकत्वात्तत्परतया अथशब्दं व्याचष्टे अथेतीति तत्वप्रकाशिका भाष्यपुराणवाक्यार्थप्रमापूर्विका सती न प्रामादिकीति ॥

(रा.) यच्चोक्तं अतःशब्दस्य सर्वनामत्वमंगीकृत्य विष्णुप्रसादरूपहेतुपरत्वमुच्यते उत 'अकारो विष्णुवाचक' इति कोशानुगुण्येन नाद्यः उपस्थितस्यैव सर्वनाम्ना परामर्शनीयत्वात् सूत्रघटकीभूतेन केनापि पदेनानुपस्थापितस्य विष्णुप्रसादस्य सर्वनाम्ना अतःशब्देन परामर्शायोगात नद्वितीयः अकारस्य विष्णुवाचकत्वेऽपि तत्प्रसादवाचकत्वासंप्रतिपत्तेः इति ॥

(खं.) तदपि तुच्छं तथा हि तत्र ज्ञापकहेतुबोधकत्वाभिप्रायेण प्रथमकल्पं तावदंगीकुर्मः सर्वनामशब्दस्य बुद्धिविषयत्वोपलक्षितधर्मावच्छिन्नेशक्तत्वेन तादृशबुद्धेः स्वविषयतावच्छेदकावच्छिन्नोपस्थापकसर्वनामपदघटितवाक्यपूर्वोत्तरवाक्याधीनत्वनियमाभावेन प्रमाणकरणकतत्तद्धर्मावच्छिन्नविषयकबुद्धेः सत्वमात्रेण तद्बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयकबोधजनकत्वसंभवेन प्रकृते श्रवणमननादिरूपजिज्ञासाया अपरोक्षज्ञानसाधनत्वस्य 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्या-

सितव्य' इत्यादिश्रुतिसिद्धत्वेन 'धातुः प्रसादान्महिमानमात्मनः' 'प्रियो-हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्यादिप्रमाणेनापरोक्षज्ञानस्य प्रसाद-हेतुत्वावगतेः 'यस्य प्रसादात्' 'धातुःप्रसादात्' इत्यादिश्रुत्या मोक्षस्य-प्रसादसाध्यत्वावगतेः जिज्ञासायाः अपरोक्षज्ञानप्रसादद्वारा मोक्षहेतुत्वस्य प्रमाणैरुपस्थितत्वेन सर्वनाम्नातःशब्देन तद्बोधनस्य युक्तत्वात् अथवा प्रवर्तयिष्यमाणशास्त्रे जिज्ञासायाः अपरोक्षज्ञानप्रसादद्वारा मोक्षहेतुताया-वक्ष्यमाणत्वेनोपस्थितत्वात् त्वन्मते ब्रह्मशब्देनोत्तरत्रोपस्थाप्यमान 'तद्य-थेहे' त्यादिवेदस्य सौत्रातःशब्देन परामर्शवत् अतःशब्देनशास्त्रे वक्ष्यमाणं मोक्षहेतुत्वं परामृश्य तस्य पंचम्याहेतुत्वबोधनोपपत्तेः यद्वा अधिकारिविशे-षणतया मोक्षस्य प्रकृतत्वात् अतः मोक्षाख्यफलसद्भावात् इत्येवश्रौतोऽर्थः मोक्षाख्यफलसद्भावाद्ब्रह्मविचारः कर्तव्य इत्युक्तेऽपि विचारसत्वे ज्ञान-सत्वं विचाराभावे ज्ञानाभाव इत्यन्वयव्यतिरेकाभ्यां विचारस्य ज्ञान-साधनत्वावगतेः मोक्षाख्यफलसद्भावात् ज्ञानसाधनीभूतविचारः कर्तव्य इत्युक्ते मोक्षं प्रति ज्ञानं कारणं ज्ञानं प्रतिजिज्ञासा कारणं इति लभ्यते 'द्रव्यं कर्म च कालश्च' 'न ऋते त्वत्क्रियते किंचनारे' इत्यादिश्रुत्या ईश्वर-प्रसादमंतरा कस्यापि कार्यस्याजननावगतेः प्रसादद्वारा ज्ञानं कारणमित्य-वगम्यते तथाच श्रुत्या अर्थाच्च ज्ञानजन्यप्रसादद्वारा मोक्षाख्यफलसद्भा-वात् ब्रह्मजिज्ञासा कर्तव्येति सूत्रार्थलाभात् ॥

कारकहेत्वभिप्रायेण द्वितीयपक्षमप्यंगीकुर्मः 'अकारो विष्णुवाचक' इति कोशानुसारेण वा 'अ इति ब्रह्म' इति श्रुत्यनुसारेण वा अ इति प्रातिपदिकार्थो विष्णुः पंचम्यर्थः कारणत्वं तथाच विष्णुनिष्ठकारणता अतःशब्दार्थः तस्या निरूपकतासंबंधेन जिज्ञासायामन्वये विष्णुनिष्ठकार-णतानिरूपिका जिज्ञासा इत्यर्थः संपद्यते कारणस्य सिद्धासिद्धभेदेन द्वैविध्येन सिद्धकुठारादिरूपकारणं सव्यापारीकरणीयं असिद्धं यागादि-रूपं कारणं उत्पादनीयं प्रकृते जिज्ञासाकारणीभूतविष्णुस्तु सिद्धः सव्यापा-रीकरणीयः व्यापारश्च प्रसाद एवेति व्यापारप्राधान्यविवक्षया इंद्रियार्थ-सन्निकर्षः प्रत्यक्षमिति करणप्राधान्यविवक्षया सन्निकृष्टमिंद्रियं प्रत्यक्ष-

मिति व्यवहारवत् व्यापारप्राधान्यविवक्षया विष्णुप्रसादकरणिका जिज्ञासा करणप्राधान्यविवक्षया विष्णुकरणिका जिज्ञासेत्युभयविध व्यवहारोपपत्तेः अकारस्य विष्णुप्रसादवाचकत्वानावश्यकत्वात् लक्षणया विष्णुप्रसादादित्यर्थोपपत्तेरनुपपत्त्यभावात् न हि शक्त्यैव सूत्रार्थो वर्णनीय इत्यावयोर्मतं शक्त्या विष्णुप्रसादवाचक इत्यनुक्तेः ॥

(रा.) यदपि ब्रह्मशब्दस्यानंतगुणाश्रयवाचित्वं भवन्मते न संभवति आनंदादिगुणानां ब्रह्मणश्च भवद्भिरत्यंताभेदस्वीकारात् गुणनिष्ठाधेयतानिरूपिताधारत्वस्य गुणाश्रयत्वरूपसगुणत्वस्य ब्रह्मण्यसंभवात् अन्यथा तद्वचस्तद्वचवितमतीति वाक्यस्यापि प्रामाण्यापत्तिरिति ॥

(खं.) तदपि तुच्छं "अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वमेव बृहधातूत्तरप्रत्ययस्यापि आश्रय एवार्थः अत्यंताभेदेप्याश्रयाश्रयिभावः स्वे महिम्नि प्रतिष्ठित इत्यादाविव संभवतीति सिद्धांते दोषाभावादिति" (९५) अभिन्नानां कालः सदास्ति देशः सर्वत्रास्ति इत्याद्यबाधिताधाराधेयभाव निर्वाहस्तत्तदसाधारणस्वरूपापरपर्यायस्वभावविशेषशब्दवाच्यविशेषेणेति (१५७) शांकरभाष्यगांभीर्यनिर्णयाख्यत्वत्कृतग्रंथे आनंदानुभवरूपस्यापि मुक्तस्य आनंदानुभवाश्रयत्वरूपानंदानुभवितृत्वमिति च त्वयैवाभेदेऽपि आधाराधेयभावमंगीकृत्य आनंदादिगुणानां ब्रह्मणश्चात्यंताभेदस्वीकारे आधाराधेयभावानुपपत्त्या ब्रह्मशब्दस्यानंतानंदादिगुणाश्रयवाचकत्वानुपपत्तिकथनस्य स्वव्याहतत्वात् अभेदेप्याधाराधेयभावांगीकर्तुस्तव मतेऽपि तद्वचर्वितस्तद्वचवितमितीत्यादिवाक्यप्रामाण्यापत्तेर्दुर्वारत्वेन अभेदः आश्रयाश्रयिभावादिकं च यत्र प्रमितं तत्रैव स्वभावविशेषादिना आधाराधेयभावबोधक वाक्यस्यप्रामाण्यं निर्वहणीयं अपरिछेद्यत्वब्रह्मकालदेशादीनामभेदः आधाराधेयभावश्च प्रमित इति स्वभावविशेषादिना आधाराधेयभावबोधकवाक्यप्रामाण्यनिर्वाहेऽपि तद्वचस्योराधाराधेयभावोऽप्रामाणिक इति स्वभावविशेषकल्पकाभावात् न तत्र स्वभावविशेषादिना आधाराधेयभावबोधकवाक्यप्रामाण्यनिर्वाह इत्युभाभ्य।

समाधेयत्वात् इयांस्तु विशेषः । अस्मन्मते ब्रह्मणः सविशेषत्वात् वस्तुस्वभावविशेषादिकं युज्यते। अद्वैतिमते तु ब्रह्मणः निर्विशेषत्वात् स्वाभिन्ना परिच्छेद्यत्वाधारत्वादिनियामकवस्तुस्वभावविशेषादिकं न युज्यत इति । स च वस्तुस्वभावरूपो विशेषः ब्रह्मणाऽभिन्न एवेति 'एवं धर्मानि'ति श्रुतिविरोधस्यानवकाशः ।।

(रा.) यच्च विशेषस्य ब्रह्माभिन्नत्वे ब्रह्मणैव हेतुना ब्रह्मणो गुणस्य च आश्रयाश्रयिभाव इत्युक्तं स्यात् । तथा च विशेषकल्पनाऽनर्थिकेति ।।

(खं.) तदपि तुच्छं। ब्रह्मणि स्वानन्यापरिच्छेद्यत्वाधारत्वस्य स्वे महिम्नि प्रतिष्ठित इत्यादिश्रुतिसिद्धस्वाधारत्वस्य कालदेशादौ कालः सदास्तीत्यादिव्यवहारसिद्धस्वाधारत्वस्य च निर्वाहार्थं स्वदाद्यंगीकृत तत्तदसाधारणवस्तुस्वरूपस्वभावविशेषादीनां केवलब्रह्मादिस्वरूपत्वे घटसाधारण्येन घटेन हेतुना घटः स्वस्याधार इत्याद्यापत्तेः परिहारार्थं घटादिव्यावृत्तस्य विशेषस्य तत्तद्वस्तुस्वरूपे उभाभ्यामंगीकार्यत्वात् ।।

(रा.) 'यत्तु' ब्रह्मपदेन पूर्णगुणवाचिनाऽल्पगुणाज्जीवात् ब्रह्मणोभेदः सिध्यतीत्यभ्युपगमोप्यसंगतः भवन्मते विरुद्धधर्मयोरपि एकत्र समावेशस्वीकारात्। एकत्वसंख्यावच्छिन्नस्य ब्रह्मणः भवदीयानंदमयाधिकरणे अन्नमयप्राणमयादिरूपेण गुहाधिकरणे भोक्त्रात्मांतरात्मरूपेण संख्योपसंग्रहाधिकरणे पंचपंचजनरूपेण न स्थानतोपीत्यधिकरणे विश्वतैजसरूपेण एकत्वविरुद्धमनेकत्वं स्वीकृतं, अशरीरस्यैवेश्वरस्य अरूपवदेवहीत्यधिकरणे अनुव्याख्यानसुधयोः अशरीरत्वविरुद्धपरव्यूहादिनानाशरीरत्वं स्वीकृतं रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैः भ्रांत्यागृहीतस्य भेदस्य अनुवादकमित्यप्युक्तं' 'सर्वथापि तु त एव' इत्यधिकरणे, एवमानंदमयस्य अवयविनः अवयवित्वविरुद्धं शिरः पक्षपुच्छावयवरूपत्वं वर्णितमानंदमयाधिकरणे 'एकआत्मनः शरीरेभावा' दित्यधिकरणे खांडववनदाहतत्प्रशमनादिपरस्परविरुद्धं कृतवतोः सेव्यसेवकभावादिविरुद्ध-

गुणशालिनोरिंद्रार्जुनयोरत्यंताभेदः साधितः एवं विरुद्धधर्मसांकर्यमंगी-कृतवतां माध्वानां मते जीवब्रह्मणोर्विरुद्धधर्मवत्वात् भेदः कथं सिध्येत् इति ॥

(खं.) तदपि तुच्छमेव। तेषु तेष्वधिकरणेषूक्तयोः एकत्वानेकत्व-संख्ययोः लोके सामानाधिकरण्यस्यैव दर्शनेन प्रत्येकमेकत्वसंख्यावतामेव द्वित्वादिसंख्यावत्तया एकत्वसंख्यया द्वित्वादिरूपानेकत्वसंख्याया व्याप्ते-रेव वक्तुं शक्यत्वेन च विरोधवार्ताया एवाभावात् ॥

किंच विरोधाविरोधयोः प्रमाणगम्यत्वेन [1]'यदेकमव्यक्तमनंतरूपं [2]'इंद्रो मायाभिः पुरुरूप ईयते' [3]'अयं वै हरयो अयं वै दश च सहस्राणि बहूनि चानंतानि च तदेतद्ब्रह्म' [4]'तथैको बहुरूपवान्' इत्यादिप्रमाणेष्वेक-त्वानेकत्वयोः रूपविशेषापेक्षया सामानाधिकरण्योक्तेः सहानवस्थानलक्षण-विरोधस्य शंकितुमप्यशक्यत्वात् । प्राकृतशरीराभावस्य चिदानंद-शरीरस्यांगीकृतत्वेन तयोर्विरोधाभावाच्च ॥

परमते परिच्छिन्नेनावृतत्वापरिच्छिन्नत्वयोः अन्यत्रादृष्टयोः निरंश-चैतन्ये क्रियात्वकर्तृत्वयोरन्यत्र समानाधिकरणतया अदृष्टयोः ज्ञानरूप-क्रियायां नैय्यायिकमते संबंधित्वसंबंधत्वयोरन्यत्रादृष्टयोः स्वरूपसंबंधे समावेशस्येत्र 'सशिरः सदक्षिणः' 'नेहनानास्तिकिंचन' 'एकमेवाद्वितीयं' इत्यादिप्रमाणैः अवयवत्वावयवित्वयोः समावेशस्य अंगीकारे बाधका-भावात् अन्यथा[5] घटत्वद्रव्यत्वयोः घटान्यस्मिन् समावेशादर्शनेन घटेऽपि तयोः समावेशानंगीकारापातात्। स्वीकृतश्च परैः ब्रह्मणि अवयवावय-विनोरभेदः 'वृक्षस्य स्वगतोभेदः पत्रपुष्पफलादिभिः। वृक्षांतरात्सजाती-याद्विजातीयाच्छिलादितः' इत्यादिवदद्भिः ॥

१. २. बृ ३. बृ. ४.

५. प्रमाणेन सहावस्थिततया ज्ञातयोरपि अन्यत्रादर्शनमात्रेण निराकरणे.

इंद्रार्जुनयोरभेदस्य प्रामाणिकत्वेन भेदप्रतिनिधिना विशेषेण ईश्वराचिंत्यशक्त्या वा सेव्यसेवकभावादिविरुद्धधर्मोपपत्तेः अभेदस्य प्रामाणिकत्वे विरुद्धधर्मयोर्विशेषेण तदभावे च भेदेन निर्वाह्यत्वात् जीवब्रह्मणोरभेदस्याप्रामाणिकतया विशेषेण निर्वाहायोगात् सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्मयोः भेदेनैव निर्वाह्यत्वेन ताभ्यां भेदसिद्धेर्निष्प्रत्यूहत्वात् ॥

(रा.) यच्च तर्हि तत्वमसीति प्रमाणबलात् जीव ब्रह्मणोर्भेदस्य बाधितत्वेन तयोरभेदेपि विशेषेणेश्वरशक्त्या वा सर्वज्ञत्वकिंचिद्ज्ञत्वादिसर्वभेदव्यवहारोपपत्तेः भवद्भिरेवाभ्युपगंतृत्वापत्तेः इति ॥

(खं.) तदपितुच्छं 'संसर्गासंगिसम्यग्धीहेतुता या गिरामियं। उक्ताऽखंडार्थता यद्वा तत्प्रातिपदिकार्थता' इति शांकरैस्तत्वमस्यादिवाक्यानां संसर्गाविषयकबोधस्य स्वीकारेण केवलचिद्विषयकज्ञानस्य भेदाभेदोभयोदासीनतया जीवब्रह्मणोर्भेदबाधकत्वस्य त्वन्मतरीत्यैवासंभवात् भेदे बाधिते भेदकार्ये च दृष्टे तन्निर्वाहकतयांगीक्रिमाणविशेषस्य ईश्वराचिंत्यशक्तेर्वाकल्पकाभावात् 'तत्वमसी' त्यादिवाक्यानां उपक्रमोपसंहाराद्यनुसारेण भेदग्राहकप्रत्यक्षानुमानागमरूपेतरप्रमाणानुसारेण च जीवब्रह्मभेद तद्व्याप्तधर्मपरत्वाच्च ॥

विष्णुतत्वरहस्यविवरणे 'शास्त्राणां भेद एव श्रुतिशिखरगिरां आगमानां च निष्ठा साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबंधैः ॥ तत्रैव व्याससूत्राण्यकुटिलविधया भांति तात्पर्यवंति प्रत्नैराचार्यरत्नैरपि परिजगृहे शंकराद्यैः स चापि' इति । तस्माल्लैंगस्कांदशैवकौर्मब्रह्मांडादि तामसराजसपुराणानि तामसत्वराजसत्वाभ्यां मतिभ्रंशकरत्वात् श्रोत्रपदवीमनारोप्य सात्विकपुराणेष्वपि ये जीवब्रह्मणोः स्वरूपाभेदवादाः ये च प्रपंचमिथ्यात्ववादाः ये वा निर्गुणब्रह्मवादाः ये च रुद्रादिदेवतांतरपरत्ववादाश्च तान् सर्वान् प्रत्यक्षश्रुतिमनुस्मृतिभगवद्गीताब्रह्मसूत्र सिद्धांतविरुद्धत्वात्परित्यज्य अवशिष्टानंशान् परिगृह्य संप्रतिपन्नश्रुतिः मनुस्मृतिभगवद्गीताब्रह्मसूत्रैः प्रमाणतमैः श्रीहरिरेव परब्रह्मेति विचार्य

एतद्देहांत एवमुक्तः स्यामितीच्छावता पुरुषधौरेयेण श्रीमन्नारायण एवा- प्रायणमुपासनीय इत्याकलयंतु संत इति च उक्त्वा उत्तरत्र श्रुतिमनु- स्मृतिगीताब्रह्मसूत्राणां जीवब्रह्मभेदे ब्रह्मणः सगुणत्वे तात्पर्यस्य- सप्रमाणं त्वयैव निर्णीतत्वेन तथा सर्वमतसंग्रहविलासे ब्रह्मसूत्रकृतः वेदा- चार्यस्य भगवतो व्यासस्य सर्वेषां वेदांतानां जीवब्रह्मणोः पारमार्थिक- भेद एव तात्पर्यमभिप्रेतमिति शांकरभाष्यगांभीर्यनिर्णयग्रंथेपि जीव- ब्रह्मणोर्भेद एव श्रुतिसूत्राणां तात्पर्यमिति शांकराभिप्रेतमिति त्वयैव सहस्रकृत्वः उक्तत्वेन व्याहृतेश्च। अत्र विशेषः अस्मत्कृतश्रुत्यर्थविचारे- द्रष्टव्यः। अभिन्नयोरपींद्रार्जुनयोर्भेदकार्यादिकं स्वीश्वराचिंत्यशक्त्या निर्वाहयितुं शक्यते न तु जीवेश्वरयोरभेदमंगीकृत्य भेदकार्यं अल्पशक्त्या युक्तजीवेनाभेदे ईश्वरस्याप्यल्पशक्त्यापत्त्या भेदेकार्यनिर्वाहकाचिंत्यशक्ते- रेव विलोपापत्तेः ॥

(रा.) यच्चोक्तं भवदुक्तविशेषस्य अचिंत्येश्वरशक्तेश्च ब्रह्मा- भेदभेदविकल्पाभ्यां प्रागे वदूषितत्वात् इति ॥

(खं) तदपि तुच्छं वस्तुस्वभावरूपविशेषस्य ब्रह्माभेदमंगीकृत्य- त्वदुक्तदूषणाभासस्यानूपदमेव परिहृतत्वात् ॥

(रा.) यदपि 'उभयव्यपदेशात्त्वहिकुंडलवत्' इत्यधिकरणे- भवद्भिरानंदादिब्रह्मगुणानां तस्मादत्यंताभिन्नत्वं साधितं भवत्सिद्धांते ब्रह्मशरीरस्य ब्रह्मणोऽत्यंताभिन्नतया शरीरात्मवादापत्त्या चार्वाकमत- प्रवेशापत्तिः इति ॥

(खं) तदपि तुच्छं। जीवस्य पांचभौतिकतच्छरीरे तदतिरिक्त- त्वस्य ब्रह्मणः तदभिन्नचिदानंदात्मकशरीरवत्वस्येत्याद्यनेकेषां चार्वा- कानंगीकृतानां प्रमेयाणां तद्विरोधिनां चांगीकारेण ब्रह्मणः ज्ञानानंदात्म- कस्वाभिन्नशरीरवत्वांगीकारेण चार्वाकांगीकृतशरीरात्मवादानापत्तेः तन्मतप्रवेशापत्तिकथनस्यास्तिकनास्तिकमताज्ञानविजृंभितत्वात् ॥

इदं पुनरिहावधेयं नास्तिपरलोक इति यस्यबुद्धिः स नास्तिकः अस्ति परलोक इति यस्य बुद्धिः स आस्तिक इति नास्तिक आस्तिक शब्द-निर्वचनसद्भावेन परलोकादीनामसत्त्वमात्मदेहयोर्भेदाभावं च वदताम-द्वैतिनामेव सुदृढं चार्वाकत्वमिति ॥

(रा.) यत्तु एतेन 'जुष्टंयदा पश्यत्यन्यमीश'मिति श्रुतावन्य-शब्देन जीवब्रह्मणोर्भेदकथनात् तयोरभेदो न संभवतीति नव्यमाध्वोक्तम-पास्तं। 'अन्योंतर आत्मा प्राणामयः अन्योतरात्मा मनोमय' इत्यादि-तैत्तिरीयश्रुतौ अन्यशब्दैः अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयानां भेदकथनेपि

अनन्योप्यन्यशब्देन तथैको बहुरूपवान्' ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः' ॥

इति पुराणवचनमात्रेण तेषामभेदं स्वीकुर्वद्भिः भवद्भिः 'तत्त्वमसि ब्रह्मदासा ब्रह्मदाशा' 'नान्योतोऽस्ति द्रष्टा' नान्योतोऽस्तिद्रष्टृ 'नेह-नानास्ति किंचन' 'नात्र काचन भिदास्ति' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' एकत्वमनुपश्यत 'एकधैवानुद्रष्टव्य'मित्यादिश्रुतिभिः 'द्वैति-नोऽतथ्यदर्शिन' ज्ञानं यथासत्यमसत्यमन्यत्' 'एतत्तु यत्संव्यवहारभूत तत्रापि चोक्तं भुवनाश्रितं ते' 'वेणुरंध्रविभेदेन भेदषड्जादिसंज्ञकः, अभेदव्यापिनो वायोः तथासौ परमात्मन' इत्यादिभिः द्वैतिनिंदा जगन्मि-थ्यात्वजीवब्रह्माभेदबोधकैः सर्वदेशप्रसिद्धविष्णुपुराणाख्यप्रसिद्धमुद्रिता मुद्रितग्रंथस्थैर्वचनैश्च समधिगतजीवब्रह्माभेदस्य अनिच्छयाऽपि स्वी-कार्यत्वापत्तेः न ह्येवं सर्वसंप्रतिपन्नप्रसिद्धपुराणमूलकोशे 'द्वैतिनोऽतथ्य-दर्शिन' इतिवत् अद्वैतिनोऽतथ्यदर्शिन इति कुत्रापि दृश्यते इति ॥

(खं.) तत्तुच्छं अपरिच्छेद्यत्वब्रह्मणोः एवमन्येष्वपि बहुषु स्थलेषु अभेदस्य प्रामाणिकत्वेन भेदकार्यत्वप्रतीतानां ब्रह्मापरिच्छेद्यत्वादिनिष्ठां-नामाश्रयाश्रयिभावानां तत्तदाधारणवस्तुस्वभावविशेषादिना घटभूतला-

दीनां अभेदस्याप्रामाणिकत्वेन घटभूतलादिनिष्ठानां आश्रयाश्रयिभावादीनां भेदेन त्वन्मते निर्वाह्यत्ववत् अभेदस्य प्रामाणिकत्वे भेदकार्यवत्प्रतीतानां अन्य इत्यादिव्यवहाराणां भेदप्रतिनिधिना स्वभावविशेषरूपविशेषेण अभेदस्याप्रामाणिकत्वे भेदेन निर्वाह्यत्वेन जीवब्रह्मणोरभेदस्याप्रामाणिकत्वेन 'जुष्टं यदा पश्यत्यन्यमीश'मित्यादौ श्रुतान्यशब्दानां भेदेन, अन्नमयादिपंचरूपाणां आनंदमयाधिकरणोक्तब्रह्मशब्दाद्यनेकप्रमाणैरभेदस्य सिद्धतया भेदकार्यवत्प्रतीतानां अन्यादिशब्दानां ।

'क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः ।
मंदराद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ।।
रूपेणान्येन देवानां मध्ये चक्रगदाधरः ।
चकर्ष नागराजं तु दैत्यमध्ये परेण च ।।
तथा परेण मैत्रेय यत्र दृष्टं सुरासुरैः ।
अन्येन तेजसा देवानुपबृंहितवान् प्रभुः ।।

इत्यादिविष्णुपुराणेषु अभिन्नेषु भगवद्रूपेषुश्रुतान्यापरादिशब्दानामेव भेदप्रतिनिधिना विशेषेण निर्वाह्यत्वात् ।।

(रा.) 'तत्वमसि' 'ब्रह्मदासा' 'नान्योतोऽस्ति द्रष्टा' नान्योतोस्तिद्रष्टृ' 'नेह नानास्ति किंचन' 'नात्र काचन भिदास्ति' 'मृत्योःसमृत्युमाप्नोति' 'एकत्वमनुपश्यति' एकधैवानुद्रष्टव्यं इत्यादिरूपाणि' 'द्वैतिनोऽतथ्यदर्शिनः' 'ज्ञानं यथा सत्यमसत्यमन्यत्' 'एतत्तु यत्सव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते' वेणुरंध्रविभेदेन भेदः षड्जादिसंज्ञकः अभेदव्यापिनोवायोस्तथासौपरमात्मनः' इत्यादीनि च सर्वदेशप्रसिद्धमुद्रितामुद्रितविष्णुपुराणाख्यग्रंथस्थानि वचनानि द्वैतिनिंदा जगन्मिथ्यात्वजीवब्रह्मा भेद बोधकानि संतीति यदुक्तं ।।

(खं.) तत्तुच्छं मायावादिनां मते 'संसर्गासंगिसम्यग्धीहेतुताया-गिरामियं। उक्ताऽखंडार्थता यद्वा तत्प्रातिपादिकार्थतेत्युक्तप्रकारेण तत्वम-

स्यादिवाक्यानामखंडार्थतास्वीकारात् केवलचिन्मात्रविषयकबोधजनकत्वेन अखंडार्थतां परित्यज्य विशिष्टार्थतास्वीकारेऽपि 'विप्रतिषेधे भूयसां स्यात्स्वधर्मत्व' मिति प्रसंगलक्षणन्यायात् बहुबाधस्यान्याय्यत्वेन तत्वमस्यादिपंचषातिरिक्तानां उपनिषत्कर्मकांडादिसर्ववेदानां प्रत्यक्षानुमानानां च भेदप्रतिपादकतया तथा बृहदारण्यद्वितीयाध्यायस्थविंशतितममंत्रव्याख्यावसरे अन्यत्र तत्र तत्र शंकरभाष्येऽंगीकृतत्वेन च सर्वज्ञत्वाल्पज्ञत्वादिविशिष्टयोः तत्त्वंपदार्थयोः प्रत्यक्षविरोधादिना मुख्यवृत्या एक्यबोधनासंभवेनान्यार्थपरत्वस्याद्वैतिभिरंगीकृतत्वेन 'गंगायां घोष' इति वाक्यस्य मुख्यार्थे बाधिते गंगातीरे घोषः गंगासंबंधिनौकायां घोष इत्यनयोर्लक्षणया बोधनयोग्ययोरप्यर्थयोः प्रमाणाबाधबाधाभ्यां ग्रहणाग्रहणे इव जीवेश्वरभेदाभेदयोः प्रमाणाबाधबाधाभ्यां ग्रहणाग्रहणयोरौचित्येन विनापि लक्षणां अतदिति पदविभागेन अतत् ब्रह्मभिन्नोऽसीति वा 'सुपां सुलुगि' ति सूत्रेण तच्छब्दस्य षष्ठ्यंततामंगीकृत्य तस्य त्वमसीति वा सप्तम्यंततामंगीकृत्य तस्मिन्त्वमसीति वा एवमन्येषां बहूनां मुख्यार्थानां संभवेन च तत्वमस्यादिपंचषवाक्यानामपि अभेदबोधकत्वासंभवात् ॥

'काण्वीशाखा प्रसिध्दा शतपथगदितं ब्राह्मणं तत्र चैकं
तस्मिन्ब्रह्मासिवाक्यं जनकनृपगुरुर्याज्ञवल्क्यो ह्यवोचत् ।
तद्वाक्ये पूर्वभागे तदिति यदबलात् ब्रह्मणः संप्रकीर्तिः
जीवब्रह्मैक्यबोधः कथमिव घटते तस्य वाक्यस्य गत्या ॥६॥

छांदोग्ये तत्वमादि बहुजनविदितस्तस्यमुख्यार्थवित्यै
व्याख्यानं पूर्विकार्यैर्बहुभिरिहकृतं दृश्यते व्यासदृष्ट्या ।
अव्यस्तत्वं तु तस्मिन् श्रुतिगतिविधया पूर्ववाक्यानुसारात्
नाभेदे संहतिःस्यात् स्फुटतरमनयोर्भिन्नवाच्यार्थयोगात् ॥७॥

श्रीमत्यां मुण्डनाम्न्यामुपनिषदि परब्रह्मविज्ञेयमुक्तं
विज्ञातुर्ब्रह्मभावः फलमितिकथितस्तत्रकश्चिद्विशेषः ।
ब्रह्मैवेत्येवकारो निरसयति यतो ब्रह्मभावे परत्वं
तस्माज्जीवे परस्मात्स्फुटतरमुदितं मुक्तिकाले पृथक्त्वं ॥८॥

ईशावास्यश्रुतौ हि श्रुतमुपनिषदि-ब्रह्मजीवैक्यमस्ती-
त्येतत्प्रौढिवादः क्वचिदपि न तथा वाक्यमत्रोपलब्धः ।
किंत्वत्रैकत्वशब्दः प्रविलसति तथा सोहमस्मीतिशब्दः
तत्राद्यादाद्यसख्या स्फुटतरमुदिता रूपदृष्टा पराद्यात् ।।९।।

इत्यादिना स्वकृतसर्वमतसंग्रहाख्यग्रंथे वेदार्थनिर्णायकसूत्रप्रणेतुः द्वैति
नामद्वैतिनां च साक्षान्नारायणावतारत्वेन संप्रतिपन्नस्य भगवतो व्यास
तत्त्वमस्यादिवाक्यानां भेदपरत्वमेवाभिप्रेतमिति । एवं विष्णुतत्त्वरहस
विवरणे 'जुष्टं यदा पश्यत्यन्यमीशमस्यमहिमानमिति वीतशोकः 'पृथग
त्मानं प्रेरितारं च मत्वा जुष्टस्तस्यैवामृतत्वमेति' इत्याद्या श्रुतिः जीवब्रह
णोर्भेदस्य मोक्षहेतुज्ञानविषयत्वं ब्रुवाणा भेदस्य पारमार्थिकत्वमवगमय
भेदस्यापारमार्थिकत्वे तज्ज्ञानस्य भ्रांतित्वापत्त्या मोक्षहेतुत्वायोगात् इति
त्वयैवोक्तत्वेन वेदार्थनिर्णायकाचार्यविरुद्धतया शांकरभाष्यगांभीर्यनि
याख्यत्वत्कृतग्रंथे शांकरभाष्यस्य जीवब्रह्मणोः स्वरूपभेद एव तात्
न त्वैक्ये नाप्यौपाधिकभेदे इति महता प्रबंधेनोपपादितत्वेन जीवब्रह्मण
र्भेदस्य शंकरसंमतत्वावगमेन शंकराभिप्रायविरुद्धतयाच एवं विष्
तत्वरहस्यविवरणे 'शास्त्राणांभेद एव श्रुतिशिखरगिरामागमानां
निष्ठा साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबंधैः । तत्रैव ब्र
ससूत्राण्यकुटिलविधया भांति तात्पर्यवंति प्रत्नैराचार्यरत्नैरपि परिज
शंकराद्यैः स चापि इति विष्णुतत्वरहस्यविवरणस्थस्वोक्तिविरुद्धत
तत्वमस्यादिवाक्यानां जीवब्रह्मणोरभेदपरत्वस्य त्वया शंकितुमप्यशक
त्वात् । ने ह नानास्ति किंचनेत्यादिवाक्यानां 'यदेवेह तदमुत्र यद
तदन्विह मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' इत्यादिपूर्वोक्त
वाक्यानुसारेण अंतर्यामिरूपाणां ऐक्यस्य अंतर्यामिरूपाणां भेदद्र
अनर्थस्य च बोधकत्वेन जगतः मिथ्यात्वबोधकत्वाभावात् । 'द्वैतिनं
तथ्यदर्शिन' विष्णुपुराणवचनस्यापि 'नेह नानास्ति किंचनेति' वाक्यवदे
तस्यात्मपरदेहेषु सतोप्येकमयं हि तत् । विज्ञानं परमार्थो हि द्वैतिनं
तथ्यदर्शिन इति तत्तन्नियामकांतर्यामिरूपाणां ऐक्यं परमार्थ शब्देना

शित्वं चोक्त्वा अंतर्यामिरूपाणां भेदद्रष्टुर्निदाबोधकत्वेन जीवब्रह्मणो-र्भेदद्रष्टुर्निदाबोधकत्वाभावात् जीवब्रह्मणोर्भेदबोधकपदाभावात् अंत-र्यामिरूपाणांभेदबोधकपदस्य विद्यमानत्वाच्च जीवब्रह्मणोर्भेदवादिनिंदा-परतया, 'नेह नानास्ति किंचन-- द्वैतिनोतथ्यदर्शिन इत्यादिवाक्ययोज-नस्य पूर्वोत्तरवाक्याज्ञानविजृंभितत्वात्। 'अनाशी परमार्थश्च प्राज्ञैरभ्यु-पगम्यते' इतितस्मिन्नेवाध्याये सत्यपरमार्थ शब्दानां अनाशित्वार्थकत्वस्य असत्यापरमार्थशब्दानां नाशित्वार्थकत्वस्योक्तत्वेन 'ज्ञानं यथा सत्यम-सत्यमन्यत्' इति वाक्यघटकसत्यासत्यशब्दयोः नाशित्वानाशित्वार्थक-तया जगतः मिथ्यात्वस्य 'ज्ञानं यथा सत्यमसत्यमि' तिवाक्येनाबोध-नाच्च ॥

'[1]अनन्यप्रोक्तेगतिरत्रनास्ति' '[2]ईश्वरोहं' '[3]असत्यमप्रतिष्ठंते' '[4]रुद्राण्युवाच' 'तामसानि च शास्त्राणि समाचक्ष्व मसानघ'। रूद्र उवाच। श्रुणु देवि प्रवक्ष्यामि तामसानि यथा क्रमात् येषां श्रव मात्रेण पातित्यं ज्ञानिनामपि। दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकं। मायावादमसच्छास्त्रं प्रच्छन्नबौद्धमुच्यते। मयैव कथितंदेवि कलौ ब्राह्मणरूपिणा। अपार्थं श्रुतिवाक्यानां दर्शयन् लोकगर्हितं। परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते। ब्रह्मणोऽस्य परं रूपं नैर्गुण्यं वक्ष्यते मया। सर्वस्य जगतोप्यत्र मोहनार्थं कलौ युगे। वेदार्थवन्महाशास्त्रं मायावादमवैदिकं '[5]राजन्कार्यस्यमिथ्यात्वं नैर्गुण्यं परमात्मनः। आभास-वादो जीवस्य पाखंडे रुपकल्पितः। नैतद्विश्वसनीयं ते मयोक्तमपि मायया। आज्ञया वासुदेवस्यमोहनाय सुरद्विषां। प्रवर्तितमसच्छास्त्रं अयथार्थस्य शासनात्। मायाविद्याविभागेन चेशजीवविकल्पनं। मायाविद्याविनाशे तु नेशो जीवो न विद्यते। निर्विशेषं निराभासं ब्रह्मनिर्धर्मकं तथा........

१. काठक जीवेश्वराभेदज्ञानिना अद्वैतिना प्रोक्ते गतिः अपरोक्ष ज्ञानं नास्ति. २. गी. १६. ३. गी. १६.

४. पद्मपुराणे उत्तरखंडे चत्वारिंशेऽध्याये ५. बृहद्ब्रह्मसंहिता ४. पादे अष्टमाध्याये.

मायावादमिदं शास्त्रं मायामोहप्रवर्तितं। सात्वतैर्निंदितं सद्भिर्ज्ञात्वा मोहनमात्मनः। मुमुक्षुभिर्न संधार्यं न श्राव्यंमुक्तिमिच्छतां। पाखंडमयथार्थं च श्रुतिस्मृतिविरोधतः ॥ इत्यादीनां अद्वैतिभिरेव बहुवारं मुद्रितेष्वमुद्रितेषु अपि ग्रंथेषु विद्यमानानां त्वया दृष्टानां जीवब्रह्माभेद ब्रह्मनिर्गुणत्वजगन्मिथ्यात्वादिप्रतिपादयतांअद्वैतिनां आसुरत्वपाखंडत्वादिप्रतिपादकानां निरवकाशानां बहूनां वाक्यानां विद्यमानत्वेऽपि 'एको वशी सर्वभूतांतरात्मा एकंरूपं हुधा यः करोति। तमात्मस्थं ये नुपश्यंति धीरास्तेषां सुखं शाश्वतं नेतरेषां। नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति का॰॰न्। तमात्मस्थं ये नुपश्यंति धीरास्तेषांसुखं शाश्वतं नेतरेषां, इत्याद्याऽभेदनिंदायामभ्यासविशिष्टा जीवब्रह्मणोराधाराधेयभावलक्षणभेददर्शनशून्यानद्वैतिनः शाश्वतसुखाख्यमोक्षशून्यत्वेन निंदति इति विष्णुतत्वरहस्य विवरणे स्वयमेवोक्त्वापि सर्वसंप्रतिपन्न प्रसिद्धपुराणमूलकोशेषु अद्वैति ना निंदाबोधकवाक्यानि न दृश्यंते इत्युक्तेरुन्मत्तप्रलापत्वात्। तत्वम स्यादिभवदुदाहृतवचनानां अर्थविशेषविचारस्त्वन्यत्र द्रष्टव्यः[6] ॥

(रा.) यदुक्तं जिज्ञासापदं तु श्रवणमनननिदिध्यासनेषु अनुगतशक्यतावच्छेदकेन एकशक्त्या प्रवर्तते उतशक्तिभेदेन, ? नाद्यः त्रितयसाधारणशक्यतावच्छेदकाभावात् नद्वितीयः अन्याय्यं चानेकार्थत्व'मिति पूर्वतंत्रीयसूत्रविरोधेन अनेकशक्त्ययोगात् सैंधवादिषु प्रयोगप्राचुर्यस्य अश्वलवणयोस्तुल्यत्वाच्छक्तिभेदकल्पनं। नह्येवं माध्वभिन्नानां श्रवणादिषु त्रिषु जिज्ञासाशब्दप्रयोगप्राचुर्यमास्ति प्रत्युत व्याकरणादिसिद्धयोगार्थमादायैव ज्ञानेच्छायां जिज्ञासाशब्दः सर्वैः प्रयुज्यते तस्मान्माध्वोक्तरीत्या सूत्रार्थोऽनुपपन्न एव इति ॥

(खं.) तत्तुच्छं जिज्ञासाशब्दस्य विचारशक्तत्वांगीकारेऽपि श्रवणनिदिध्यासनयोः शक्तत्वनंगीकारेण त्वदीयविकल्पस्यैवानवकाशात् ॥

---

६. जीवब्रह्मणोरभेदप्रमाणभंगे. जगन्मिथ्यात्वप्रमाणभंगे.

पुष्पवच्छब्दस्य सूर्यचंद्रोभयसाधारणशक्यतावच्छेदकरूपाभावेऽपि एकया शक्त्या सूर्यचंद्रयोः गम्यादिधातोः फलव्यापारोभयसाधारणशक्यतावच्छेदकाभावेपि एकशक्त्या फलव्यापारयोः प्रवर्तनात् एकशक्त्या अनेकेषुप्रवतने अनेकसाधारणशक्यतावच्छेदकस्याप्रयोजकत्वेन त्वदुक्तेरसंगतत्वाच्च व्याकरणादि सिद्धयोगार्थमादायैव जिज्ञासाशब्दः ज्ञानेच्छायां सर्वैः प्रयुज्यत इत्यत्र नियामकाभावाच्च ॥

तस्मात् श्रीमदाचार्यमतरीत्या उपपन्न एव सूत्रार्थः

(रा.) यत्तु किंच मध्वमतग्रंथेषु प्रसिद्धपूर्वतंत्रमार्गविरोधो बहुधा दृश्यते इति

(खं.) तत्तुच्छं भाट्टप्राभाकरशाबरादिमीमांसकचरणशरणत्वाभावादस्माकं तद्विरोधस्य दोषत्वाभावात् अंगीकार्यं च भवताप्येवमेव अन्यथा वेदांतानां वेदोपरत्वस्य निरीश्वरवादादेश्चांगीकार्यतापत्तेः न संति च अस्मत्सिद्धांतग्रंथेषु पूर्वतंत्रविरोधाः ॥

(रा.) यदुक्तं 'द्वादशाहवदुभयविधं बादरायणोत' इति सूत्रीयमध्वभाष्ये द्वादशाहः क्रत्वात्मकः सत्रात्मक इति लिखितं तत् अहीनसत्ररूपेण उभयविधो द्वादशाह इति पूर्वतंत्रलेखनविरुद्धं क्रतुत्वस्य सत्रवृत्तित्वेन तेनाकारेण क्रत्वात्मकः सत्रात्मक इति पक्षद्वयलेखन मयुक्तं इति ॥

(खं.) तत्तुच्छं क्रतुरिति अहीनो विवक्ष्यते अहीनैकाहेषु अस्य श्रेष्ठत्वात्क्रतुशब्दः प्रयुक्तः तथा च श्रुतिः 'श्रेष्ठयज्ञो वा एष यद्वा दशाह' इति अहीने एव श्रेष्ठत्वात् क्रतुशब्दप्रयोग इति क्रत्वात्मक इति पदस्य श्रेष्ठाहीनात्मकः इत्यर्थकत्वेन श्रेष्ठाहीनात्मकः सत्रात्मक इति पक्षद्वयलेखनं युक्तमिति तत्व प्रदीपग्रंथे श्रीमद्भाष्यकारसमये तदंते वासिभिरेव व्याख्यातत्वेन विरोधाभावेन 'व्याख्यानतो विशेषप्रतिपत्तिरित्यभियुक्तोक्तेः अनवलोक्य व्याख्यानं विरोधोक्तेरेवायुक्तत्वात् ॥

महाभाष्ये 'अन्हः खः' 'क्रतौ' इति वार्तिकस्थ क्रतुशब्दस्य अहीनार्थताया उक्तत्वात् 'ग्रामजनबंधुभ्यस्तल' इति सूत्रे शेखरकौमुद्योरपि तथैवोक्तत्वाच्च ॥

(रा.) यदपि 'लिंगभूयस्त्व' सूत्रे यज्ञीयहिंसाया इतिकर्तव्यतात्वेन प्राबल्यादिति तत्व प्रकाशिकायां लिखितं तत्, हिंसायाः इतिकर्तव्यतात्वमिति पूर्वतंत्रे कुत्राप्यलिखितत्वादिति पूर्वतंत्रविरुद्धं इति ॥

(खं.) तत्तुच्छं यागीयहिंसायां इतिकर्तव्यताया एव प्राबल्यदर्शनात्, इति टीकायां सप्तम्यंतहिंसापदस्यैव विद्यमानत्वेन पापजननस्वभावाया अपि हिंसायाः तां शक्ति परिभाव्य पुण्यजननशक्त्याधायकत्वस्य दर्शनात् यागीयहिंसासंबंधिन्या इतिकर्तव्यतायाः प्राबल्यस्यैवोक्तेः हिंसाया इतिकर्तव्यतात्वस्यानुक्तत्वात् उक्तचनुक्तयोर्विरोधाभावेन 'पूर्वतंत्रे कुत्राप्यलिखितत्वादिति अनुचितमात्रेण विरोधोद्भावनस्यात्यंतमसंबंधत्वाच्च ॥ टीकाग्रंथानवलोकनमेवैतदनर्थमूलमिति स्पष्टमेव सुधियां ॥

(रा.) यत्तु 'भूम्नः क्रतु' रितिसूत्रे तत्वप्रकाशिकायां दीक्षणीया प्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोरिति लिखितं तदपि पूर्वतंत्रविरुद्धं तथा पूर्वतंत्रे कुत्राप्यलेखनात् इति ॥

(खं.) तत्तुच्छं तथालेखनाभावमात्रस्य विरोधाप्रयोजकत्वस्योक्तत्वात् प्रकारांतरेण विरोधस्य चाप्रदर्शनात् ॥

(रा.) यत्तु 'स्वामिनः फलश्रुते' रित्यधिकरणे अयजमानानामपि ऋत्विजां सत्रयाग फलमिवेति लिखितं तदपि पूर्वतंत्रविरुद्धं सूत्रे 'ये यजमानास्तेऋत्विज' इति वचनेन ऋत्विजां यजमानत्वेन अयजमानत्वाभावात् इति ॥

(खं.) तत्तुच्छं अयजमानानामित्यस्य गृहपतिव्यतिरिक्ताना-मित्यर्थकत्वेन ऋत्विजां गृहपतिव्यतिरिक्तत्वेन 'ये यजमानास्ते ऋत्विज इति वचनविरोधाभावात् ऋत्विक्कार्ये अनियुक्त केवल यजमान भिन्न-त्वस्य यजमानत्वविशिष्ट ऋत्विक्षु संभवाच्च ॥

(रा.) यदपि अनंदमयाधिकरणे न्यायसुधायां 'ज्योतिरुपक्रमा-धिकरणे तत्वप्रकाशिकायां 'ज्योतिषांस्तोमोहि ज्योतिष्ठोम' इति लिखितं तदपि पूर्वतंत्रोदाहृतश्रुतिविरुध्दं 'त्रिवृत्पंच दशसप्त दश एक-विंशाः एतानि वावज्योतींषि य एतस्य स्तोमाः, इति पूर्वतंत्रोदाहृततांडि महाब्राह्मणवाक्यबलेन ज्योतिष्टोमपदस्य बहुव्रीहित्वावगमेन ज्योतिषां स्तोम इति तत्पुरुषस्यासंगतत्वात् इति ॥

(खं). तदपितुच्छं न्यायसुधा वाक्यार्थाज्ञानमूलत्वात् हि यस्मात् ज्योतिषां स्तोमोऽस्ति तस्माज्ज्योतिष्टोम इति हि अस्य वाक्यस्यार्थः अनेन तांडिम ब्राह्मण प्रदर्शितस्यैवार्थस्य लाभात् विग्रहप्रदर्शनपरत्वांगी-कारे हि शब्दवैय्यर्थ्यापत्तेः वृत्तिपदार्थमात्र प्रदर्शनपरतयाऽन्यपदार्थाप्रद-र्शनस्यादोषत्वाच्च न हि समासे प्रदर्शनीयें सर्वेपि पदार्थाः प्रदर्शनीया इत्यत्र नियामकमस्ति ॥

(रा.) यच्च न च मीमांसकरीतिर्माध्वैर्नांगीक्रियतेऽतस्तदुल्लंघनं न दोषायेतिशंक्यं । 'अंगीकृतत्वादपि तैः पदानां तु पृथक् पृथक्

क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणं'

इतिअनुव्याख्यान श्लोकेन 'मीमांसकमतेपीदं समान' मित्यंतेन श्लोकेन 'उच्यते इत्यादिना महावाक्यभेद एव दूषणं न त्ववांतरभेद इति तदस्माक-मपि समान' मित्यंतेन सुधाग्रंथेन च मीमांसक सिध्दांतरीतेः स्वोक्तार्थ-साक्षित्वेन कथनात् इति ॥

(खं.) तदपितुच्छं वेदानां कार्यपरत्वात् ब्रह्मणि वेदा न प्रमाण-मिति मीमांसकैरुक्ते सिध्दपरत्वमपि वेदस्य वर्तते अतः वेदानां ब्रह्मणि

प्रामाण्यमिति 'कार्यता च न काचित्स्यादिष्टसाधनतां विनेत्यादिना प्रदर्श्य अस्तु वा कार्यपरत्वं वेदानां तथाप्यात्मानमुपासीतेत्युपासनाकार्यकर्मतया प्रतीतस्य ब्रह्मणः स्वरूपं प्रतिपादयतां सत्यज्ञानादि वाक्यानां ब्रह्मणि प्रामाण्यसंभवादिति मीमांसकंप्रति सिद्धांतिभिरुक्ते सत्यज्ञानादि-वाक्यानां कथं स्वार्थे तात्पर्यं सत्यत्वे विधातव्ये ज्ञानत्वादीनामनुवादेन भाव्यं ज्ञानत्वे च विधातव्ये सत्यत्वादीनां न चैतत्संभवति युगपदाकार-द्वयविरोधादिति वदंतं मीमांसकंप्रति सत्यं ब्रह्म ज्ञानं ब्रह्मेति पृथगन्वयेन पृथक् वाक्यत्वांगीकारात् च वाक्यभेदः अवांतरवाक्यभेदस्यादूषणत्वा-दिति 'पृथगेव च वाक्यत्व पृथगन्वयतो भवेत् । अवांतरत्वाद्वाक्यानां वाक्यभेदो न दूषणं' इति समाधानमभिधाय अवांतरवाक्यभेदस्यापि दोषत्वे 'अरुणयैकहायिन्यापिंगाक्ष्यामवासोमंक्रीणाति' त्यादौ त्वयापि पृथगन्वयेन पृथग्वाक्यत्वमिति भवतोऽपि वाक्यभेदः दूषणं स्यात् त्वया महावाक्य-भेद एव दोषो न त्ववांतरवाक्यभेद इत्येव समाधेयं तदेव समाधानमस्मा-कमपि समानमित्येवानुव्याख्यानसुधयोरभिप्रेतत्वात् तथाच स्वोक्तार्थे साक्षित्वेनकथनादित्युक्तिः अनुव्याख्यानसुधावाक्यार्थाज्ञानविजृंभितैवेति॥

(रा.) अत्रायं कक्ष्याक्रम इत्यारभ्य सप्तमीकक्ष्या इत्यंतो ग्रंथः ॥

(खं.) अस्मदीय चंद्रिकादि ग्रंथासंबंधत्वादनेकदोषदुष्टोप्यु-दास्यत एव न तु निराकरणाय कक्षीक्रियते ॥

(रा.) नित्यानित्यवस्तुविवेकाद्यानंतर्यमित्यारभ्य ......... भाष्यकारेणेतिषष्ठीकक्ष्येत्यंत रामसुब्रह्मण्यवाक्यस्य ज्ञानकांडे कर्मफला-नित्यत्वप्रतिपादकवाक्यैः सह ज्ञानफलनित्यत्वप्रतिपादकानि वाक्यान्यु-पलभ्यंते कर्मकांडे तु कर्मफल नित्यत्वप्रतिपादकानि वाक्यान्युपलभ्यंते न तु ज्ञानफलस्यानित्यता प्रतिपादकानि। अतः ब्रह्मज्ञानफलं नित्यं वा अनित्यं वा कर्मफलं नित्यं अनित्यं वेत्यत्रानित्यत्वकोटेः उत्कटत्वेन तस्य संभा-वनारूपत्वेन संशयरूपत्वाभावात् तादृशनिश्चयात्मक ज्ञानस्यविचारात्-पूर्वमनुत्पत्तावपि संभावनात्मकस्य विचारात्पूर्वं जननसंभवात् संशयस्य

वैराग्यजनकत्वाभावेपि उक्तसंभावनायाः वैराग्यकारणत्वसंभवात् नित्यानित्यवस्तुविवेकस्याधिकारिविशेषणत्वं युक्तमिति शांकरमतमिति पर्यवसितोऽर्थः ।।

(खं.) स च न युक्तः ज्ञानकांडे कर्मफलानित्यत्वप्रतिपादकवाक्यसहितज्ञानफलनित्यत्वप्रतिपादकवाक्यानि संतीत्यादेरेव विचाररूपत्वेन विचारात्पूर्वं संभावनात्मकज्ञानजननसंभवादित्यस्यायुक्तत्वात् । उत्कटैककोटिकसंभावनायाः संशयरूपत्वस्य सर्वतांत्रिकैरंगीकारात् सर्वतांत्रिकांगीकृतसंशयलक्षणस्यापि उक्तसंभावनायां सत्वेन च उक्तसंभावनायाः संशयरूपत्वाभावोक्तेरयुक्तत्वात् । त्वन्मतेनित्यानित्यवस्तु विवेकस्याधिकारिविशेषणत्वायोगस्योक्तत्वाच्च ।।

अथशब्दोक्तानंतर्यप्रतियोगितितिक्षां विषयालंबुद्धिरूपां वदंति आचार्यवाचस्पतिमिश्राः सन्यासरूपां वदंति विवरणाचार्या इत्यारभ्य तृतीया कक्ष्येत्यंतानां रामसुब्रह्मण्योक्तव्याख्यानां चंद्रिकाद्यस्मद्ग्रंथासंबंधित्वादेतद्ग्रंथे निवेश एवायुक्तः । परंतु ग्रंथबाहुल्यख्यापनार्थ एवेति सुगममेव विदुषामिति तत्संबधिगुणदोषविचारो नात्र क्रियते ।।

ब्रह्मणो जिज्ञासा ब्रह्म जिज्ञासेति शेषे षष्ठी न तु कर्मणि षष्ठी इत्यारभ्य दशमीकक्ष्येत्यंतवाक्यैरभिप्रेतकर्मणिषष्ठीसमासस्यास्माकमप्यभिमतत्वात् उपपादनप्रकारस्य वैषम्येऽपि सदोषत्वेऽपि च विस्तरभया दुपरम्यते.

(चं.) ज्ञातं सामान्यतोज्ञातं विशेषेण विचार्यते ।
ज्ञाताज्ञातविभागस्तु निर्विशेषे न युज्यते ।।

सामान्यरूपेणज्ञातं विशेषरूपेणाज्ञातं वस्तु विचारविषयो भवति यथा पर्वतत्वेन ज्ञातः वन्हिमत्वेन चाज्ञातः पर्वतः । अद्वैतिमते ब्रह्मणि सामान्यरूपविशेषरूपयोरभावेन विचाररूपजिज्ञासाया असंभवात् जिज्ञासासूत्रं परमतेऽसंगतमिति ।।

(रा.) यद्विषयकं ज्ञानं संशयरूपं जायते तन्निर्णयाय तद्विषय जिज्ञासेत्याभाणकः संशयत्वं च संदिहानीत्यनुभवसिध्दविषयिताविशेषः निर्विकल्पकसविकल्पकसाधारणः .........तथा च निर्विकल्पकात्मकं संशयापरनामधेयं आपातज्ञानं यस्य जायते तस्य तन्निर्णयाय तज्जिज्ञासा जायत इति तं जिज्ञासुमुपलभमानो भगवान् बादरायणः 'अथातो ब्रह्म-जिज्ञासे' ति सूत्रयामास इति ॥

(खं.) तत्तुच्छं निर्विकल्पक संशयस्य कारणप्रमाणयोरभावेन शशविषाणायितत्वेन निर्विकल्पकसविकल्पक साधारणविषयिता विशेष-रूपसंशयत्वस्याप्रामाणिकत्वात् सविकल्पक संशयस्य तु निर्णायका-भावसहकृतोभयकोटिसहचरित साधारणधर्मवत्धर्मिज्ञानसाध्यत्वेन जिज्ञा-सावत् सामान्यरूपेणज्ञाते विशेषरूपेणाज्ञाते धर्मिण्येवोदयात् अद्वैत्य-भिमतब्रह्मणः सामान्यरूपविशेषरूपयोरसंभवेन संशयानुत्पत्या जिज्ञा-सानुत्पत्तेर्ध्रौव्यात् ॥

(रा.) प्रत्यक्षत्वानुमितित्वादीनां 'साक्षात्करोमि' 'अनुमिनोमी' त्याद्यनुव्यवसायसिध्दलौकिक विषयितादिरूपतावत् संशयत्वस्य निर्वि-कल्पकसविकल्पकसाधारणविषयिता विशेषरूपत्वं 'संदिहानी' त्यनु-भवसिध्दं [1] अन्यथा मनोरूपेंद्रियायोग्यानंतवस्तुघटितत्वेन इंद्रियजन्य-ज्ञानत्वादिरूप प्रत्यक्षत्वादीनां 'साक्षात्करोमि' इत्यादिमानसप्रत्यक्षात्मक-सार्वजनीनानुभवारोहासंभवादिति यदुक्तं ॥

(खं.) तत्तुच्छं चक्षुःसंयोगादिरूपलौकिकसन्निकर्षप्रयोज्यत्वा-दिरूपलौकिकत्वस्य मनोरूपेंद्रियायोग्यवस्तुघटितत्वेन तादृशप्रत्यक्षत्व-स्यापि मानसप्रत्यक्षात्मकसार्वजनीनानुभवारोहासंभवस्य दुर्वारतया 'सुरभिश्चंदनखंड' इति चाक्षुषे चक्षुरयोग्यसौरभस्य ज्ञानलक्षणाप्रत्या-

१. प्रत्यक्षत्व संशयत्वादीनां इंद्रियजन्यज्ञानत्व, विरुध्दानेक धर्म-प्रकारकैकविशेष्यकज्ञानत्वरूपत्वे.

सत्येव मनसोऽयोग्यानामपि वस्तूनां अलौकिकप्रत्यासत्या मानस-प्रत्यक्षे भानस्य त्वयांगीकर्तव्यत्वेन तद्वदेव विरुद्धानेकधर्मप्रकारकैक विशेष्यक ज्ञानत्वरूपसंशयत्वस्यापि मानसप्रत्यक्षात्मक सार्वजनीनानुभवारोहसंभवात् ।। संदेहत्वस्य उक्तविषयितारूपत्वे संदेहः उक्तविषय तावान् इति वाक्यस्य घटोघट इतिवाक्यवन्निराकांक्षत्वापत्तेः । तुल्य-न्यायेन ज्ञानत्वस्यापि जानामीत्याद्यनुभवसिद्धविषयिताविशेषरूपत्व-स्यांगीकर्तव्यत्वेन ब्रह्मज्ञानं निर्विषयकमिति तावकोक्तीनां व्याहतत्वापाताच्च । नित्यानित्यवस्तुविवेकस्य भ्रमत्वाभ्रमत्वविकल्पपूर्वकं चंद्रिकाकृदुक्तदूषणपरिहारप्रदर्शनावसरे व्यवहारदशाबाध्यार्थ विषयकत्वरूपप्रमात्वस्य ब्रह्मज्ञानबाध्यार्थ विषयकत्वरूप भ्रमत्वस्य इति प्रमात्व-भ्रमत्वयोः उक्तविषयिताविशेषातिरिक्ततायाः त्वयैवोक्तत्वेन तद्विरुद्धत्वाच्च । विवरणकारादिभिरपि विषयिताविशेषातिरिक्तप्रमात्वादीनामंगीकारेण तद्विरोधाच्च ।।

(र ) न च मदुक्तितदुक्त्योर्मतांतरानुवादरूपत्वमिति वाच्यं।।

(खं.) त्वदुक्तस्य ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहारदशाबाध्यार्थविषयकत्वरूपप्रमात्वस्य च त्वदतिरिक्तैः कैरप्यनंगीकाराद्विवरणाद्युक्तस्य मतांतरानुवादत्वे तदीयज्ञापकस्य वा विपक्षे बाधकस्य वा विरहेण निष्कारणं मतांतरानुवादरूपत्वोक्त्ययोगात् अन्यथा सर्वस्यापि मतांतरानुवादत्वापत्या कस्यापि स्वमतत्वाभावापत्तेः ।।

(रा.) न च 'केवलो निर्गुणश्च' 'यस्यामतं तस्यमतं' तदेव ब्रह्मत्वं विद्धि 'नेदं यदिदमुपासते 'नात्र काचन भिदास्ति' 'एकधैवानुद्रष्टव्यं' इत्यादीनां सर्वधर्मनिषेधकानामुपनिषद्वाक्यानां मदुक्तनिर्विकल्पकसंशयकारणानां उक्तवाक्यजन्यनिर्विकल्पकज्ञानस्य संशयत्वे तादृशज्ञानोत्तरं' संदिहानि' इत्यनुव्यवसायरूपप्रमाणस्य च सत्वात् निर्विकल्पकसंशयस्य कारणप्रमाणयोरभावेन शशविषाणायितत्वोक्तिरसंगतेति वाच्यं ।।

(खं.) केवलो निर्गुणश्चेत्यादिवाक्यानां सर्वधर्मनिषेधकत्वसंशय-जनकत्वयोरेवाभावात् निर्विशेषविषयकनिर्विकल्पकात्मकसंशयजनक-त्वस्य तु सुतरां । तथाहि "[1]एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतां-तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षीचेता केवलो निर्गुणश्च' इति। अस्यार्थः एकः असहायः किंवा सजातीयवस्तुशून्यः किंवा प्रधानः एकत्व-संख्याविशिष्टो वा, देवः क्रीडादिगुणविशिष्टः प्रकाशरूपो वा सर्वभूतेषु गूढः इतराज्ञेयः सन्वासकर्ता न केवलं सर्वभूतेषु गूढः सर्वव्यापी सर्व-भूतेषु अंतः स्थित्वा नियामकः सर्वकर्मणां [2]स्वामी सर्वभूतानि अध्यव-स्यंते अस्मिन्निति व्युत्पत्त्या सर्वभूताधारः साक्षी साक्षाद्दृष्टा ज्ञानरूप-शुद्धः 'निर्गुणः' सत्वरजस्तमोगुणरहित इति अस्यां श्रुतौ नियामकत्व-साक्षाद्रष्ट्रत्वफलस्वामित्वाद्यनेकगुणानां श्रवणेन निर्गुणपदस्य सत्वरज-स्तमोगुणराहित्यार्थकत्वेन एतन्मंत्रव्याख्यावसरे '[3]निर्गुणं गुणभोक्तृचे'-तिगीताव्याख्यानावसरे च शंकरभाष्येपि तथाव्याख्यातत्वेन 'परास्य-शक्तिर्विविधैवश्रूयते स्वाभाविकीं ज्ञानबलक्रियाचे' त्यादिपूर्ववाक्यैः 'नि-त्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्' इत्याद्युत-रवाक्यैश्च ज्ञानबलक्रियासर्जननित्यत्वाद्यनेकधर्माणामुक्तत्वेन- 'एकोदेव' इतिमंत्रेऽपि अनेकधर्माणामुक्तत्वेन येनावृतं नित्यमिदंहिसर्वज्ञः काल-कालो गुणी सर्वविद्यः इति '[4]पूर्ववाक्ये सविश्वंकृद्विश्वविदात्मयोनिर्ज्ञः कालकालोगुणीसर्वविद्यः इति उत्तर [5]वाक्ये गुणी इति पदाभ्यां साक्षाद्गुणवत्वोक्तेः निर्गुण इति पदं पारमार्थिकगुणाभाववोधकं नेति त्वयापि विष्णुरहस्य विवरणे उक्तत्वेन च पूर्वोत्तरवाक्यस्वघटितवाक्य-विरुद्धतया [6]गुणसामान्याभावपरतायाः वक्तुमशक्यत्वेन च 'केवलो निर्गुण' इति श्रुतेः सर्वधर्मनिषेधकत्वोक्तिरसंगतैव । केवलोनि-र्गुणश्चेतिवाक्यात् एकत्वदेवत्वादि गुणविशिष्ट परमात्मविषयक निश्चया-

१. श्वेताश्वेतरोपनिषत् (६-११) ।। २. फलदाता ।। ३. गी १३ श्वे., ५-२. ।। ५. श्वे६-१६ ।। ६. धर्म. ।।

त्मकबोधोत्पत्तेरनुभवसिद्धत्वेन निर्विकल्पकनिश्चयस्य तादृश संशयस्य वा उत्पत्तेरननुभवात्। उक्तवाक्यजन्यज्ञानोत्तरं 'संदिहानि' इत्यनुव्यवसायस्यापि केनाप्यननुभूतत्वात् "[7]यस्या मतं तस्य मतं मतं यस्य न वेद सः' इति श्रुत्यर्थस्तु 'यस्य येन मया ब्रह्म' अमतं सम्यक् मननविषयीकृतं न भवतीति 'मतं' मननविषयीकृतं 'तस्य तेन ब्रह्म 'मतं' मननविषयीकृतं। ब्रह्मापरिच्छिन्नत्वमननात्। 'यस्य' येन मया ब्रह्म 'मतं' सम्यक् मननविषयीकृतमितिज्ञातं स न वेद ब्रह्मपरिच्छिन्नत्वज्ञानात् इति तथा च अस्यां श्रुतौ ब्रह्मणः सर्वधर्मनिषेधो न क्रियते न वा अस्याः श्रुतेः निर्विकल्पकसंशयो जायते शांकरभाष्यादावप्येवं रीत्यैवार्थस्योक्तेः सविकल्पकनिश्चयात्मकज्ञानस्यैवेतादृशवाक्यादुत्पत्तेरनुभवात् 'तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते' इति वाक्य स्यार्थः यत् ब्रह्म 'वाचा' वेद वाक्येन सम्यगुदितं न भवति 'येन' 'वाक्' वेदवाक् अनूद्यते त्वं 'तदेव' साकल्येन वेदाज्ञेयं ब्रह्मगुणपूर्णं जानीहि यदिदं मानसवासनापरिणतं वस्तु ध्यायंति इदं न ब्रह्म मानसवासनापरिणतवस्तुनो मनसावलोकनस्य ध्यानत्वेन तस्य ब्रह्मत्वाभावात् इति। तथाच अस्यां श्रुतौ ब्रह्मणः धर्मनिषेधो न क्रियते प्रत्युत वेदाभिव्यक्तिकारणत्वादिधर्माः श्रूयंते नवा अनया श्रुत्या निर्विकल्पकसंशयो जायते इत्यनुभवः केषांचित् साकल्येन वेदाज्ञेयत्व वेदाभिव्यक्ति कारणत्वादिधर्मयुक्तं ब्रह्म[2] उपासनाविषयीभूतमानसवासनापरिणतं वस्तु न ब्रह्म इति सविकल्पकनिश्चयस्यैव अनुभवात् तथैव शंकरादिभिर्व्याख्यातत्वात्॥

'नात्र काचन भिदास्ति' इति वाक्यं तु 'नेह नानास्ति किंचने'ति वाक्यवत् अंतर्यामिरूपाणां भेदं निषेधति न तु जीवब्रह्मणोर्भेदं इति इयं श्रुतिरपि न सर्वधर्मनिषेधिका न वा निर्विकल्पकसंशयजनिकेति 'एकधैवानुद्रष्टव्यं' 'एतदप्रमेयं' ध्रुवं विरजः परआकाशादज आत्मा महान् ध्रुवः

७. केनोपनिषत्.

१. तलवकारोपनिषत्. २. ध्यान.

इति श्रुतिरपि अप्रमेयत्वध्रुवत्वाद्यनेकधर्मप्रतिपादिकेति न सर्वध निषेधिका न वा निर्विकल्पकसंशयजनिका प्रत्युत आगमेन एकप्रकारे दर्शनविषीकर्तव्य इति आगमजन्यज्ञानस्य सविकल्पकत्वबोधिकेति त्वदुदाहृतप्रमाणानां सर्वधर्मनिषेधकत्वं नापि निर्विकल्पकसंशयजनक 'संदिह्मनीति'त्वदुक्तानुव्यवसायस्य वाक्यजन्यज्ञानोत्तरकालीनत्वे वाक्य जन्यज्ञानविषयकत्वे निर्विकल्पकसंशयरूपवाक्यजन्यज्ञानविषकत्वे प्रमाणाभाव इति ॥

(रा.) यत्तु यस्य तु पुरुषधौरेयस्य नितांतविमलस्वांतस्य श्री रामचंद्रकृपाकटाक्षवीक्षणादेवोदाहृतोपनिषद्वाक्यैरनापातापरनामधेयं नि श्चयात्मकमेव ज्ञानं प्रथमं जायते न तस्य जिज्ञासाशास्त्रेऽधिकार इति

(खं.) तत्तु अनुमन्यामहे। सर्वेषामपि उदाहृतोपनिषद्वाक्यैरन पातापरनामधेयनिश्चयात्मकज्ञानस्यैव प्रथमं जायमानत्वेन केषामपि त्व न्मते त्वदुक्तरीत्या जिज्ञासाशास्त्रेऽनधिकारात् जिज्ञासासूत्रमसंगतमिति किंच उक्तवाक्यजन्यसंशयनिश्चयोर्निर्विशेषब्रह्मविषयकनिर्विकल्पकज्ञान त्वे संशयत्वेनाभिमतस्य निश्चयत्वं निश्चयत्वेनाभिमतस्य संशयत्वं स्यात् व्यावर्तकाभावात् ॥

न च 'संदिहानि निश्चिनोमि' इति तत्तदनुव्यवसायात्मकफलवै लक्षण्याद्वैलक्षण्यमिति वाच्यं एतद्वाक्यजन्यज्ञानोत्तरं संदिहानि निश्चि नौमि इत्यनुव्यवसायात्मकफलवैलक्षण्यस्यैवाननुभवात्। फलवैलक्षण्या नुभवांगीकारे वा संदेहे निश्चये च विषयवैलक्षण्यं कल्प्यतां नहि निर्वि कल्पकब्रह्ममात्रविषकसंशय एव 'संदिहानि' इत्यनुव्यवसायविषयः निर्विकल्पक ब्रह्ममात्रविषयक निश्चय एव निश्चिनौमि, इत्यनुव्यवसाय विषय इत्यत्र ज्ञापकमस्ति यदि निर्विकल्पकब्रह्ममात्रविषयकसंशयवानहं निर्विकल्पकब्रह्ममात्रविषयक निश्चयवानहं इत्याकारोऽनुव्यवसायः स्यात् तदा कथंचित्फलवैलक्षण्येन विषयतावैलक्षण्यकथनं स्यात् सचानुव्यवसाय एव आकाशपतनायितः। तदेतत्सर्वं श्रीमट्टीकाकृत्पादाचार्यकृताकरग्रंथे

निपुणतरमुपपादितमिति निर्विशेषे ब्रह्मणि संशयासंभवात् जिज्ञासाया अप्यसंभवात् जिज्ञासासूत्रमनुपपन्नं ॥

न च विप्रतिपत्तिवाक्यात्संशयमाहुः संप्रतिपन्ना इत्युदाहृतकेवलो-निर्गुणश्चेति वाक्यात्संशयोदय इतिवाच्यं विप्रतिपत्तिवाक्यानां विरुद्ध-कोटिद्वयोपस्थितिद्वारा मानससंशयजनकत्वं न शाब्दबोधात्मकसंशय-जनकत्वं इति संप्रतिपन्नं संप्रतिपन्नानां। अन्यथा विप्रतिपत्तिवाक्यात्संशयं न वदेयुः किंतु वाक्यादेव तस्मात्केवलवाक्यात् शाब्दबोधात्मकसंशयजन-नस्य संप्रतिपन्नानामसंप्रतिपत्तेः ।

(रा.) यत्तु शाब्दबोधे तात्पर्यनिर्णयस्य हेतुत्वात्तात्पर्य-निर्णयजन्यशाब्दबोधस्य कथं संशयत्वमिति पंचमी कक्ष्या दोषविधया-शाब्दसंशयहेतोस्तात्पर्यसंशयस्यापसारणद्वारा तात्पर्यनिर्णयस्य शाब्द-निश्चयत्वावच्छिन्नं प्रतिहेतुत्वेऽपि शाब्दत्वावच्छिन्नं प्रत्यहेतुत्वात् शाब्द-संशयोत्पत्तिः तदेतत् श्रीगौडब्रह्मानंदकृतसूत्रमुक्तावल्यां स्पष्टमिति षष्ठीकक्ष्या इति कक्ष्याद्वयमुक्तं

(खं) तदस्मदुक्तप्रकारानाक्षेपकत्वाद्वाक्यात्संशयोत्पत्ति प्रकारा-नुपन्यासाच्चोपेक्षणीयमेव निर्विशेषेत्वदभिमते ब्रह्मणि प्रत्यक्षाविषयत्वेन अनुमित्यविषयत्वेन अवाच्यत्वेन च पूर्वं प्रत्क्षानुमितिशक्तिप्रयोज्यशाब्द-ज्ञानानां असंभवात् शक्यप्रवाहसंबंधित्वेन तीरत्वरूपेण च ज्ञात एव तीरे गंगापदलक्षणायाः दृष्टेः असंगे निर्विशेषे त्वदभिमते ब्रह्मणि शक्यसंबंधि-त्वरूपधर्मस्य ब्रह्मत्वादिधर्मस्य च पूर्वोक्तरीत्या प्रत्यक्षादिजन्यज्ञाना संभवेन लक्षणावृत्तिविषयत्वस्याप्यसंभवेन ज्ञानप्रयोजकस्य प्रत्यक्षाद्यन्य-तमस्याभावात् साधारणधर्मवद्धर्मिज्ञानरूपसंशयप्रयोजकस्याप्यभावात् संशयो वा निश्चयो वा नोदेतुमर्हतीति त्वदभिमतं ब्रह्म शशविषाणायित-मेवेति सप्तमीकक्ष्याभिप्रायः साधुरेव

(रा.) न च शब्दज्ञानानुपाती वस्तुशून्यो विकल्पाख्य इति पातंजलसूत्रे निःस्वरूपस्यापि शशशृंगादेः शब्दजन्यविकल्पाख्यवृत्ति-

विषयत्वोक्तत्या सन्मात्ररूपस्य निर्विशेषस्य शब्दजन्यवृत्तिविषयत्वस्य कैमुत्तिकन्यायमित्धत्वादित्यष्टमीकक्ष्येति वाच्यं ।।

(खं.) शशश्रृंगादिशब्दानां यौगिकत्वेन स्वावयवभूतपदगत-शक्तया वाक्येन विशिष्टार्थबोध इव अवयवगतशक्तया विशिष्टार्थ-बोधसंभवः स चार्थः सन् असन्वेत्यन्यदेतत् त्वदभिमतब्रह्म अवाच्यत्वात् अलक्ष्यत्वात् नैकपदार्थः अखंडत्वात् नानेकपदरूपवाक्यार्थः तस्मात् शशश्रृंगादिशब्देन तद्विषयकशाब्दबोधसंभवेऽपि त्वदभिमतब्रह्मविष-यकबोधः असंभव्येवेति कैमुत्तिकन्यायस्यैवासित्धेः 'शब्दज्ञानानुपाती वस्तु शून्योविकल्प' इति पातंजलसूत्रमपि त्वद्रीत्याऽनुपन्नार्थमेव तथाहि विकल्पः किंज्ञानरूपः किंवा अतिरिक्तः नाद्यः तेनास्मदभिमतस्यैव सित्धेः। न द्वितीयः कथायां त्वद्वाक्यार्थभूतस्य शशविषाणायितस्य जग-न्मिथ्यात्वस्य मद्वाक्यार्थभूतस्य त्वां प्रति शशविषाणायितस्य जगन्मिथ्या त्वस्य मद्वाक्यार्थभूतस्य त्वं प्रति शशविषाणायितस्य जगत्पारमार्थिक-त्वस्य त्वदीयमदीयशब्दाभ्यां प्रतीतेरनुभवात्। अन्यथा उत्तरदानार्थम-प्रवृत्तिप्रसंगात् अनुभवविरोधापत्तेश्च शशविषाणं नास्तीत्यजानतः पुरु-षस्य गोविषाणशब्दादिव शशविषाणशब्दादपि प्रतीतेरनुभवात् पातंजल-सूत्रस्य प्रामाण्यांगीकारे कारणाभावाच्च। किंच त्वदभिमतब्रह्मणः स्व प्रकाशजीवाभिन्नत्वेन संशयजिज्ञासयोरसंभवाच्च जिज्ञासासूत्रानुपपत्तिः।।

न च वृत्तिविषयान्यतरोपहित प्रकाशस्यैव संशयविरोधित्वेन प्रकाशरूपमपि निर्विषयकमिति विषयोपहितत्वाभावेन संशयाविरोधि-त्वेन संशयजिज्ञासयोः संभवात् जिज्ञासासूत्रोपपत्तिरितिवाच्यं। निर्विषयक-ज्ञानस्यैवाननुभवात् अनुभवविरुत्धस्याप्यंगीकारे शशविषाणं घटोवा नि-र्विषयकज्ञानरूपं स्यात् ब्रह्मप्रकाशस्य निर्विषयत्वे तेन व्यवहारोपि न निष्पद्येत मामहंजानामीति अहमज्ञ इत्यादिस्वरूपभूतप्रकाशस्य सविषय-त्वानुभवाच्च शांकरभाष्यगांभीर्यनिर्णयाख्ये स्वकृतग्रंथे ब्रह्मस्वरूपभूत-ज्ञानस्य ब्रह्मविषयकत्वं शंकराभिप्रेतमिति त्वयैवोक्तत्वाच्च ब्रह्मरूपं ज्ञानं सविषयमेवेति तस्यजीवाभिन्नत्वेंगीकृते तस्यापि सित्धत्वापत्या संशय-

जिज्ञासयोरनुपपत्तेः दृढत्वात् धर्मादिविषयकवृत्तेरेवाज्ञानसंशयविरो-धित्वदर्शनेन तथैव त्वयाप्यंगीकारेण वृत्तेरेवाज्ञानसंशयविरोधित्वसंभवे वृत्युपहितचैतन्यस संशयविरोधित्वे बीजाभावात्प्रमाणाभावाच्च ॥

ब्रह्मजिज्ञासा. धर्मजिज्ञासानिरूपितैकशास्त्र्यवतीत्यारभ्य[1] एक ग्रंथत्वानापत्तेरित्यंतोग्रंथः चंद्रिकादिसित्धांतग्रंथासंबत्धत्वात्ः दोषयुक्तो-प्यनवसरदुःस्थ इत्युपेक्षामेवार्हति तदेवं परमते चंद्रिकोक्तरीत्या अधिकारिविषयप्रयोजनाद्यसंभवात् जिज्ञासाया असंभवेन जिज्ञासा सूत्रानुपपत्तिः ॥

सित्धांतेतु अधिकारिविषयप्रयोजनसंभवेन जिज्ञासासूत्रोपपत्ति-रिति साधूक्तं चांद्रिकाकृद्भिरित्यलमपहसनीय परप्रक्रियानिरासच-वितचर्वणेन प्रामाणिकसित्धांत प्रक्रियासाधन चंदनघर्षणेन च इति ॥

॥ इति जिज्ञासाधिकरणं समाप्तम् ॥

१. चतुर्दशाधिकशतपत्रमारभ्य एकोनविंशत्यधिक शतपत्रपर्यंतः ११४—११५—११६—११७—११८—११९.

॥ श्री ॥

॥ अथ जन्माधिकरणम् ॥

ॐ जन्माद्यस्य यतः ॐ



(चं.) (१२७) अत्र परैः— न तावदुपलभ्यमानं जगदेव ब्रह्मलक्षणं, तस्यानित्याशुद्धपरिच्छिन्नस्य तद्विरुद्धब्रह्मलक्षणत्वानुपपत्तेः। नापि नित्यत्वकारणत्वादिर्ब्रह्मधर्मः, तस्यानुपलब्धेरिति प्राप्ते, मा भूदनुभूयमानं जगत्तद्धर्मतया तदात्मतया वा लक्षणं, तदुत्पत्त्यादि तु भविष्यति, देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति सिद्धान्तितम्। तन्न, जिज्ञास्यस्येतरव्यावृत्त्यर्थं लक्षणसूत्रेऽस्मद्रीत्याऽव्यावृत्तिपूर्वपक्षस्यैवोचितत्वात्। अनित्यादिरूपस्य शब्दादेः नित्यादिरूपाकाशादिलक्षणत्वदर्शनाच्च। जगत इव कारणत्वस्याप्यनात्मतया आत्मविरुद्धस्वभावत्वाच्च। जिज्ञास्यत्वेनाद्यसूत्रे प्रकृतस्य निर्विशेषब्रह्मणो भ्रमाधिष्ठानत्वेनाकारणत्वाच्च। अधिष्ठानत्वस्यैव विवक्षायां तु श्रुतिसूत्रयोर्जन्मोक्त्ययोगात्। देशान्तरप्राप्तेः सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वाभावाच्च। न चात्र सूत्रे "यतो वै" इत्यादिश्रुतौ उत्पत्त्यादिकमद्वितीये ब्रह्मणि लिङ्गत्वेनोच्यत इति त्वयापि स्वीकृतमिति यत्,

(रा.) तन्न, आकाशनित्यत्वस्य वेदान्तिमतेऽसिद्धेरिति, यदुक्तं,

(खं.) तत्तुच्छम्, "आकाशवत्सर्वगतश्च नित्यः" इति ब्रह्मण

नित्यत्वविषये आकाशस्य दृष्टान्तत्वोक्त्या अनुपचरितनित्यत्वस्य "अनादिर्वा अयमाकाशः" इत्यनादित्वस्य च वेदेनैव सिद्धतया वेदान्तिमतेऽसिद्धेरित्युक्तेर्वेदार्थाज्ञानविजृम्भितत्वात् ॥

(रा.) विरुद्धस्वभावस्य स्वरूपलक्षणत्वासम्भवेऽपि तटस्थलक्षणत्वसम्भवात् जगतोऽपि कारणत्वसम्बंधेन लक्षणत्वस्येष्टत्वात् । पूर्वपक्षे जगतो लक्षणत्वासम्भवशङ्का तु स्वरूपलक्षणत्वाभिप्रायेति यदुदितं,

(खं.) तत्तुच्छम् आत्मस्वभावविरुद्धस्वभावस्य कारणत्वस्य लक्षणताया इष्टत्वे जगतः विरुद्धस्वभावत्वेन न सम्भवतीति खण्डनानुपपत्तेः । न च विरुद्धस्वभावस्य कारणत्वस्य स्वरूपलक्षणत्वासम्भवेऽपि तटस्थलक्षणता सम्भवति, जगतः लक्षणत्वनिषेधस्तु स्वरूपलक्षणत्वाभिप्रायेणेति वाच्यम्, कारणत्वसमकक्ष्यतया जगतः लक्षणत्वनिराकरणेन त्वदुक्ताभिप्रायस्य तद्वाक्येनाप्रतिभासात् । लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानाविशेष्यत्वे सति लक्षणत्वं तटस्थलक्षणलक्षणमिति त्वया वक्ष्यमाणत्वेन कारणत्वे ब्रह्म जगत्कारणमिति वाक्यघटकोक्तपदनिरूपितलक्षणावृत्तिज्ञाननिरूपितविशेष्यत्वसत्वेनोक्तपद निरूपितवृत्तिज्ञानाविशेष्यत्वादि घटिततटस्थलक्षणलक्षणस्याप्यनुपपत्तेः । एतेन जगतोऽपि तटस्थलक्षणत्वं दूषितं ज्ञातव्यम्, लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितलक्षणावृत्तिज्ञानविशेष्यत्वेनोक्तविशेष्यत्वाभावस्याभावात् ॥

(चं.) अद्वैतिरीत्या जिज्ञास्यत्वेनाद्यसूत्रे प्रकृतस्य निर्विशेषब्रह्मणो भ्रमाधिष्ठानत्वेनाकारणत्वाच्च द्वितीयसूत्रे जन्मादिकारणत्वकथनमयुक्तम्, अधिष्ठानत्वस्यैव विवक्षायां श्रुतिसूत्रयोर्जन्मोक्त्ययोग इति यदभिहितं,

(रा.) तन्न, "तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् । यदि प्रसिद्धं न तर्हि जिज्ञासितव्यम् । अथ चाप्रसिद्धं, नैव शक्यं जिज्ञासितुमिति, उच्यते, अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं

सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं, ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुगमात्" इति जिज्ञासाधिकरणशाङ्करभाष्ये जिज्ञास्यब्रह्मणः 'नित्यशुद्धबुद्धमुक्तस्वभावं' इति निर्विशेषत्वमुक्त्वा 'सर्वज्ञं सर्वशक्ति' इत्यादिना सगुणब्रह्मत्वोक्त्या सगुणस्याप्युपहितब्रह्मणः जिज्ञास्यत्वावगमेन तत्र कारणत्वसम्भवात्। शांकरभाष्यव्याख्याने रामानन्दीये उक्तभाष्यस्य "परिच्छेदाभावरूपं नित्यत्वं, अविद्यादोषशून्यत्वं शुद्धत्वं, जाड्यराहित्यं बुद्धत्वं, बन्धकाले स्वतो बन्धाभावः मुक्तत्वं च प्रतीयते। एवं सकलदोषशून्यं निर्गुणं प्रसिद्धम्। तथा सर्वज्ञत्वादिगुणकं च तत्पदवाच्यं प्रसिद्धं, ज्ञेयस्य च कार्यस्य च परिशेषे अल्पत्वप्रसंगेन सर्वज्ञत्वस्य सर्वकार्यशक्तिमत्त्वस्य च लाभात्" इति जिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतया व्याख्यानं दृश्यते। एतेनाधिष्ठानत्वस्यैव विवक्षायां श्रुतिसूत्रयोर्जन्मोक्त्ययोग इति परास्तम्। उपहितब्रह्मणि जगत्कारणत्वस्यापि विवक्षितत्वेन श्रुतिसूत्रयोर्जन्मोक्त्यसांगत्यादिति यदुक्तं,

(खं) तत्तुच्छम्, अद्वैतिमते सगुणब्रह्मणः कालादिपरिच्छिन्नत्वेन त्रिविधपरिच्छेदाभावार्थकेन "तद्विजिज्ञासस्व तद्ब्रह्म, ब्रह्मजिज्ञासा" इति जिज्ञासाविधायकश्रुतिसूत्रस्थब्रह्मपदेन ग्रहीतुमशक्यत्वेन सगुणब्रह्मणः जिज्ञास्यतया त्वदीयभाष्यकारोक्तेरसङ्गतत्वात्। "अस्ति तावद्ब्रह्म नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितम्" इति एकस्यैव ब्रह्मणः सगुणत्वनिर्गुणत्वोक्तेर्व्याहतत्वाच्च। शास्त्रयोनित्वाधिकरणे उपहितस्यैव ब्रह्मणः जिज्ञास्यत्वोक्तेः निर्विशेषस्य जिज्ञास्यत्वं त्वार्थिकमिति वदता त्वया ब्रह्मशब्दे सगुणपरत्वस्यैव स्वीकारेण 'जिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतया व्याख्यानं दृश्यते' इत्यस्योत्तरग्रंथविरुद्धत्वाच्च। 'जिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतया व्याख्यानं दृश्यते' इत्यत्र 'जिज्ञास्यब्रह्मणः' इत्यस्य अर्थस्य व्याख्यानासम्भवेनानन्वितत्वाच्च। जन्मादिसूत्रोक्तस्य जगत्कारणत्वस्य सगुणब्रह्मलक्षणत्वे जिज्ञास्यनिर्गुणब्रह्मणः लक्षणोक्त्यभावप्रसङ्गाच्च॥

देशान्तरप्राप्तेः सूर्यगत्यनुमापकत्वेऽपि तल्लक्षणत्वासम्भव इति चन्द्रिकोक्तदूषणपरिहारार्थम्,

(रा.) 'तन्न, लिङ्गत्वस्य लक्षणत्वव्याप्यत्वेन तेन तत्सिद्धेर्निष्प्रत्यूहत्वात् । धूमोऽपि व्यापकतासंबन्धेन वह्नेर्लक्षणमेव, वह्निरितरेभ्यो भिद्यते व्यापकतासंबन्धेन धूमवत्त्वादिति रीत्या धूमस्यापि व्यावर्तकत्वात्' इति यदुक्तम्,

(खं) तत्तुच्छम् । व्यापकतासंबन्धेन धूमस्य लक्ष्यभिन्ने द्रव्यत्वप्रमेयत्वादौ विद्यमानत्वेनातिव्याप्तेर्धूमस्य व्यापकतासंबन्धेन वह्निलक्षणत्वासम्भवात् । व्यापकतासंबन्धेन धूमवत्त्वरूपहेतोः वह्नीतरभेदरूपसाध्याभाववति द्रव्यत्वप्रमेयत्वादौ सत्त्वेन व्यभिचारितया व्यावर्तकत्वासंभवाच्च । लिङ्गत्ववति धूमे लक्षणत्वाभावेन लिङ्गत्वलक्षणत्वयोर्व्याप्यव्यापकभावस्यैवाभावेन देशांतरप्राप्तेः सूर्यगतिलिङ्गत्वेन सूर्यगतिलक्षणत्वसिध्द्युक्तेः व्याप्यव्यापकभावभ्रममूलत्वात् ॥

(रा.) यत्तु, अतात्त्विकस्य. कारणत्वस्य ताज्विकब्रह्मलक्षणत्वासंभव इति चन्द्रिकोक्तमित्याशंक्य ........ 'तन्न, अरुंधत्यामसतस्तारासमूहविशेषत्वस्य तात्त्विकैकताराविशेषरूपारुन्धतीलक्षणत्वप्रसिद्धेः इति यदुक्तं,

(खं.) तत्तुच्छम्, 'अतात्त्विकस्य कारणत्वस्य तात्त्विकब्रह्मलक्षणत्वासम्भवः' इति चन्द्रिकायामनुक्तेः । ब्रह्मनिष्ठत्रैकालिकनिषेधप्रतियोगित्वरूपातात्त्विकत्ववतः कारणत्वस्य ब्रह्मवृत्तित्वघटितब्रह्मलक्षणत्वासम्भवाच्च अरुन्धत्याः सूक्ष्मत्वेन चक्षुःसन्निकर्षस्य झडित्यसम्भवेन तत्समीपदेशवर्तिस्थूलतारासमूहं प्रदर्श्य तत्समीपवर्त्यरुंधतीप्रदर्शनं क्रियते, न तु अरुन्धत्यास्तारासमूहविशेषत्वं लक्षणम् । अतः अतात्त्विकस्य लक्षणत्वविषये तदुदाहरणस्यासङ्गतत्वमेव । तुष्यत्विति न्यायेन बाधकाभाव इत्यपि वक्तुं शक्यं च ॥

(चं) यच्चोक्तं परैः जन्मादीत्यत्रोत्पत्तिस्थितिभङ्गमेवो-वोच्यते, न त्वन्यत्, यतो वेत्यादिश्रुत्यनुसारादिति, तन्न, "यतो वै" इत्यत्र चतुर्णां "तमेवैकं जानथ" इत्यादौ "यस्मिन् द्यौः" इति स्थित्यादीनामेकैकस्य श्रवणात्। न चाभिसंविशन्तीत्येतत्प्रलयपरं, प्रयंतीत्यनेन पौनरुक्त्यापत्त्या तस्य मोक्षपरत्वात्। जगतो जन्माङ्गीकारेऽनित्यत्वापत्त्या मिथ्यात्वासिद्धेरुक्तत्वाच्च। तस्मात्सृष्टयाद्यष्टकमेव जन्मादिपदार्थः.... सूत्रकृतेव स्कान्देऽष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्च। इति यदवादि,

(रा.) तन्न, जन्मादित्रयस्येव श्रुतौ 'अभिसंविशन्ति' इति मुक्तप्राप्यत्वस्य स्वातन्त्र्येण पृथक् तद्धर्मत्वोक्तौ 'यतः, येन, यत्' इति उत्पत्तिस्थितिसंहाराणां लक्षणत्वसिद्धयर्थं प्रतिपर्यायं यच्छब्देन ब्रह्मानु-नुवादवत् यदभिसंविशन्तीति संवेशनस्यापि लक्षणत्वसिद्धयर्थं चतुर्थेन यच्छब्देन ब्रह्मानुवादप्रसङ्गात्। 'यत्प्रयन्त्यभिसंविशन्ति' इत्यस्यार्थस्तु सूत्रमुक्तावल्यां ब्रह्मानन्दैः 'प्रयन्ति म्रियमाणानि भूतानि यदभिसंविशंति यस्मिन् लीयन्ते' इत्यादिना निरूपितः। एतेन 'न चाभिसंविशंतीत्येतदपि प्रलयपरम् इत्यादिचन्द्रिकाग्रन्थः परास्तः। न च जन्माद्येकैकस्यापि लक्षणत्वसमर्पकवाक्यांतररीत्या जन्माद्यष्टकमेकैकमेव लक्षणमस्त्विति वाच्यम्, यतो वेत्यादि श्रुतेः शब्दतोऽर्थतश्च सारूप्येण प्रधानविषयवाक्यतया तदनुसारेण जन्मादित्रयस्यैव श्रीमदद्वैतभाष्ये लक्षणत्वाभिधानादिति यदुक्तं

(खं) तत्तुच्छम्, मुक्तप्राप्यत्वरूपलक्षणस्य भवद्भिरप्यङ्गीकृततया लक्षणसद्भावे विवादाभावेन 'अभिसंविशन्ति' इत्यनेन तल्लक्षणस्य प्रतीयमानत्वेन च मोक्षकारणत्वस्यापि श्रुतिविवक्षितत्वात्। 'यतः, येन, यत्' इति प्रतिपर्यायं यच्छब्देन ब्रह्मानुवादवत् चतुर्थेन यच्छब्देन ब्रह्मानुवादाभावस्तु 'यत्प्रयन्ति इति पर्यायोक्तयच्छब्दस्यैवा-

त्रानुषङ्गाभिप्रायेण, न तु लक्षणत्रयाभिप्रायेण। न च यदित्यस्य चतुर्थ-पर्यायेऽनुषङ्गे प्रथमयच्छब्दानुषङ्गेण निर्वाहे यत इतियेनेति यदिति पद-त्रयं व्यर्थमिति वाच्यं, तत्र भिन्नभिन्नविभक्तीनां यच्छब्दानामावश्यकत्वेन प्रथमपर्यायोक्तस्य 'यतः' इति पञ्चम्यन्तशब्दस्यानुषंगे विभक्तिव्यत्य-यकरणेन गौरवापत्तेः। 'यत्प्रयन्ति' इति पर्यायोक्तयच्छब्दस्य 'अभि-संविशंति' इत्यत्रानुषङ्गे विभक्तिव्यत्ययस्यानावश्यकत्वेन वैषम्यात् ॥

प्रयन्ति म्रियमाणानि सन्ति भूतानि यदभिसंविशन्ति यस्मिन् लीयन्ते' इत्यर्थकरणं त्वयुक्तमेव, म्रियमाणानीत्यस्य पूर्वमनुक्तत्वेन "येन जातानि जीवन्ति" इत्यत्र जातानीतिवदनुवादानुपपत्तेः। पद-द्वयवैयर्थ्यानिस्ताराच्च। "यतो वै" इति श्रुत्युक्तलक्षणनामेव "जन्मा-द्यस्य यतः" इति सूत्रविवक्षितत्वे ज्ञापकाभावेन, प्रत्युत

उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः।
बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥

इति स्कान्दपुराणस्थसूत्रकृदुक्तेरेवाष्टग्रहणे ज्ञापिकायाः सत्वेन, प्रमाणा-न्तरैर्मोक्षार्थं तेषामवश्यं ज्ञेयत्वावगमेन च जिज्ञासाकर्तव्यत्वबोधिकासु "यतो वा इमानि भूतानि जायन्ते" "तमेवैकं जानथ" इत्यादिश्रुतिषू-क्तानां सृष्ट्यादीनामष्टानामेव जन्मादिपदेन ग्रहणस्य न्याय्यत्वात्। जन्मादित्रयस्य शाङ्करभाष्ये लक्षणत्वानभिधानेन जन्मादित्रयस्याद्वैत-भाष्ये लक्षणत्वाभिधानादित्युक्तिरुन्मादमूला च ॥

(रा.) एतेन,

उत्पत्तिस्थितिसंहारो नियतिर्ज्ञानमावृत्तिः।
बन्धमोक्षौ च भवतो यस्मात्स हरिरेकराट् ॥

इति स्कान्दपुराणवचनानुसारेण जन्माद्यष्टकं जन्मादिसूत्रेण लक्षणमुच्यत इति मध्वमतमपास्तम्, श्रुत्यर्थनिर्णयाय प्रवृत्तस्य सूत्रस्य शब्दतोऽर्थश्च सरूपं "यतो वै" इत्यादिश्रुत्यनुसारेण प्रतीतं जन्मादित्रयलक्षणं परि-

त्यज्य स्कान्दपुराणवचनबलेन जन्माद्यष्टकस्य सूत्रोक्तब्रह्मलक्षणत्वकथनस्यात्यन्तानुचितत्वात् । पुराणे वेदोपबृंहणांशस्य वेदोपव्याख्यानत्वमेवेति प्रागेव सप्रमाणमुपपादितत्वाच्च । मध्वभाष्ये प्रथमं स्कान्दपुराणवचनं जन्मादिसूत्रे उपन्यस्य पश्चाच्छ्रुतिवाक्यं चोदाहृतवतां तद्भाष्यकृतां वेदापेक्षया पुराणमेवाभ्यर्हितमित्याशयोऽवगम्यत इति यत्,

(खं.) तत्तुच्छम्, जन्मादिसूत्रेण जन्माद्यष्टकर्तृत्वस्यैव लक्षणतयोक्तावपि जन्माद्यष्टकस्य लक्षणत्वानुक्त्या 'जन्माद्यष्टकं जन्मादिसूत्रेण लक्षणमुच्यत इति मध्वमतमपास्तं' इत्युक्तेरस्मत्सिद्धान्तग्रन्थानवलोकननिबन्धनत्वात् । एवं "जन्माद्यस्य यतः" इति सूत्रे आदिपदेन "यतो वै" इत्यादिश्रुत्यनुसारेण चतुर्णां वा, "य उ त्रिधातु पृथिवीमुत द्यामेको दाधार" इत्यादिश्रुत्यनुसारेणान्येषामपि वेत्याकाङ्क्षायां सूत्रकृतैव स्कान्दपुराणे अष्टानां गृहीतत्वेन अष्टानां ग्रहणमिति तत्तात्पर्यमवगम्यत इति ज्ञापनाय प्रथमं स्कान्दपुराणग्रहणं, न तु अभ्यर्हितत्वाभिप्रायेण । वेदस्यापौरुषेयत्वेन स्वतः प्रामाण्यं, पुराणानां तु तदनुसारित्वेनेत्यादिवदतां श्रीमदाचार्याणां वेदस्या-भ्यर्हितत्वं, पुराणानां तदनुसारित्वेन ततोऽभ्यर्हितत्वाभावश्च संमत इति ज्ञातुं शक्यत्वेन त्वदुक्तेरभिनिवेशमूलत्वात् । तदेतदभिप्रेत्योक्तं चन्द्रिकायां 'सूत्रकृतैव स्कान्दे अष्टकर्तृत्वस्य लक्षणत्वेनोक्तेश्च' इति ।

(चं.) यच्चोक्तं परैः—जन्माद्किारणत्वं तटस्थलक्षणं, आनन्दादिरेव स्वरूपलक्षणमिति, तत्र यावल्लक्ष्यभाव्यभाविनी वा, सत्यासत्ये वा, यावत्स्वबोध्यभाव्यभाविनी वा, लक्ष्यगतागते वा, लक्ष्यान्तर्गतानन्तर्गते वा, निरुपाधिकसोपाधिकरूपे वा, स्वतो व्यावर्तकव्यावर्तकांतरोपस्थापकरूपे वा, विशेषणोपलक्षणरूपे वा स्वरूपतटस्थलक्षणे इत्यष्टधा विकल्प्य निराकरणं कृतम् ॥

(रा.) लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशे-

ष्यत्वे स्वरूपलक्षणत्वम् । तच्च "सत्यं ज्ञानमनंतं" इत्यत्र लक्ष्यवाचिब्रह्मपदसमानाधिकरणज्ञानपदनिरूपितवृत्तिज्ञानविशेष्ये ज्ञानेऽस्तीति लक्षणसमन्वयः । ब्रह्म जगत्कारणमित्यप्रयोगात् जगत्कारणत्वे नास्तीति नातिव्याप्तिः। तटस्थलक्षणत्वं च लक्ष्यवाचिपदसमानाधिकरण पदनिरूपितवृत्तिज्ञानाविशेष्यत्वे सति लक्षणत्वम्। तच्च कारणत्वादावस्तीति लक्षणसमन्वयः। लक्षणत्वं च लक्ष्यत्वेनाभिमतवस्तुविशेष्यकसंशयविपर्यासादिविरोधिज्ञानप्रकारत्वं। तच्च ब्रह्मज्ञानरूपं न वेति संशयविरोधिज्ञानविषये सत्यं ज्ञानमित्युक्तज्ञाने 'ब्रह्मणः कारणत्वमस्ति नास्ति' इति संशयविरोधिज्ञानविषये कारणवाक्योक्तकारणत्वे चास्ति। लक्ष्यवाचिपदसमानाधिकरणेत्यत्र सामानाधिकरण्यं लक्ष्यवाचिपदप्रवृत्तिनिमित्तकत्वं, न तु समानविभक्तिकत्वमात्रम्। अतो न 'शाखाग्रं चन्द्रमाः' इत्यद्वैत्यभिमततटस्थलक्षणे शाखाग्रे स्वरूपलक्षणलक्षणातिव्याप्तिः। एतेन लक्ष्यगतागते स्वरूपतटस्थलक्षणे इत्यादिः मध्वचन्द्रिकाग्रन्थः परास्तः, अनुक्तोपालम्भत्वादिति यदुक्तम्,

(खं.) तत्तुच्छम्, अद्वैतसिद्धिगौडब्रह्मानन्दकृतलघुचन्द्रिकादिग्रन्थेषु यावल्लक्ष्यभाव्यभाविनोः स्वरूपतटस्थलक्षणरूपतया आशंकनात्।

"अन्तर्गतपदेन लक्ष्यैकदेशोक्तौ लक्ष्यस्याखण्डत्वहानेः, अभेदोक्तौ प्रकृष्टप्रकाशत्वादेश्चंद्रस्वरूपलक्षणत्वेन स्वीकृतस्यापि तन्न स्यात्" इति विकल्पपूर्वकं चन्द्रिकायां दूषितस्य लक्ष्यांतर्गतानंतर्गते इति पक्षस्य अखण्डार्थवादे "अन्यथा स्वरूपतटस्थलक्षणविभागो न स्यात्" इति अद्वैतसिद्धिव्याख्यानावसरे लघुचन्द्रिकायां लक्ष्यात्यन्ताभिन्नं स्वरूपलक्षणं, स्वाश्रयकालावच्छेदेन स्वाश्रयनिष्ठं तटस्थलक्षणमिति सिद्धांतिततया अद्वैत्युक्तस्यैव निराकरणेन अनुक्तोपालम्भत्वोक्तेः अद्वैतसिद्धिब्रह्मानन्दीयादिग्रंथानवलोकन निबन्धनत्वात्। लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वं स्वरूपलक्षणत्वमिति त्वत्परिष्कृतस्वरूपलक्षणलक्षणस्य अभिन्नयोरेव समानाधिकरणपदवाच्यत्वेनोदाहरणानु-

सारेण च लक्ष्याभिन्नं स्वरूपलक्षणमिति चन्द्रिकायामाशङ्कितपक्षपर्यवसानेन तत्पक्षोक्तदूषणैरेव दूषितत्वात्, स्वकृतशब्दांतररचनाया उक्तदोषवारणाक्षमत्वात्। प्रत्युत प्रत्यग्रातिस्फुटदूषणजालसम्पादननिदानत्वाच्च। तथाहि-प्रसिद्धस्यासाधारणधर्मस्य लक्षणत्वेन, अप्रसिद्धस्य धर्मिणश्च लक्ष्यतया त्वन्मते, ब्रह्ममात्रस्य ज्ञानस्य ब्रह्मलक्षणत्वानुपपत्तिः। आनन्दत्वसत्त्वादेः प्रकृष्टप्रकाशत्वादेश्च लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वाभावेन स्वरूपलक्षणत्वानुपपत्तिः। न चेष्टापत्तिः. अद्वैतसिद्धिलघुचन्द्रिकादौ ज्ञानत्वसत्यत्वादेः स्वरूपलक्षणत्वेनोक्तत्वात्। जगत्कारणस्यापि 'स कारणं' 'ब्रह्म जगत्कारणं' इत्यादिवाक्यघटकोक्तपदवृतिज्ञानविशेष्यत्वेन ब्रह्मस्वरूपलक्षणत्वापत्तिः इत्यादिचन्द्रिकोक्तदोषस्यापरिहारः।

ब्रह्मण्यवाच्ये यो विद्वान् वाच्यतामधिगच्छति।
स निस्त्रपो निमित्तानां विरहैः प्रतिबोध्यताम्॥

इति तदुक्तम्——

दृष्टा गुणक्रियाजातिसम्बन्धाः शब्दहेतवः।
नात्मन्यन्यतमो ह्येषां तेनात्मा नाभिधीयते॥

इति, अद्वैतसिद्ध्यादिग्रन्थे लक्षणीयस्य ब्रह्मणः वाच्यत्वाभावस्य प्रवृत्तिनिमित्तवत्त्वाभावस्य च सिद्ध्या "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यघटकब्रह्मपदस्य लक्ष्यभूतब्रह्मवाचकत्वाभावात्, ब्रह्मनिष्ठप्रवृत्तिनिमित्तकत्वाभावाच्च, लक्ष्यवाचिपदप्रवृत्तिनिमित्तधर्मसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वरूपस्वरूपलक्षणलक्षणस्यासम्भव एव। घटवाचकपदसमानाधिकरणनीलपदनिरूपितवृत्तिज्ञानविशेष्यत्वस्य नीले सत्त्वान्नीलस्यापि घटलक्षणत्वापत्तिः। लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानाविशेष्यत्वे सति लक्षणत्वरूपतटस्थलक्षणलक्षणस्य ब्रह्मस्वरूपलक्षणत्वेनाभिमते ज्ञानत्वानन्दत्वादौ चन्द्रस्वरूपलक्षणत्वेनाभिमते प्रकृष्टप्रकाशत्वादौ च त्वद्रीत्योक्तपदनिरूपितवृत्तिज्ञानाविशेष्यत्वेन चाति-

व्याप्तिः। घटो द्रव्यं न वा पृथिवी न वेत्यादिसंशयविरोधिज्ञानप्रकारी-तद्द्रव्यत्वादेरपि घटलक्षणत्वापातेन लक्ष्यत्वेनाभिमतवस्तुविशेष्यकसंशय-विपर्यासादिविरोधिज्ञानप्रकारत्वं लक्षणत्वमिति त्वदुक्तपरिष्कारस्यात्यं-तमसम्बद्धत्वात्। शाखाग्रस्य चन्द्रलक्षणत्वाभावेन लक्षणत्वेनाद्वैत्यसिम-तिमात्रेण तदर्थं लक्षणपरिष्कारानुपपत्तेः॥

**(चं.) एतेन, यदुक्तं विवरणे विषयानवच्छिन्नं आदित्या-दिप्रकाशवदर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमिति, तन्निरस्तम्, सामर्थ्यस्य शक्तिरूपत्वात्। विषयनिरूप्यत्वाच्च। जगज्जन-नादिसामर्थ्यस्यैव स्वरूपलक्षणत्वोपपत्तेश्चेति यदुक्तं,**

(रा.) तन्न, अर्थप्रकाशनसामर्थ्योपेतज्ञानस्यैव विवरणग्रन्थे लक्षण-त्वोक्त्या सामर्थ्यस्य स्वरूपलक्षणत्वानुक्त्या तत्सिद्धिमङ्गीकृत्य जग-ज्जन्मादिकारणत्वसामर्थ्यस्य स्वरूपलक्षणत्वोपपत्तिकथनस्यायुक्तत्वा-दिति यदुक्तं,

(खं.) तत्तुच्छम्, ज्ञानस्य विषयनिरूप्यत्वेन अर्थप्रकाशन-सामर्थ्यस्य शक्तिरूपत्वेन शक्तेः सोपाधिकतया सोपाधिकसामर्थ्यघटि-तस्य स्वयं सोपाधिकस्य अर्थप्रकाशनसमर्थज्ञानस्य स्वरूपलक्षणत्वं न सम्भवति। सोपाधिकस्यापि लक्षणत्वाङ्गीकारे शक्तिरूपस्य जग-ज्जननादिसामर्थ्यस्य लक्षणत्वमुपपद्यतामित्येव चन्द्रिकाचार्याणामभि-प्रायः, न तु विवरणकृता अर्थप्रकाशनसामर्थ्यस्य स्वरूपलक्षणत्वमङ्गी-कृतमिति, विवरणमतानुवादावसरे समर्थं ज्ञानं स्वरूपलक्षणमित्यनु-वादात्। एतत्पूर्वमपि ज्ञानमप्यर्थप्रकाशात्मकत्वे सोपाधिकमेवेति ज्ञानस्यैव स्वरूपलक्षणत्वमुक्तमित्यङ्गीकृत्य दूषणार्थं प्रवृत्तत्वात्। तथा च त्वदुक्तेः चन्द्रिकार्थाज्ञानविजृम्भितत्वमेवेति। यत्त्वित्या-दिना चन्द्रिकानुवादावसरे अर्थप्रकाशनसामर्थ्यस्य शक्तिरूपत्वात् विषया-नित्यत्वाच्च स्वरूपलक्षणत्वासम्भवादिति अनुवादोऽपि विरुद्ध एव, चन्द्रिकायां तथाऽनुक्तत्वात्॥

(चं) एतेनैव, कार्यान्वयिरूपं विशेषणं स्वरूपलक्षणं, तदनन्वयिरूपोपलक्षणं तटस्थं, आनन्दत्वादिकं हि "तद्विजिज्ञासस्व" इति वाक्यविहितजिज्ञासारूपकार्यान्वयि, तस्य मुमुक्षुज्ञेयत्वात्, न तु कारणतेति निरस्तम् । इतरव्यावृत्त्यर्थं आनन्दत्वादेरिव कारणत्वस्यापि जिज्ञास्यत्वात्, अन्यथा समन्वयाविरोधाध्याययोस्तद्व्युत्पादनं न स्यात् । न च ब्रह्मण्यानन्दत्वादेः कारणत्वादेश्चारोपितत्वेऽविशिष्टेऽपि दुःखव्यावृत्तिरेव ज्ञेया, न त्वकारणव्यावृत्तिरित्यत्र हेतुरस्ति । सुखस्वभावत्वादसुखव्यावृत्तौ कारणस्वभावत्वादकारणव्यावृत्तिरस्तु, "देवस्यैष स्वभावोऽयम्" इत्यादिश्रुतेरिति यत्

(रा.) तन्न, अध्यारोपापवादन्यायेन निर्विशेषस्वरूपप्रतिपत्त्यर्थमेव तद्व्युत्पादनोपपत्तेः । "देवस्यैषः" इत्यादेः गौडपादकारिकात्वेनास्मदीयमांडूकभाष्येऽव्याख्यातत्वेन श्रुतित्वासिद्धेरिति यदुक्तं,

(खं.) तत्तुच्छम्, श्रीचन्द्रिकोक्तरीत्या इतरस्मात् प्रधानादितः व्यावृत्त्यर्थं वा त्वदुक्तरीत्या निर्विशेषप्रतिपत्त्यर्थं वा कारणत्वस्य जिज्ञासारूपकार्यान्वयित्वेन तटस्थलक्षणतया स्वीकृतस्य स्वरूपलक्षणत्व प्राप्तेरपरिहारात् । त्वन्मते निर्विशेषस्याज्ञेयत्वेन तत्प्रतिपत्तेरेवासम्भवात् । रज्ज्वां सर्पभ्रमप्राप्तौ नायं सर्प इत्युक्तिर्दृष्टा, न तु अयं सर्प इति पूर्वं भ्रान्तिमुत्पाद्यानन्तरं नायं सर्प इति । तथा च त्वदभिमते निर्विशेषे ब्रह्मणि जगत्कारणत्वादिभ्रममुत्पाद्य निषेधकरणस्यान्याय्यत्वाच्च । निर्विशेषे अत एव शब्दाद्यगम्ये ब्रह्मणि भ्रमोत्पादनासम्भवाच्च । "देवस्यैष स्वभावोऽयं" इत्यस्य गौडपादकारिकात्वेऽपि गौडपादकारिकायाः श्रुतिसमानप्रामाण्यमङ्गीकुर्वाणमद्वैतिनं प्रति कारणत्वादीनां स्वभावत्वे प्रमाणतयोदाहरणस्य सङ्गतत्वात् ।

स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥

इत्यद्वैत्यभिमतसृष्टेर्निंदनेनास्य गौडपादकारिकात्वाङ्गीकारस्यायुक्तत्वाच्च। श्रुतित्वाभावसाधकाया गौडपादकारिकात्वेन शङ्करोक्तेरित्युक्तेरसङ्गतत्वात्, उभयवादिसंप्रतिपन्नस्यैव हेतू कर्तव्यत्वात्। अन्यथा श्रुतेः प्रामाण्याभावसाधकतया वा जगत्कारणस्य शून्यत्वसाधकतया वा अस्मदाचार्यैस्तथोक्तत्वादिति बौद्धोक्तया प्रामाण्याभावादिसिद्धिप्रसङ्गात्। महापूर्वपक्षभाष्ये रामानुजाचार्यैरपि गौडपादकारिकात्वेन त्वदङ्गीकृतस्य "अनादिमायया सुप्तः" इति वाक्यस्य उपनिषत्वेन स्वीकृतत्वाच्च। पूर्वोत्तरोपनिषद्वाक्यसंदष्टस्यास्य श्रुतित्वावगमाच्च। अस्य श्रुतित्वाभावे ज्ञापकाभावाच्च। न च "अत्रैते श्लोका भवन्ति" इति मध्ये वाक्यमेव ज्ञापकमिति वाच्यं, तैत्तिरीयादौ "तदप्येष श्लोको भवति" इति तत्र तत्रोक्त्वोदाहरिष्यमाणानां 'अन्नाद्वै प्रजाः प्रजायन्ते' 'प्राणं देवा अनुप्राणन्ति' 'यतो वाचो निवर्तन्ते' इत्यादीनां वेदत्वाभावापत्तेश्च। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादीनां ईश्वरसम्बन्धिसृष्टयादिव्यापाराणां स्वभावत्वबोधकानां वाक्यानां विद्यमानत्वेन चन्द्रिकाचार्यैरुदाहरिष्यमाणत्वेन च "देवस्यैषः" इतिश्रुत्युदाहरणस्य श्रुत्यंतराभावतदज्ञानान्यतरमूलकत्वरूपागतिकागतित्वाभावाच्च॥

(चं.) किंच

असाधारणधर्मो हि लक्षणं परिकीर्त्यते।
तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथम्॥१॥
स्वरूपं वा तटस्थं वा लक्षणं भेदकं मतम्।
सजातीयाद्विजातीयात्तच्चाद्वैतिमते कथम्॥२॥
न च मिथ्याभेदसिद्धयै मिथ्यालक्षणकीर्तनम्।
मुमुक्षुं तत्त्वजिज्ञासुं प्रति शास्त्रेषु शोभते॥३॥

न च कारणत्वे श्रुतेरतात्पर्यान्नाप्रामाण्यं, तात्पर्यनिर्णायकैः सूत्रै

प्रत्यधिकरणं "सदेव" इत्यादिवाक्यं न प्रधानकारणत्वपरं किन्तु ब्रह्मकारणत्वपरमित्युक्तेरिति यदभिहितं,

(रा.) तन्न, "स्वरूपं वा" तटस्थं वा इति श्लोके भवद्भिरेव स्वरूपस्य लक्षणत्वकथनेन असाधारणधर्मस्य लक्षणत्वमिति नियमस्य भवद्भिरेव निर्दलितत्वात्। यत्तु "स्वरूपं वा तटस्थं वा" इति श्लोके सजातीयविजातीययोरद्वैतिमतेऽभावात् लक्षणस्य व्यावर्तकत्वं न सम्भवतीयुक्तं, न स्वरूपस्यापि लक्षणत्वमङ्गीकृत्येति, तन्न, कल्पितस्य व्यावहारिकस्य सजातीयस्य विजातीयस्य च सत्त्वेन तद्व्यावर्तकत्वेन लक्षणत्वोपपत्तेः। तस्मादनवद्यमद्वैतिमतमिति यदुक्तं,

(खं.) तत्तुच्छम्, अद्वैतिमते अध्यासकारणतया लोके दृष्टानामसम्भवेन ब्रह्मणि सजातीयविजातीयवस्त्वारोपस्यैवासम्भवेन कल्पितसजातीयविजातीयव्यावर्तकत्वेन लक्षणत्वोपपत्तिकथनस्यायुक्तेः। ब्रह्मणः सर्वजगद्रूपत्वाङ्गीकारेण जगद्व्यावृत्तिकथनेऽपसिद्धान्तापत्तेश्च। व्यावृत्तेर्व्यावर्तकधर्मस्य च मिथ्यात्वाङ्गीकारे तत्प्रतिपादकश्रुतितदर्थनिर्णायकसूत्रयोरप्रामाण्यापाताच्च। तात्पर्यज्ञापकोपक्रमादिभिर्निर्णीते कारणत्वादौ तात्पर्याभावस्य वक्तुमशक्यत्वाच्च। "स्वरूपं वा तटस्थं वा" इति श्लोकस्य लक्षणस्य सजातीयविजातीयव्यावर्तकत्वेन अद्वैतिमते सजातीयविजातीयद्वितीयवस्त्वभावेन लक्षणप्रयोजनस्यासम्भवादित्यत्रैव तात्पर्यं, न तु स्वरूपस्य लक्षणत्वाङ्गीकारे इति वक्तुं शक्यत्वेन असाधारणधर्मस्य लक्षणत्वमिति नियमस्यास्माभिरनिर्दलितत्वात्। अस्मन्मते ब्रह्मस्वरूपस्याप्यानन्दत्वादेः विशेषबलेनाधाराधेयभावस्वीकारेण स्वरूपस्य लक्षणत्वाङ्गीकारेऽप्यसाधारणधर्मत्वोपपत्तेः असाधरणधर्मस्य लक्षणत्वमिति नियमत्यागे कारणाभावात्। निर्विशेषब्रह्मवादिमते स्वरूपस्य धर्मत्वकथनासम्भवेन लक्षणत्वासम्भवात्। तथा चाद्वैतिमते

शून्यं तत्त्वमविज्ञेयं मनोवाचामगोचरम्।

इत्याद्युक्तशून्यकल्पब्रह्माङ्गीकारात् जगत्कारणत्वादिवेदोक्त-

धर्माणांमिथ्यात्वकथनद्वाराऽनन्तवेदानां अप्रामाण्याङ्गीकारात् बौद्धमतवत् हेयमेवाद्वैतिमतम् । अत एवोक्तं प्राचीनैः प्रच्छन्नबौद्धा अद्वैतिन इति ॥

ॐ जन्माद्यस्य यतः ॐ ॥ योगरूढयोर्मध्ये रूढेः शीघ्रोपस्थितिजनकत्वेन प्राबल्याद्ब्रह्मशब्दः जीवे रूढः जीवमेव बोधयति, न तु विष्णुं, तत्र यौगिकत्वात् । तथा च जिज्ञास्ये श्रुतब्रह्मशब्देन तस्य गुणपूर्णत्वासिद्धेः जिज्ञास्यं न जीवाद्व्यावृत्तं । जीवस्य तु स्वप्रकाशत्वेन सिद्धत्वादविषयत्वेन न विजिज्ञास्यतेति पूर्वः पक्षः । योगापेक्षया रूढेर्बलीयस्त्वेऽपि रूढिबाधकस्य जगज्जन्मादिकारणत्वरूपलक्षणस्य "यतो वै" इत्यादिवाक्ये जिज्ञास्ये श्रुतत्वात् तस्य च जीवेऽसम्भवात् रूढार्थं परित्यज्य यौगिकार्थ एव ग्राह्यः । तेन च गुणपूर्णत्वसिद्ध्या जीवाद्भेदसिद्धिः । ततश्च विषयत्वसम्भवेन जिज्ञास्यता सम्भवतीति सिद्धान्त इति । तदुक्तं चन्द्रिकायां

जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये ।

जीवादिभेदकं विष्णोर्विश्वकर्तृत्वमुच्यते ॥ इति । एतदधिकृत्य,

(रा.) तन्न, तन्मते जगत्कारणत्वस्य ब्रह्मात्यन्ताभिन्नतया ब्रह्मलक्षणत्वासम्भवात् । अन्यथा ब्रह्मैव ब्रह्मलक्षणं स्यात् । न ह्यद्वैतिनामानन्दरूपस्य ब्रह्मणः आनन्दत्वब्रह्मत्वाभ्यामिव कल्पितभेदः माध्वैरङ्गीक्रियते, येन कारणत्वस्य ब्रह्मलक्षणत्वं भवेत् । न च कारणत्वस्य ब्रह्मात्यन्ताभेदेऽपि विशेषबलाल्लक्षणत्वोपपत्तिरिति वाच्यं. भवन्मते विशेषरूपधर्मस्यापि ब्रह्मभिन्नत्वे "एवं धर्मान्पृथक्पश्यन्" इत्यादिश्रुतिविरोधापत्त्या विशेषस्यापि ब्रह्मात्यन्ताभिन्नत्वावश्यकतया कारणत्वस्य ब्रह्मलक्षणत्वोपपत्तिरित्यस्य 'कारणत्वबलात्कारणत्वं ब्रह्मलक्षणं, ब्रह्मबलाद्ब्रह्म स्वलक्षणं' इत्येतत्समशीलत्वात् । किंच माध्वमते जगत्कर्तृत्वस्य ब्रह्मात्यन्ताभिन्नतया नित्यत्वात् "तदैक्षत, तत्तेजोऽसृजत" इति श्रुत्युक्तमागन्तुकं जगत्कर्तृत्वं कथं सङ्गच्छते । कारणत्वस्य शक्त्यात्मना

नित्यत्वेऽपि व्यक्त्यात्मनाऽऽगन्तुकत्वमुपपद्यत इत्यप्यसत्, व्यक्त्यात्मकस्यापि कारणत्वस्य ब्रह्मात्यंताभिन्नत्वोक्तदोषतादवस्थ्यात्। तस्य ब्रह्मभिन्नत्वाङ्गीकारे "एवं धर्मान्" इति श्रुतिविरोधापत्तिस्तदवस्थैव। किंच जिज्ञासाधिकरणे माध्वैः विचारविधिगतेनैकेन ब्रह्मपदेन बहूनामुपक्रमाद्यवगतजीवब्रह्मैक्यपराणां वेदान्तवाक्यानामन्यथाकरणमुक्तं, जन्माद्यधिकरणे "यतो वा इमानि भूतानि जायन्ते" इति जगत्कारणत्वलक्षणप्रतिपादनपरबहुपदानुसारेण जीवे रूढस्यैकस्य ब्रह्मपदस्य मुख्यार्थात्प्रच्यावनमुक्तमिति पूर्वोत्तराधिकरणविरोधः स्पष्ट इति यदुक्तं,

(खं.) तत्तुच्छम्, विशेषबलादभिन्नयोरपि लक्ष्यलक्षणभावोपपत्तेः। अभेदेऽपि लक्ष्यलक्षणभावस्याधाराधेयभावस्य चाद्वैतिभिरप्यङ्गीकृतत्वेन त्वदुक्तेर्व्याहतत्वाच्च। स्फुरति ब्रह्मणि आनन्दभेदकल्पनायाः अद्वैतिमतेऽसम्भवाच्च। विशेषस्य ब्रह्मस्वरूपत्वेऽपि प्रामाणिकव्यवहारानुरोधेन लक्ष्यलक्षणभावनिर्वाहकत्वात्। 'कालः सदास्ति, देशः सर्वत्रास्ति' "स्वे महिम्नि प्रतिष्ठितः" इत्यादिव्यवहारसिद्ध्यर्थमद्वैत्यङ्गीकृतस्वभावविशेषस्यापि ब्रह्मादिरूपत्वेन देशस्य स्वभावविशेषेणाधाराधेयभावोपपत्तिरित्यस्य देशस्य देशेन देशाधारतोपपत्तिरित्यादिसमशीलत्वप्राप्तेः स्वनिर्वाहकत्वादिना समाधानस्य तुल्यत्वात्। अद्वैतसिद्ध्यादौ विशेषविचारप्रस्तावे स्वनिर्वाहकत्वादिना समाहितत्वाच्च। "तत्तेजोऽसृजत" इति श्रुतेः व्यक्तिविषयकत्वेन जगत्कारणशक्तिरूपजगत्कर्तृत्वस्यागन्तुकत्वाज्ञापकत्वात्। "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्याऽनागन्तुकत्वावगतेश्च। अङ्गीकृतं हि शाङ्करभाष्ये क्रियाया आगन्तुकत्वज्ञापकतया लोके दृष्टानामपि तृजादिप्रत्ययानां नित्यत्वबोधकश्रुतिबलेनागन्तुकत्वाज्ञापकत्वम् — "नन्वनित्यक्रियाविषय एव तृच्प्रत्ययांतस्य शब्दस्य प्रयोगो दृष्टः यथा छेत्ता भेत्ता गन्तेति। तथा द्रष्टेत्यत्रापीति चेत्, न, प्रकाशयितेति दृष्टत्वात्। भवतु प्रकाशकेषु अन्यथाऽसम्भवान्न त्वात्मनीति चेत्, न, दृष्टचविपरिलोपश्रुतेः" इत्यादिना "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्येतस्य व्याख्यानावसरे। व्यक्तेः कारणत्वा-

भिन्नत्वेऽपि स्वभावविशेषबलेन प्रमितसर्वकार्यनिर्वाहकत्वसंभवात्। जीवब्रह्मैक्यविषये उपक्रमादीनामभावेन, प्रत्युत उपक्रमादीनां जीवब्रह्मैक्यपरत्वविरुद्धत्वेन वेदांतानां जीवब्रह्मैक्ये तात्पर्यस्यैवाभावात्। जीवब्रह्मैक्यविषये प्रबलभूतविरुद्धधर्माधिकरणत्वरूपयुक्तिविरोधस्य ब्रह्मपदेन सूचनात्। भेदविषय एव प्रत्यक्षानुमानकर्मकांडोपनिषद्रूपागमानां बहूनां सत्वाच्च पूर्वाधिकरणे एकेनानेकेषां बाधस्यानुक्तेः सावकाशनिरवकाशतयोरेव दौर्बल्यप्राबल्यप्रयोजकत्वेन शतमन्धा अपि न पश्यन्ति इति न्यायेन बहुत्वस्याप्रयोजकत्वाच्च। अत्र जगज्जन्मादिकारणत्वरूपेण लक्षणेन रूढिपरित्याग उक्तः, न तु बह्वनुसाराय एकस्य बाधः उक्त इति पुर्वोत्तराधिकरणयोर्विरोधगन्धाभावेन विरोधः स्पष्ट इति स्पष्टतोक्तेः स्पष्टतराज्ञानमूलत्वात् इति।

—इति जन्माधिकरणं समाप्तम्—

॥ श्रीः ॥

॥ अथ शास्त्रयोनित्वाधिकरणम् ॥

## ॐ शास्त्रयोनित्वात् ॐ



(चं.) अत्र परेषां भाष्ये शास्त्रस्य योनिरिति विग्रहमाश्रित्य ऋगादिकारणत्वं ब्रह्मण इहोच्यते पूर्वसूत्रेऽर्थलब्धसार्वज्ञ्यस्य स्फोरणार्थमित्युक्तम्। तन्न, लक्षणानन्तरमवश्यापेक्षितप्रमाणपरत्वसम्भवेऽन्यपरत्वायोगात्। त्वदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन सार्वज्ञालाभाच्च। पूर्वसूत्रेऽर्थलब्धसर्वशक्त्यादित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावाच्च। सांख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषेधसम्भवात्, सांख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञस्य साधनायोगाच्च। श्रुत्या शास्त्रयोनित्वं तेन सार्वज्ञं प्रसाध्य तेन प्रधानस्य कारणतानिषेधाद्वरं श्रुत्यैव तन्निषेधः। जगन्निर्माणेनास्फुटीकृतस्य सार्वज्ञ्यस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणायोगाच्च इति यदुक्तं,

(रा.) तन्न, अपेक्षितप्रमाणपरत्वेनाप्यस्य सूत्रस्य द्वितीयवर्णकमाश्रित्याद्वैतभाष्यकृद्भिरेव योजितत्वात्। वस्तुतस्तु योनिशब्दस्य "भूतयोनिं परिपश्यन्ति धीराः, यथोर्णनाभिः" इत्यादौ 'ऊर्णनाभिः" इत्यादिसमभिव्याहारानुरोधेन कारणपरत्वाश्रयणात्, 'जन्माद्यस्य यतः' इति सुत्रसमभिव्याहारानुसारेण शास्त्रयोनिसूत्रस्थयोनिशब्दस्य कारणपरत्वमेवाश्रयणीयमिति शास्त्रयोनिपदस्य शास्त्रकारणत्वार्थत्वमाश्रितम्। तदेव च युक्तम्, योनिशब्दस्य कारणे प्रयोगवत् प्रमाणे क्वाप्यप्रयोगात् प्रमाण-

परत्वे लक्षणा वक्तव्या। शास्त्रप्रमाणकत्वादिति सूत्रमकृत्वा शास्त्रयोनित्वादिति सूत्रकरणेनैव शास्त्रयोनिशब्दशक्यार्थवेदकारणत्वमपि ब्रह्णो वक्तव्यमिति सूत्रकाराशय इत्यवगम्यते। अत एव शंकरभगवत्पादैः योनिशब्दस्य मुख्यार्थमाश्रित्य प्रथमं कारणत्वमाश्रितं पश्चात् प्रमाणप्रदर्शनस्यापेक्षिततया योनिशब्दस्य लक्षणया प्रमाणपरत्वमप्याश्रितमिति यत्पेरणोक्तं,

(खं.) तत्तुच्छम्, अपेक्षितप्रमाणपरत्वेमाप्यस्य सूत्रस्य योजितत्वादिति त्वदीयोक्तेः लक्षणकथनानन्तरं सार्वज्ञस्फोरणस्यानावश्यकतया तत्स्फोरकशास्त्रकर्तृत्वकथनस्यानावश्यकत्वादिति चन्द्रिकोक्तदोषापरिहारकत्वात्। त्वन्मते जगज्जन्मादिकारणत्वे प्रमाणमपि नापेक्षितमेव। त्वदीयभाष्ये "पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानात्, जन्मादिकेवलमनुमानमुपन्यस्तमित्याशंक्येत। तामाशंकां निवर्तयितुं इदं सूत्रं प्रवर्तते शास्त्रयोनित्वादिति" इति वाक्येन, तद्व्याख्यानरूपायां भामत्यां च "तस्यैव लक्षणस्यानेनानुमानत्वाशङ्कामपाकृत्यागमोपदर्शनेन ब्रह्मणि शास्त्रप्रमाणमुक्तं" इति वाक्येन च कारणत्वस्यानुमानतामुपमर्द्य आगमतोपदर्शनार्थमेव शास्त्रयोनिसूत्रं, न त्वतिव्याप्त्याद्यादिपरिहारप्रयोजकमित्यवगत्या जगत्कारणत्वस्यानुमानिकत्वे वा शास्त्रप्रमाणकत्वे वा विशेषाभावात्। शास्त्रयोनित्वादित्यस्य शास्त्रप्रमाणकत्वादित्यर्थकत्वे कारणसामान्यवाचकयोनिशब्दस्य कारणविशेषप्रमितिकारणरूपार्थकत्वस्वीकारप्राप्तावपि कारणरूपार्थस्यात्यागात्। कारणमात्रवाचकशब्दं परित्यज्य 'योनिशब्दः प्रकृतिवचनः' इत्यादि शांकरभाष्योक्तरीत्योपादानकारणस्थानादिवाचकयोनिशब्दप्रयोगेण सूत्रकर्तुः घटादीनां मृदादिवत् ब्रह्म वेदोपादानमित्यपि अभिप्रेतम्, अन्यथा कारणमात्रवाचिशब्दं प्रयुञ्जीत इत्यपि वक्तुं शक्यत्वाच्च।

(चं.) भवदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन ब्रह्मणः सार्वज्ञ्यासिद्धेश्च इति यत्,

(रा.) तत्र, अद्वैतसिद्धान्ते उपहितब्रह्मणः कृत्स्नजगदुपादानगोचरापरोक्षाज्ञानचिकीर्षाकृत्यात्मकमायावृत्त्याश्रयत्वरूपजगत्कारणत्वस्य विवरणग्रन्थादौ स्वीकृतत्वेन तद्घटकसार्वज्ञ्यस्य तेनार्थसिद्धिसम्भवात् । न च अद्वैतिमते निर्विशेषस्य प्रथमसूत्रे जिज्ञास्यत्वोक्त्या तस्यैव जन्मादिसूत्रे लक्षणस्य वक्तव्यतया तल्लक्षणस्य कथं कारणत्वरूपत्वमिति शंक्यं, 'ब्रह्म च वक्ष्यमाणलक्षणं 'जन्माद्यस्य यतः' इति' इति जिज्ञासासूत्रस्थ 'ब्रह्म' शब्दव्याख्यानरूपश्रीमदद्वैतभाष्यग्रन्थेन उपहितस्यैव ब्रह्मणो जिज्ञास्यत्वोक्तेः । निर्विशेषस्य जिज्ञास्यत्वं तु आर्थिकम् । 'सर्वशक्तेः' इति जन्मादिसूत्रश्रीमद्वैतभाष्यग्रन्थेन सर्वज्ञत्वसर्वशक्तित्वाद्युपहितस्यैव कारणत्वमित्यवगम्यते । तस्मान्निर्विशेषस्यैव जिज्ञास्यत्वमद्वैतिमत इत्येतत् अद्वैतभाष्यग्रन्थापरिशीलनप्रयुक्तम् इति यत्परेणोक्तं,

(खं.) तत्तुच्छम्, "दीपगता प्रकाशनशक्तिः यथा तदुपादाने वह्नौ, तथा वेदगता सर्वप्रकाशनशक्तिः तदुपादाने ब्रह्मणि, कार्योपादानयोरेकशक्तित्वात्" इति विवरणे वेदब्रह्मणोरुपादानोपादेयभावोक्त्या तेन सार्वज्ञ्यासिद्धेः । कृत्स्नजगदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृत्यात्मकमायावृत्त्याश्रयत्वरूपजगत्कारणत्वस्य श्रुतिस्मृत्यादिप्रमाणासिद्धतया शशविषाणायितत्वेन त्वदङ्गीकृतत्वमात्रेण तेन सार्वज्ञ्यासिद्धेः ।

जीव ईशो विशुद्धा चित्भेदस्तस्यास्तयोर्द्वयोः ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥

इति त्वदीनयामुक्त्या अनादितया सिद्धनिरुपादानजीवादिविषयकज्ञानासिद्ध्या सार्वज्ञ्यासिद्धेश्च । ब्रह्मणः त्वन्मते उपहितत्वासम्भवाच्च । तथा हि उपाधेः सत्यत्वाङ्गीकारेऽद्वैतभङ्गः । 'ब्रह्म सत्यं जगन्मिथ्या' इति तव मते अध्यासवादनिरासोक्तरीत्या अध्यासकारणत्वेन लोकसिद्धानां सामान्यधर्मविशेषधर्मतज्ज्ञानाज्ञानादीनां जगदध्यासेऽसम्भवेनारोपितत्वरूपमिथ्यात्वं अङ्गीकर्तुमशक्यं चेति उपाधेरेवासम्भवः । तुष्यत्विति न्यायेनोपाध्यंगीकारेऽपि 'असंगो ह्ययं पुरुषः' इति श्रुतेः

त्वन्मते ब्रह्मण सामान्यतः सर्वसंबन्धाभावार्थकत्वस्वीकारेणोपाधिसंबन्धस्य ब्रह्मण्यसम्भवः। संबन्धांगीकारेऽपि ब्रह्मणः अखण्डत्वेनैकदेशाभावात् एकदेशेनोपाधिसंबन्धानुपपत्तिः। कात्स्न्र्येन सम्बन्धांगीकारे उपहितानुपहितवस्तुद्वयासिद्धिरिति।

किञ्च "अथातो ब्रह्मजिज्ञासा" इति जिज्ञासासूत्रे "तद्विजिज्ञासस्व" इति श्रुतौ च जिज्ञास्ये वस्तुनि ब्रह्मशब्दः श्रूयते। स च त्वन्मतरीत्या त्रिविधपरिच्छेदाभावबोधकतया निर्विशेषपर एव, न तु सगुणोपहितब्रह्मपर इति निर्विशेषस्यैव जिज्ञास्यतायाः वक्तव्यत्वेन तस्य त्वदुक्तजगत्कारणताया असंभवात् अतः कुत्र चिज्जिज्ञास्यत्वं सगुणनिर्गुण योरुभयोः, कुत्र चित्सगुणस्यैकस्यैव जिज्ञास्यत्वं, निर्विशेषस्यार्थिकमित्यादित्वदुक्तेरेव त्वद्भाष्यकारीयब्रह्मशब्दार्थापरिशीलननिबन्धनत्वमिति॥

(चं.) पूर्वसूत्रेऽर्थलब्धसर्वशक्त्यादित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावाच्चेति यदुक्तं,

(रा.) तन्न, सर्वज्ञत्वदृढीकारे तत्समनियतसर्वशक्तित्वस्यापि दृढीकृतप्रायत्वात्, तदर्थं सूत्रान्तरानपेक्षणात्। अत एवाद्वैतभाष्ये शास्त्रयोनित्वसूत्रे सर्वशक्तिमत्त्वं चेति निगमितमितियदु दितं,

(खं.) तत्तुच्छम्, यद्यपि "सर्वशक्तिमत्त्वं चेति" इति निगमितं भाष्ये, परं तु सर्वज्ञत्वे "शास्त्रयोनित्वात्" इति सूत्रेण शास्त्रकर्तृत्वरूपो हेतुरुक्तः न सर्वशक्तिमत्त्वे हेतुरुक्तः। किंतु "शास्त्रयोनित्वात्" इति सूत्रेण ध्वनितया नामरूपात्मकप्रपञ्चस्य निश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वबोधिकया "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः" इत्युपक्रम्याधीतया "अयं च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैवैतानि सर्वाणि निश्वसितानि" इति श्रुत्या ज्ञापित इत्येवाभिप्रेतं त्वद्भाष्यकर्तुः इति, "न हीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः संभवोऽस्ति" इति सर्वज्ञत्वविषयकप्रति-

ज्ञाकरणेन, "यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात्संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि, स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके इति सार्वज्ञ्यविषयकप्रतिज्ञायामेव व्याप्त्यादिप्रदर्शनेन, तथा भामत्यां कल्पतरौ च सार्वज्ञविषयकप्रतिज्ञाहेत्वाद्युपन्यासपरतयैव भाष्यस्य व्याख्यानेन च ज्ञायते। स्पष्टं चैतत् कल्पतरुपरिमले "न तु पूर्वसूत्रे ब्रह्मणः सर्वज्ञत्ववत्सर्वशक्तिकत्वमप्यर्थलब्धम्। तत्किमिति केन-चिद्धेतुना न दृढीकृतं; तदपि त्युक्तं शंकानिवर्तनक्षमं, सत्यं तदपि निश्व-सितश्रुत्युदाहरणेन, तस्यां नामरूपात्मकस्यापि प्रपञ्चस्य निश्वसितपद-प्रयत्नसाध्यब्रह्मकार्यत्वोक्तेः" इति वाक्येभ्यः। तथा च जगत्कर्तृ त्वेन सार्वज्ञ्यस्यैव सर्वशक्तेरप्युपक्षिप्तत्वात् समकक्ष्यतयोपक्षिप्तयोर्मध्य एकस्य सार्वज्ञ्यस्य साधकं शास्त्रयोनित्वादिति हेतुकथनं सर्वशक्तिम-त्त्वस्य सूत्रध्वनितया श्रुत्या समर्थनं इत्यस्मिन् वैषम्ये निमित्ताभावा-दित्यत्रैव चन्द्रिकाचार्याणां अभिप्रायात्। "शास्त्रयोनित्वात्" इति सूत्रेण वेदकर्तृत्वबोधिकाया नामरूपात्मकप्रपञ्चस्य निश्वसितवत् अप्रयत्न-साध्यब्रह्मकार्यत्वाबोधिकायाः श्रुतेरपि ध्वनिसम्भवेन "शास्त्रयोनित्वात्" इति सूत्रेण ध्वनितश्रुतिद्वाराऽपि सर्वशक्तित्वज्ञापनासम्भवाच्च। कृत्स्न-जगतः कारणत्वबोधकेन "जन्माद्यस्य यतः" इति सूत्रेणैव ध्वनितया नामरूपात्मकप्रपञ्चकारणत्वबोधिकया श्रुत्या ज्ञापनसम्भवे जगदेकदेश-भूतशास्त्रकर्तृत्वबोधकेन "शास्त्रयोनित्वात्" इति सूत्रेण ध्वनितया वेद-कर्तृत्वबोधिकया श्रुत्या जगत्कारणत्वबोधकपदघटितत्वमात्रेण सर्वशक्ति-मत्त्वसाधनस्यायुक्तत्वाच्च।

(चं.) सांख्याभिमताचेतनकारणतायाश्च चेतनत्वमात्रेण निषेधसम्भवात् सांख्यानङ्गीकृतेन शास्त्रयोनित्वेन सार्वज्ञ्यस्य साधनायोगाच्च। श्रुत्या शास्त्रयोनित्वं तेन सार्वज्ञं प्रसाध्य तेन प्रधानस्य कारणतानिषेधाद्वरं श्रुत्यैव तन्निषेध इति यदुक्तं,

(रा.) तन्न, "जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्।

तदेव द्रढयन्नाह–शास्त्रयोनित्वात्" इति अवतरणाद्वैतभाष्येण शास्त्रयोनित्वसूत्रस्य सार्वज्ञयदृढीकरणार्थं प्रवृत्तत्वावगमेन प्रधानकारणनिरसार्थत्वमात्रकल्पनस्य अस्मद्भाष्यरीतिविरुद्धत्वात् इति यदुक्तं,

(खं.) तत्तुच्छम्, इदं सूत्रं सार्वज्ञसाधनाय प्रवृत्तमित्यद्वैत्युक्तमसङ्गतम्। सार्वज्ञयसाधनस्य प्रकृतानुपयुक्तत्वादिति दूषणनिरासाय जगत्कारणत्वं प्रधानादिव्युदासेन ब्रह्मण्येव साधयितुं हेतुत्वेन सार्वज्ञं वक्तव्यं, तत् सार्वज्ञं शास्त्रयोनित्वेन साध्यत इति सार्वज्ञसाधनस्य प्रयोजनमुक्तं विवरणकृता। तस्य दूषणाय इयं चन्द्रिका प्रवृत्तेति, प्रधानकारणत्वनिरासार्थत्वमात्रकल्पनस्य अस्मद्भाष्यरीतिविरुद्धत्वादित्युक्तेः विवरणग्रन्थानवलोकननिमित्तत्वात् ॥

(चं.) जगन्निर्माणेनास्फुटीकृतस्य सार्वज्ञस्य तदेकदेशशास्त्रनिर्माणेन स्फुटीकरणायोगाच्चेति यदुदितम्,

(रा.) तन्न, जगन्निर्माणेन शास्त्रयोनित्वं न स्फुटीकृतं, किंतु शास्त्रनिर्माणेनेत्यस्यास्मद्भाष्यकारादिभिरनुक्तत्वात्, जगन्निर्माणसिद्धसार्वज्ञदार्ढ्यार्थत्वस्यैवोक्तत्वात्। शास्त्रस्य जगदेकदेशत्वेऽपि कृत्स्नस्य जगतो ब्रह्मणश्च सपरिकरस्वरूपस्य शास्त्रेणैवावगमनीयतया तादृशशास्त्रनिर्मातृत्वस्य जगन्निर्माणेनास्फुटीकृतसार्वज्ञस्फुटीकरणप्रयोजनकत्वोपपत्तेश्च इति यदभिहितं,

(खं.) तत्तुच्छम्, शास्त्रनिर्माणेन ज्ञाप्यमाने सार्वज्ञयनिष्ठदार्ढ्ये निबिडावयवसंयोगविशेषादिरूपताया असम्भवात् स्फुटरूपताया एव वक्तव्यत्वेन "जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, तदेव द्रढयन्नाह" इति त्वदीयभाष्ये द्रढयन्नितिपदेन सार्वज्ञे पूर्वं अस्फुटत्वस्य शास्त्रनिर्माणेन स्फुटत्वरूपदार्ढ्यस्य चोक्तेः। स्फुटीकरणदार्ढ्यानुक्त्युक्त्योः त्वदीयभाष्याभिप्रेतदार्ढ्यपदार्थाज्ञानविजृंभितत्वात्। घटपटादिविषयकापरोक्षं विना तत्तत्पदार्थविषयकपरोक्षज्ञानेनापि शास्त्रप्रणयन-

सम्भवेन तेन शास्त्रप्रणयनेन सकलपदार्थविषयकापरोक्षज्ञानवत्त्वरूपसार्वज्ञस्यैव सिद्ध्यसम्भवेन तद्दाढर्यस्य सुतरामसम्भावितत्वाच्च ।।

(चं.) अत्र भामतीविवरणयोः जगत्कारणत्वेन सिद्धे सार्वज्ञे शास्त्रयोनित्वं हेत्वन्तरमुच्यते । वेदः स्वविषयादधिकविषयकज्ञानवत्प्रणीतः वाक्यप्रमाणत्वात् पाणिन्यादिशास्त्रत्वदित्युक्तं, तन्न, एकार्थमात्रज्ञेन प्रयुक्तस्यानेकार्थकस्य शब्दस्याबाधितानेकार्थबोधकत्वदर्शनात् । नन्वन्योऽर्थो न तात्पर्यविषय इति चेत्तर्हि प्राशस्त्यपरार्थवादप्रतीतवायुक्षेपिष्ठादिसंसर्गज्ञं ब्रह्म न स्यात् । पदार्थज्ञानं विना पदप्रयोगायोगेऽपि संसर्गज्ञानासिद्धेः । मानांतरप्राप्ते संसर्गेऽवान्तरतात्पर्यस्याप्यभावात् किंच वेदस्यातत्त्वे तात्पर्ये प्रामाण्यायोगात्तत्वे चिन्मात्रे तात्पर्यात् ब्रह्मापि तन्मात्रज्ञं स्यात् । किंच प्रत्यक्षादिसिद्धस्य घटादेर्निष्प्रयोजनस्य गङ्गावालुकेयत्तादेश्च शास्त्राविषयत्वात्तज्ज्ञं ब्रह्म न स्यादिति ॥

(रा.) तन्न, एकार्थमात्रज्ञप्रयुक्तः शब्दः किं पदरूपः, किंवा वाक्यरूपः । नाद्यः, तत्र प्रमाणवाक्यत्वहेत्वसिद्धेः । नांत्यः, अनेकार्थकानेकपदघटितवाक्यप्रयोक्तुः तद्वाक्यविषयावदर्थविषयकप्रतीतेरविप्रतिपन्नत्वात् । एतेन "न चान्योर्थो न तात्पर्यविषयः" इत्यादिः "तज्ज्ञ ब्रह्म न स्यात्" इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः, अनुक्तोपालम्भनत्वादिति यत्,

(खं.) तत्तुच्छम्, द्वितीयपक्षस्यैवास्मदभिप्रेतत्वेन एकार्थमात्रज्ञपुरुषप्रयुक्तेषु अनेकार्थकगवाक्षादिपदघटितेषु गौरस्ति, अक्षमस्ति इत्यादि वाक्येषु प्रमाणवाक्यत्वसत्त्वेऽपि स्वविषयादधिकविषयकज्ञानवत्प्रणीतत्वाभावस्याऽऽपामरमनुभवसिद्धत्वेन व्यभिचारानुद्धारात् । अने-

कार्थकपदघटितवाक्यप्रयोक्तॄणां सर्वेषामपि तद्वाक्यविषययावदर्थविषयक प्रतीतेरभावनिश्चयेनाविप्रतिपन्नत्वोक्तेराग्रहमात्रमूलत्वात् । स्वतात्पर्य-विषयादधिकविषयकज्ञानवत्प्रणीतत्वं साध्यते, अनेकार्थकपदघटितवाक्य स्वतात्पर्यविषयीभूतैकद्वित्रादिरूपार्थादधिकविषयकज्ञानवत्प्रणीतत्वं वर्तते इति व्यभिचाराभावशङ्कायां वेदतात्पर्यविषयीभूतचिन्मात्रज्ञं ब्रह्म स्यात्। अतत्त्वे तात्पर्ये वेदस्याप्रामाण्यापत्त्या तत्र तात्पर्यस्य वक्तुमशक्यत्वेन अतत्त्वभूतजगज्ज्ञं ब्रह्म न स्यादित्यादिदूषणस्य चन्द्रिकाकारैरुक्तत्वात्सा-ध्यकोटौ स्वतात्पर्यविषयादधिकविषकत्वाद्यनिवेशे व्यभिचारदोषेणैवानु-मानस्य दुष्टत्वात् ॥

(चं.) अपि च न तावदर्थमुपलभ्य रचयितृत्वं प्रणेतृत्वं, पौरुषेयत्वापातात् । नाप्यध्यापकवदुच्चारयितृत्वमात्रं, तेन सार्वज्ञासिद्धेः। किञ्च स्वव्यतिरिक्तोपदेश्यपुरुषगोचरस्य भ्रमस्य भ्रान्तिसिद्धशरीरादेश्चाभावे उच्चारणायोगात् तस्य चासार्वज्ञं विनाऽसम्भवाच्छास्त्रयोनित्वमसार्वज्ञ एव हेतुरिति यदुक्तं,

(रा.) तन्न, तत्तदर्थोपलब्धिपूर्वक पूर्वपूर्वकल्पीयवर्णपदवाक्यक्रम-स्वरादिसजातीयवर्णपदवाक्यक्रमस्वरादिमत्त्या शास्त्रं प्रति रचयितृत्वं शास्त्रप्रणेतृत्वमिति भामतीकल्पतर्वोर्देवताधिकरणे निर्णीतत्वात् माया-कार्यसर्ववस्तुविषकमायावृत्तिरूपज्ञानवत्त्वात्मकसर्वज्ञत्वस्य तत्प्रयुक्त-शब्दोच्चारणस्य च मायाख्योपाधिमात्रेण निर्वाहे तदर्थं शरीराद्यनपेक्षात्। अपेक्षणेऽपि साक्षान्मायैव भगवच्छरीराकारेण वर्तत इत्यस्यार्थस्य अन्त-स्तद्धर्माधिकरणभाष्ये शंकरभगवत्पादैरुक्तत्वात् । मायाकार्यसर्वविष-यकमायावृत्तिरूपज्ञानत्वात्मकसार्वज्ञ्यवति ब्रह्मणि तदभावरूपासार्वज्ञा-पादानासंभवात् । तूलाविद्यापरिणामरूपवृत्तेः सिद्धान्ते भ्रमत्वांगीकार-वन्मायावृत्तेस्तत्त्वानङ्गीकारात् । बाधितार्थविषयकत्वरूपभ्रमत्वं तु सर्व-वस्त्वपरोक्षाव भासरूपवृत्तेरपि इष्यत एव। न ह्येतावता जीववद्ब्रह्म-णोऽपि भ्रान्तत्वं, तूलाविद्यापरिणामरूपभ्रमाख्यवृत्तिमत्त्वस्यैव भ्रान्तत्व-प्रयोजकत्वादिति यदुक्तं,

(खं.) तत्तुच्छम्, तत्तदर्थोपलब्धिपूर्वकं पूर्वपूर्वकल्पीयवर्णपदवाक्यक्रमस्वरादिसजातीयवर्णपदवाक्यक्रमस्वरादिवत्तया शास्त्रं प्रति रचयितृत्वं शास्त्रप्रणेतृत्वमिति भामतीकल्पतर्वोर्देवताधिकरणेऽनुक्तत्वात्, निर्णीतत्वस्य तु दूरोत्सारितत्वात्। लोके कालिदासादिवत् अर्थोपलब्धिपूर्वकं रचयितृत्वं, अध्यापकवत् पूर्वपूर्ववाक्यसजातीयवाक्योच्चारणकर्तृत्वमिति प्रणेतृत्वं द्वेधा दृष्टम्। त्वदुक्तस्य अर्थोपलब्धिपूर्वकं पूर्वपूर्वकल्पीयेत्यादिरूपस्य प्रणेतृत्वस्य लोकविलक्षणत्वेन अप्रामाणिकत्वेन चाङ्गीकारानर्हत्वाच्च।

मायायाः ईश्वररूपत्वाङ्गीकारपक्षे वा ईश्वरशरीरत्वमनङ्गीकृत्य उपाधित्वस्वीकारे वा उच्चारणादिनिर्वाहेऽपि मायाया अद्वैतभङ्गभिया कल्पितत्वस्यैवाङ्गीकार्यत्वेन मायाविषयकभ्रान्तेरपि शरीरादिभ्रान्तिवत् विशेषाज्ञाननिबन्धनत्वेन मायया शब्दोच्चारणाद्यङ्गीकर्त्रापि विशेषज्ञानस्यावश्यमभ्युपगमनीयत्वेन घट्टकुट्टीप्रभातन्यायेन पुनः असार्वज्ञापत्तेर्दुर्निवारत्वात्। अन्तस्तद्धर्माधिकरणशाङ्करभाष्ये तु "स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थं,

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि॥

इति स्मरणात्" इति वाक्येन ईश्वररूपस्य मायामयत्वं प्रतिपादितम्। तदप्यत्यन्तमसङ्गतमेव। तथा हि–प्रमाणतयोदाहृतं तु वाक्यं भारतशान्तिपर्वगम्।

[1] एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः।
तं मुनिं दर्शयामास नारदं विश्वरूपधृक्॥

इति अध्यायप्रथमश्लोके एव पूर्वाध्यायेषु वर्णितानां विश्वरूपादीनां "तथ्यैर्नामभिः" इति पदेन पारमार्थिकसत्यत्वस्य कथनेन,

१ भा. शां. ३३९–४५.

एवं स भगवान्देवो विश्वमूर्तिर्धरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तर्दधे पुनः ।

इति अन्तर्धानोक्त्या च,

वाग्यतः प्रयतो भूत्वा ववन्दे परमेश्वरम् ।
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ।।

इति विश्वरूपस्य देवकारणत्वाव्ययत्वाद्युक्त्या च अज्ञानकल्पितत्वासम्भवात् । "माया ह्येषा मया सृष्टा" इत्यादिश्लोकस्यान्यार्थत्वात् ।

[1]एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ।।
न च मां ते ददृशिवे न च द्रक्ष्यति कश्चन ।
ऋते ह्येकान्तिकश्रेष्ठात्त्वं चैवैकान्तिकोत्तमः ।।

इति श्लोकाभ्यां मम दर्शनं एकान्तभक्तिसाध्यमित्युक्त्वा, रूपवद्घटादिपदार्थदर्शने भक्तेरनपेक्षितत्वेन तवापि रूपवत्त्वात् त्वद्दर्शनं कुतो भक्तिसापेक्षमिति हार्दशङ्कापरिहाराय,

एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ।।४४।।
इच्छन्मुहूर्तान्नश्येयं ईशोहं जगतां गुरुः ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।।४५।।

इति श्लोकाभ्यां परमात्मा रूपवानिति घटादिवत् दृश्यत इति त्वया न विज्ञेयम् । यदि त्वत्दृष्टिविषयो न भवेयं इति इच्छा, तत्क्षण एव 'नश्येयं' अदृश्यो भवानि, अहमदर्शनविषये समर्थः सर्वजगतोऽपि गुरुः। मां पश्यसीति यत् एषा सर्जनविषयीभूतादृशिः[2] 'माया' इच्छाधीना किंवा

1. १२-१३.
२. ज्ञानम् ।

मम ज्ञानाधीना इति ईश्वरदर्शनस्य ईश्वरेच्छाधीनत्वमेवोच्यते। न तु अविद्याकल्पितत्वमिति। विष्णुतत्त्वरहस्यविवरणग्रंथे "तदेतद्भगवच्छरीरं ज्ञानमयं न भूतगुणयुक्तम्,

मायाह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि।"

इति मोक्षधर्मे नारदं प्रति ज्ञानमयत्वस्य भूतगुणादिशून्यत्वस्य च भगवता प्रतिपादनात्। 'माया ह्येषा' इति मायाशब्दः ज्ञानवचनः "माया वयुनं ज्ञानं" इति नैघंटुकवचनप्रामाण्यात्। न तु मायाशब्दः गुणत्रय[1]साम्यावस्थामूलप्रकृतिवचनः, "न तस्य प्राकृता मूर्तिः" इति भगवच्छरीरस्य प्राकृतत्वनिराकरणात्" इति वदतस्तव ईश्वरशरीरस्य अविद्याख्यमायामयत्वस्वीकरणं स्वोक्तिविरुद्धं चेति सर्वविषयकज्ञानस्यैव सार्वज्ञपदार्थतया मायाकार्यसर्वविषयकमायावृत्तिरूपज्ञानवत्त्वस्य सार्वज्ञपदार्थत्वाभावात्। त्वदीयसङ्केतमात्रस्याप्रयोजकत्वाच्च। त्वत्कल्पितशशविषाणायितसार्वज्ञाभावस्य ब्रह्मणि सिद्धत्वेन तादृशसार्वज्ञाभावस्यास्माभिरनापादनाच्च। सर्ववस्त्वपरोक्षावाभासरूपमायावृत्तेर्बाधितार्थविषयकत्वरूपभ्रमत्वमङ्गीक्रियते, परं तु तदाश्रयस्य परमात्मनः भ्रांतत्वं नाङ्गीक्रियत इति वक्तुं दृश्यतां मतिवैषम्यम्, भ्रान्तत्वं नाम भ्रान्त्याश्रयत्वं, भ्रान्तिर्नाम भ्रमः, भ्रमाश्रयत्वमङ्गीकृत्य भ्रान्तत्वं नाङ्गीक्रियते इत्युक्तेर्मे माता वन्ध्येतिवत् स्वव्याहतत्वात्। तूलाविद्यापरिणामरूपभ्रमाख्यवृत्तिरेवाप्रामाणिकी, तस्या भ्रान्तत्वप्रयोजकत्वं सुतरामप्रामाणिकमेव, पदार्थानां प्रमाणमंतरा तत्तत्पुरुषीयकल्पनामात्रेणाङ्गीकारानर्हत्वात्। अन्यथापामराङ्गीकृतानां शशविषाणादीनामप्यङ्गीकारप्रसङ्गादिति॥

(चं.) विवरणे तु यथा दीपगताप्रकाशनशक्तिस्तदुपादाने वह्नौ, तथा वेदगता सर्वप्रकाशनशक्तिस्तदुपादाने ब्रह्मणि, कार्यो-

१. सत्त्वरजस्तमांसि।

पादानयोरेकशक्तित्वादिति उक्तं, तन्न, कारणेऽदृष्टस्यापि शक्तिविशेषस्य कार्ये दर्शनात्। किंच त्वन्मतेऽन्धकारदहनादेरपि ब्रह्मोपादानकत्वात्तद्गताप्रकाशनदाहादिशक्तिमद्ब्रह्मस्यात्। अविद्यापि शास्त्रोपादानमिति साऽपि सर्वज्ञा स्यात्। किंच परिणामिपरिणामयोरेकशक्तित्वेपि कथमधिष्ठानाध्यस्तयोस्तत्। एतेनाधिष्ठानस्य ब्रह्मणो विज्ञानशक्तिविवर्तरूपं शास्त्रमिति निरस्तम्। अविद्याकाशादेरपि तद्विवर्तत्वेन शास्त्रवत्सर्वप्रकाशकत्वापातात्। रज्ज्वामपि भयकम्पादिशक्तेः ब्रह्मण्यप्यावरणविक्षेपादिशक्तेः प्रसङ्गाच्च। बाह्यागमानामपि ब्रह्मविवर्ततया तदर्थज्ञत्वे ब्रह्मणो भ्रान्तत्वप्रसङ्गाच्च। अपिच त्वया कार्योपादानयोरेकशक्तित्वस्योक्तत्वाद्वेदः स्वयमज्ञ एव जीवान् प्रति प्रकाशक इति ब्रह्मापि तथा स्यात्। तथा च सार्वज्ञार्थं यत्नेऽत्यन्ताज्ञत्वमेवापन्नमिति चंद्रिकोपरि,

(रा.) विवरणे 'दीपगता शक्तिः यथा तदुपादाने वह्नौ, तथा वेदगता सर्वप्रकाशनशक्तिस्तदुपादाने ब्रह्मणि, कार्योपादानयोरेकशक्तित्वात्' इति ग्रन्थे हेतुभागे कार्यपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नकार्यमर्थः, न तूपादेयभूतकार्यसामान्यं, एवं तद्भागे उपादानपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नोपादानमर्थः, न तूपादानसामान्यं, दीपवह्न्योः प्रकाशद्रव्ययोरेव कार्योपादानयोरेकशक्तित्वविषये निदर्शनतया गृहीतत्वात्। ब्रह्मणश्च प्रकाशद्रव्यत्वं "तस्य भासा सर्वमिदं विभाति" इति श्रुतिसिद्धम्। एतेन कारणेऽदृष्टस्यापि शक्तिविशेषस्य' इत्यादिः 'ब्रह्मापि तथा स्यात्' इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः इति यदभिहितं,

(खं.) तत्तुच्छम्। "कार्यपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नकार्यमर्थः, न तूपादेयभूतकार्यसामान्यं, एवं तद्भागे उपादानपदस्य प्रकाशत्वव्याप्यधर्मावच्छिन्नोपादानमर्थः, न तूपादानसामान्यं" इत्युक्त्या ब्रह्म

प्रकाशनशक्तिमत्, प्रकाशत्वव्याप्यधर्मावच्छिन्नत्वे सति प्रकाशत्वव्याप्यधर्मावच्छिन्नकार्यभूतवेदोपादनत्वात्, यत् प्रकाशत्वव्याप्यधर्मावच्छिन्नत्वे सति प्रकाशत्वव्याप्यधर्मावच्छिन्नकार्योपादानं, तत् तादृशकार्यगतशक्तिमत्, यथावह्निरित्यनुमानमभिप्रेतं भवति। तच्चायुक्तं, हेत्वप्रसिद्धेः, कार्यभूतवेदस्यार्थप्रकाशकत्वेऽपि प्रकाशरूपत्वाभावेन प्रकाशत्वव्याप्यधर्मावच्छिन्नत्वाभावात्। यथोपादानान्तराणामुपादेयगतशक्त्यभावेऽपि निर्वाहः, तथा प्रकाशरूपोपादानस्यापि प्रकाशरूपोपादेयगतशक्त्यभावेऽपि निर्वहेणाप्रयोजनकत्वाच्च। अविद्याया एव परिणाम्युपादानत्वं, न तु निर्विकारस्य ब्रह्मणः, किंतु विवर्तोपादानत्वमिति त्वन्मतस्थितेः। ब्रह्मणः परिणाम्युपादानत्वे यथाकथंचित् परिणममाननिष्ठशक्तेः परिणामे सद्भावशङ्कायामपि, अधिष्ठानाध्यस्तयोरेकशक्तिकत्वाङ्गीकारे रज्ज्वामपि भयकंपादिशक्तेः, ब्रह्मण्यावरणविक्षेपादिशक्तेश्च प्रसङ्गाच्चेत्यादिदूषणगणानां जागरूकत्वाच्च। तथा च चन्द्रिकोक्तानां दोषाणां मध्ये एकस्याप्यपरिहारात् मध्वचन्द्रिकाग्रन्थः परास्त इत्युक्तिरुन्मादमूलैवेत्युपेक्ष्यते ॥

**(चं.) किंच जन्मादिकारणत्वेनैवोपलक्षणेनोपलक्ष्यस्वरूपसिद्धेः किं निर्विशेषत्वप्रतिकूलसार्वज्ञस्फोरणादिनेति यत्,**

**(रा.)** तन्न, निर्विशेषस्वरूपोपलक्षकसर्वजगत्कारणत्वोपपाद्यसार्वज्ञस्यापि कारणत्ववत् निर्विशेषत्वोपलक्षकतया तत्प्रतिकूलत्वाभावादिति यत्परेणोक्तम्,

**(चं.)** तत्तुच्छं, जन्मादिकारणत्वेनैवोपलक्ष्यस्वरूपसिद्धेः किं सार्वज्ञस्फोरणेन प्रयोजनम्। न हि जगत्कारणत्वेनानुपलक्षितं किमपि सार्वज्ञेनोपलक्ष्यमाणं त्वन्मते विद्यते इति प्रथमाक्षेपस्य परिहारकथनात्। सार्वज्ञं निर्विशेषत्वप्रतिकूलमेव, सार्वज्ञरूपविशेषस्य विशेषसामान्याभाववत्स्वरूपनिर्विशेषत्वविरुद्धत्वात्। कारणत्ववदिति दृष्टान्तोपादान-

मप्यसङ्गतमेव । न ह्यस्माभिः कारणत्वं निर्विशेषत्वानुकूलमित्यङ्गीकृतं, तस्यापि विशेषसामान्याभावप्रतियोगिरूपत्वेन निर्विशेषत्वप्रतिकूलत्वात् । कारणत्वादिधर्माणां मिथ्यात्वाङ्गीकारे तत्प्रतिपादवेदस्याप्रामाण्यापत्तेः । विष्णुतत्त्वरहस्यविवरणे त्वयैव ब्रह्मधर्माणां सत्यत्वस्य, ब्रह्मणः सगुणत्वस्य च निर्णीतत्वेन कारणत्वसर्वज्ञत्वादिधर्माणां मिथ्यात्वकथने स्वोक्तिविरोधापाताच्च ॥

(चं.) ननु तर्हि पूर्वसूत्रोक्तयसर्वकारणत्वाक्षेपे तत्समाधानार्थमिदमस्तु । उक्तयं हि कल्पतरौ

अथवा वेदनित्यत्वाद्ब्रह्मणो विश्वयोनिता ।
नेति शङ्कामपाकर्तुं शास्त्रयोनित्वमुच्यते ॥

इतीति चेन्न, अस्य श्रुतीनां परस्परविरोधपरिहारेण "यावद्विकारं" इत्यादिसूत्रोक्तैर्भिन्नत्वादिसाधारणहेतुभिर्ब्रह्मेतरसर्वानित्यत्वप्रतिपादके वियत्पादे वक्तव्यत्वात् । किं चाध्यापकेपि पूर्वपूर्वसदृशानुपूर्वीरचयितृत्वस्य भावादभिनवानुपूर्वीरचयितृत्वादेश्च ब्रह्मण्यप्यभावादध्यापकादधिकस्य शास्त्रयोनित्वस्य ब्रह्मण्यसिद्धिः । ननु बहुकालविरतसम्प्रदायस्य वेदस्य सर्गादावकस्मान्निःसरणं ब्रह्मण्यधिकमिति चेन्न, जन्मादिसूत्रेऽस्येऽत्यनेन शास्त्रस्यापि विवक्षायां घटादिकं प्रति प्रसिद्धकर्तृत्वस्याकाशादीन् प्रतीव लौकिकप्रमाणवाक्यं प्रति प्रसिद्धकर्तृत्वस्य शास्त्रं प्रति वक्तव्यतया निःसरणावधित्वस्यानुक्तत्वेनेह तत्समर्थनायोगात् इति यत्,

(रा.) तन्न, अवश्यापेक्षितप्रमाणोपन्यासार्थं सूत्रे शास्त्रस्य वक्तव्यत्वे तस्मिन्नेव सूत्रे प्रमाणत्वादिति वक्तव्यस्थाने योनित्वादिति

निर्देशेन वेदनित्यत्वप्रयुक्तजगत्कारणत्वासम्भवशङ्कानिराकरणसम्भवे वेद नित्यत्वार्थं वियत्पादे पृथक् सूत्रं कृत्वा वेदनित्यत्वं विचार्यमित्यापादनस्य लाघवगौरवादितर्कप्रतिभासमूलत्वात् । श्रुतीनां परस्परविरोधपरिहारेणानित्यत्वं वक्तव्यं चेत् वियत्पादे सङ्गतिः स्यात् । शास्त्रनित्यत्वेन ब्रह्मणि कृत्स्नजगत्कारणत्वलक्षणासम्भव आपाद्यमाने लक्षणकथनानन्तरमेव लक्षणासम्भव परिहारस्य वक्तव्यतया तस्यात्रैव सङ्गतत्वेन वियत्पादे तत्संगतिकथनस्यात्यन्तासंगतत्वाच्च । ब्रह्मणः शास्त्रकारणत्वं च शास्त्रप्रतिपाद्यसर्वार्थपरिज्ञानपूर्वकं कल्पान्तरीयशास्त्रगतवर्णपदवाक्यक्रमस्वरार्थादिसदृशवर्णपदादिमत्त्वेन शास्त्ररचयितृत्वं न तु भारतादिकर्तृत्ववत् अपूर्ववर्णपदवाक्यक्रमत्वेन वेदरचयितृत्वम् । एतेन 'अध्यापक, इत्यादिः मध्वचन्द्रिकाग्रन्थः परास्तः । इति यदुक्तं,

त्रं ) तत्तुच्छम्, त्वन्मतरीत्या जगत्कारणत्वे प्रमाणकथनावश्यकत्वस्य एतदधिकरणोपक्रम एवोक्तत्वात् । शास्त्रयोनित्वादित्युक्तिमात्रेण वेदस्येश्वरजन्यत्वे प्रमाणोक्ति विना वेदनित्यत्वप्रयुक्तजगत्कारणत्वासम्भवशङ्कानिराकरणासम्भवाच्च । अन्यथा "आनन्दमयोभ्यासात्, अन्तस्तद्धर्मोपदेशात्" इत्यादि सूत्रेषु प्रमाणकथनं व्यर्थमापद्येत । 'आनन्दमयः अन्तस्थः' इत्येवोक्तिः स्यात् । वियदादे नित्यत्वादीश्वरकार्यत्वाभावमाशंक्य, "प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः" इति त्वदीयसिद्धान्तसूत्रे आकाशोत्पत्तौ प्रमाणोक्तेश्च । तथा च "शास्त्रयोनित्वात्" इत्युक्त्या वेदनित्यत्वप्रयुक्तजगत्कारणत्वासम्भवशङ्कानिवृत्तेः तदर्थं पृथक् सूत्रस्यावश्यं वक्तव्यत्वात् लाघवभ्रमवति त्वय्येव लाघवं न तु सूत्रेष्विति । श्रुतीनां परस्परविरोधपरिहारस्यापि स्वतोऽनपेक्षितत्वेन श्रुतीनां परस्परविरोधे जगत्कारणत्वादीनामसम्भवे प्राप्ते विरोधपरिहारद्वारा वियदाद्यदीनामनित्यत्वं व्यवस्थाप्य ब्रह्मणः कारणत्वव्यवस्थापनार्थत्वात् वियदाद्यधिकरणानां वा अत्रैव समावेशः, अस्याधिकरणस्य वा तत्र समावेश इति प्रसङ्गस्य दुष्परिहारत्वात् ॥

शाङ्करबृहदारण्यभाष्यादौ शास्त्ररचयितृत्वे बुद्धिपूर्वकत्वाभावस्यो-

कतत्वेन शास्त्रप्रतिपाद्यसर्वार्थपरिज्ञानस्य कल्पान्तरीयशास्त्रगतवर्णपद-वाक्यक्रमस्वरार्थादिसदृशवर्णपदादिमत्त्वेन शास्त्ररचयितृत्वं प्रति अप्रयोजकत्वेन च शास्त्रप्रतिपाद्यसर्वार्थपरिज्ञानकार्येण शास्त्ररचयितृत्वेन अध्यापक इव ब्रह्मणि शास्त्रप्रतिपाद्यसर्वार्थविषयकज्ञानानुमानस्यायोगात्। शास्त्रप्रतिपाद्यार्थपरिज्ञानपूर्वकं शास्त्ररचयितृत्वेऽङ्गीकृते पौरुषेयत्वापातापरिहारात् ॥

(चं.) [2]एतेनैव "अस्य महतो भूतस्य" इत्यादिवेदवाक्यं ब्रह्मणो वेदकर्तृत्वेन सर्वज्ञत्वं न साधयति, वेदस्य सापेक्षत्वप्रसङ्गादिति पूर्वपक्षे, साधयति, अर्थमुपलभ्य रचयितृत्वस्याभावात्, उच्चारयितृत्वमात्रस्य च सापेक्षत्वानापादकत्वादिति परेषामधिकरणमपास्तं, "अस्य महतः" इत्यादेरनुमानरूपत्वाभावाच्चेति यदुदितं,

(रा.) तन्न, सर्वज्ञत्वव्याप्यवेदकर्तृत्वप्रतिपादकत्वेनास्य वाक्यस्यानुमानरूपत्वे बाधकाभावादिति यत्परवचनं,

(खं.) तत्तुच्छम्, वेदस्य स्वप्रतिपाद्यवेदकर्तृत्वस्य सर्वज्ञत्वव्याप्यत्वमात्रेणानुमानरूपत्वे सर्वस्याप्यर्थस्य यत्किंचिद्व्याप्यत्वेन सर्वस्यापि वाक्यस्यानुमानरूपत्वापत्तेः। अनुमानत्वप्रयोजकव्याप्त्याद्यादिमल्लिङ्गविषयबोधजनकत्वस्यास्मिन् वाक्येऽभावात्, ब्रह्मनिष्ठवेदकर्तृत्वस्य उच्चारयितृत्वमात्ररूपत्वेन सर्वज्ञत्वाव्याप्यत्वात् ॥

इति अद्वैतिमते शास्त्रयोनित्वाधिकरणानुपपत्तिः

ॐ शास्त्रयोनित्वात् ॐ ॥ अत्र जगज्जन्मादिकारणत्वं किमन्यस्यापि किं वा विष्णोरेवेति चिन्ता। तदर्थं कारणत्वं किमनुमानादि विषयत्वयोग्यमुतायोग्यमिति ॥ पूर्वपक्षस्तु—

१. २–४–१०.

२. लक्षणानन्तरमवश्यापेक्षितेत्यादिनोक्तदूषणजातेन।

आगमादनुमानाद्वा कर्तृत्वं विष्णुभिन्नगम् ।
अतिव्याप्तमतो नैतत् विष्णोरेव स्वलक्षणम् ।।

इति । शिवो जगज्जन्मादिकर्ता सर्वज्ञत्वादिति व्यतिरेकिणा वा, महाकल्पत्वं कल्पत्वव्याप्यधर्मेण स्वाश्रयसमानजातीयकल्पवृत्त्यादिकर्तृभिन्नकर्तृकादिकार्यवद्वृत्ति, कल्पत्वव्याप्यत्वात्, अवान्तरकल्पत्ववत् इत्याद्यन्वयिना वा, पाशुपताद्यागमेन वा रुद्रादीनां कारणत्वसिद्धेरतिव्याप्तं कारणत्वं न ब्रह्मलक्षणं भवितुमर्हतीति ।।

सिद्धान्तस्तु—जगत्कारणस्य शास्त्रस्य च विष्णोरेव जगत्कारणत्व प्रतिपादकत्वात् विष्णुरेव जगज्जन्मादिकारणं, न तु तथानुमीयमानोऽपि रुद्रः, रुद्रजगत्कारणत्वानुमानस्य "एको नारायण आसीन्न ब्रह्मा न च शङ्करः" इत्यागमबाधितत्वात् । केवलानुमायाः कामगामित्वेन शशादीनां विषाणित्वादौ च कर्तुं शक्यतया प्रामाण्यस्याङ्गीकर्तुमशक्यत्वाच्च। "औपनिषदः पुरुषः" इत्यादिश्रुत्या जगत्कारणे अनुमानप्रामाण्यनिषेधाच्च ।

चक्षुरादि यथाऽशक्तं रसगन्धादिवस्तुषु ।
अनुमापि तथाऽशक्ता धर्मब्रह्मादिवस्तुषु ।।

ननु तथापि पाशुपताद्यागमेन रुद्रादीनां जगत्कारणत्वं सेत्स्यतीति चेन्न,

ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ।।
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ।
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ।।

इति स्कान्दे,

सांख्यं योगः पाशुपतं वेदारण्यकमेवच ।

इत्यादिना भारतेऽपि पाशुपतादेः अशास्त्रत्वाप्रामाण्ययोरुक्त्या तेनापि रुद्रादीनां जगत्कारणत्वसिद्ध्यसम्भवेन अतिव्याप्त्यसम्भवाद्युक्तं जगज्जन्मादिकारणत्वं विष्णोर्लक्षणमिति चन्द्रिकोक्ताधिकरणोपरि,

(रा) तन्न, भवद्भाष्ये पदे पदे प्रमाणतयोदाहृते भागवते तृतीयचतुर्थस्कंधयोः

ब्रह्मादयो यत्कृतसेतुपाला यत्कारणं विश्वमिदं हि माया ।
आज्ञाकरी यस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम् ॥

इत्यादिना रुद्रस्यापि जगत्कारणत्वप्रतिपादनात् इति 'यदुक्तं,

(खं) तत्तुच्छम्, जन्माधिकरणे श्रीकण्ठभाष्यनिराकरण-प्रस्तावे विष्णुतत्त्वरहस्यविलासे च रुद्रादीनां जगत्कारणतापरतया आपाततः प्रतीयमानानां श्रुतीनां यथा ब्रह्मपरता त्वया व्यवस्थापिता, यथा ब्रह्ममीमांसाशास्त्रे सिद्धान्तानभिमतार्थपरतया प्रतीयमानानां श्रुति-स्मृत्यादीनां उपक्रमादिवशेन अन्यार्थता भाष्यकारैरुच्यते, अन्यथा मीमांसाया वैयर्थ्यप्रसङ्गात्, तथा आपाततः रुद्रकारणताप्रतिपादकतया प्रतीतमपि भागवतवाक्यं "एको रुद्रो न द्वितीयाय तस्थे" इति श्रुतिवाक्यात्,

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥

इत्यादीनां विष्णोः सर्वोत्तमत्वप्रतिपादकानां रुद्रवाक्यानां सत्त्वेनान्यार्थ-ताया वर्णनीयत्वात् । एतच्छ्लोकार्थस्तु—ब्रह्मादयः यत्कृतसेतुपालाः येन हरिणा कृतं धर्मसेतुं पालयन्ति इति यत्कृतसेतुपालाः, इदं विश्वं मायया स्वेच्छया यत्कारणं हरिकारणकं. रुद्रसंबंधिपिशाचचर्या तस्य हरेः आज्ञाकरी, विभूम्नः पूर्णस्य हरेः विडंबनं लोकानुकरणरूपं चरितं अहो आश्चर्यकरमिति । पद्मपुराणादौ हर्याज्ञया ईश्वरः पिशाचचर्यां करोतीत्युक्तत्वात् पिशाचचर्याया रुद्रसंबंधित्वेन रुद्राज्ञाकारित्वव्यव-हारायोगात् । न हि रुद्रस्य चर्या रुद्राज्ञाकरीति लोके व्यवहारो दृष्टः। तस्मात् रुद्रसंबंधिपिशाचचर्याया हर्याज्ञाकारित्वमेव युक्तम् ॥

(रा.) किं च मध्वभाष्ये—

"साङ्ख्यं योगः पाशुपतं वेदारण्यकमेव च ।

इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तं इतरेषां भिन्नमतत्वं प्रदर्श्य मोक्षधर्मेष्वपि" इति ग्रन्थेन पञ्चरात्रस्य वैदिकत्वं पाशुपतादीनामवैदिकत्वमुक्तमिति प्रतीयते, तन्न संगच्छते, भारतकोशे मुद्रिते अमुद्रिते दाक्षिणात्ये औत्तरे वा सर्वत्र,

सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै॥

इत्याकारमेव वचनं मोक्षधर्मे दृश्यते, न तु,

सांख्यं योगः पाशुपतं वेदारण्यकमेव च।

इत्याकारकम्। तथा च कोशदृश्यमानवचनरीत्या पशुपतवत् पाञ्चरात्रस्यापि वेदप्रस्थानात्प्रस्थानान्तरत्वमविशिष्टं भासते। तत्रैवं सति पञ्चरात्रस्य वैदिकत्वं पाशुपतस्यावैदिकत्वमित्यभिधानं साहसमिति यदुक्तं,

(खं.) तत्तुच्छम्,

वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ।

इति मोक्षधर्मीयनारायणीये पञ्चरात्रस्य वेदमूलकत्वस्य,

अस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायम्भुवः स्वयम्।

इति वचने वेदमूलकत्वेन संप्रतिपन्नमानवधर्मशास्त्रं प्रति पञ्चरात्रस्य मूलत्वोक्त्या पञ्चरात्रस्य वैदिकतायाः,

कथितो हरिगीतासु समासविधिकल्पितः।

इति तदीयवचनेन भगवद्गीतामूलत्वस्य च सिद्धतायाः स्वीकारेण,

[1]पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम्।
पञ्चरात्रविदो ये तु यथाक्रमपरा नृप।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै॥७३॥

[1]महाभा. शां. ३४९-६८.

इत्यादिभारतश्लोकेषु नारायणस्य पंचरात्रार्थवक्तृत्वस्य, पंचरात्रार्थ-ज्ञानिनां मोक्षस्य च उक्तत्वेन पंचरात्रस्य प्रामाण्यसिद्धेः, पंचरात्रस्य वैदिकत्वकथनस्य साहसत्वोक्तेरुन्मादमूलत्वेनोपेक्षणीयत्वात् ॥

(रा.) उभयविधदर्शनेन तर्हि वैदिकत्वस्य संदिग्धतया तन्निश्चयायोगादिति यत्,

(खं.) तत्तुच्छं, निरवकाशानां पंरात्रप्रामाण्यसाधकानामनेकेषां वाक्यानामनुसारेण तथाऽनेकलिखितपुस्तकपाठानुसारेण त्वदीयपाठस्यैव कल्पितत्वाङ्गीकारस्योचितत्वात् । अन्यथा परस्परविरुद्धार्थप्रतिपादकत्वेन भारतस्याप्रामाण्यापत्तेरित्यलं व्याहतप्रक्रियानिरासप्रपञ्चेन ॥

इति शास्त्रयोनित्वाधिकरणम्

॥ श्रीः ॥

॥ अथ समन्वयाधिकरणम् ॥

## ॐ तत् तु समन्वयात् ॐ



(चं.) अत्र परैर्वेदान्ता न ब्रह्मणि प्रमाणं, सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलाभावात्सापेक्षत्वप्रसङ्गाच्चेति प्राप्ते, द्विविधं हीप्सितं, किञ्चिदप्राप्तं, किञ्चिच्च प्राप्तमपि विभ्रमवशादप्राप्तमित्यवगतं यथा कण्ठमण्यादिकं, एवं जिहासितं द्विविधं, किञ्चिदहीनं जिहासति, यथा वलयितचरणं फणिनं, किञ्चिच्च हीनमेव, यथा चरणाभरणनूपुरे आरोपितं फणिनं तत्र ब्रह्मात्मैक्यज्ञानात्प्राप्तब्रह्मप्राप्तिः कल्पितत्वेन नित्यहीनसंसारहानिश्च संभवतीति फलवत्त्वं, सिद्धस्यापि ब्रह्मणो मानान्तरागोचरत्वान्न सापेक्षत्वं चेति सिद्धान्तयित्वा, समन्वयश्च लक्षणयाऽखण्डार्थपरत्वं, ततश्च तद्ब्रह्म शास्त्रप्रतिपाद्यं समन्वयादिति सूत्रार्थ इत्युक्तम्। तत्र पूर्वपक्षो निर्दलः, निष्प्रयोजनत्वशङ्कायास्त्वन्मते आद्यसूत्रे जिज्ञासाशब्देनैव परिहृतत्वात्। लौकिककार्यपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वाच्च। सिद्धान्तोऽप्ययुक्तः। तथा हि—

स्वप्रभत्वादसन्दिग्धेऽवाच्यत्वाच्छ्रुत्यगोचरे।
निर्विशेषे च चिन्मात्रे कथं श्रुतिसमन्वयः॥

एवं संदिग्धस्यैव विषयत्वात्सामान्यज्ञानविशेषाज्ञाननिबन्धनस्य च संदेहस्य निर्विशेषेऽसम्भवात्, पूर्वपक्षसिद्धान्तयोश्च

सन्देहकोटयन्यतरकोटयवलम्बित्वात् फलस्य चैककोटिनिर्णया-धीनत्वात् निर्विशेषात्मनि विषयसंशयपूर्वपक्षप्रयोजनरूपाधि-करणासम्भवो द्रष्टव्यः ॥

अपि च—

आद्यसूत्रेऽहमर्थे हि प्रसिद्धिः प्रतिपादिता ।
जिज्ञासार्थं द्वितीये हि जगज्जन्मादिहेतुता ॥१॥
अविद्यमानाहमर्थे लक्षणत्वेन कीर्तिता ।
ईश्वरस्य तृतीये नु निर्विशेषप्रमाणता ॥२॥
शास्त्रस्योक्ता चतुर्थे च तस्मिन्नेव समन्वयः ।
प्रतिज्ञातोऽन्तरित्यादौ सविशेषं तु कथ्यते ॥३॥
ब्रह्मेति मायिनां पक्षस्तत्र किं केन सङ्गतं ।
तत्त्वविद्वेषमात्रेण श्रुतिसूत्रे कदर्थिते ॥४॥

किंच कंठमण्युपदेशस्य प्राप्तमणिप्राप्तिर्न फलं, किं तु प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः, मण्यप्राप्ति-भ्रमादिजन्यस्य दुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा फलं। एवं चरणाभरणमिदं न सर्प इत्युपदेशस्यापि न नित्यनिवृत्तसर्प-निवृत्तिः फलं, किं त्वाभरणत्वज्ञानजन्यसुखस्य वस्तुतः प्राग-प्राप्तस्य प्राप्तिः, सर्पभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा। न ह्युपदेशेन मणिः प्राप्तः सर्पो निवृत्त इत्यनुभवः, किं तु प्राप्तिर्ज्ञाता भ्रमो निवृत्त इति। न च प्रकृते प्राप्तस्व-रूपसुखादन्यत्प्राप्यं सुखं नित्यनिवृत्ताविद्याभ्रमदुःखादेरन्यन्निवर्त्यं वाऽस्ति, येन सप्रयोजनता स्यात्। किं च पूर्ववादिना फला-भावादिना तात्पर्यं आक्षिप्ते सिद्धान्तसूत्रे फलादिकं तात्पर्यादिकं

चानुपपाद्य प्रामाण्ये तात्पर्यं हेतूकर्तुमयुक्तम्। लक्षणाया अमुख्यत्वेन सौत्रसंशब्दार्थत्वायोगश्च। तदुक्तमनुव्याख्याने—

कथं च लक्षणावादी ब्रूयाद्ब्रह्मसमन्वयम्।
योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः॥

इतीति चन्द्रिकोपरि,

(रा.) न ब्रह्मणि वेदान्ताः प्रमाणं, सिद्धवस्तुबोधने प्रवृत्त्याद्यभावेन फलासम्भवात् सापेक्षत्वाच्च इति प्राप्ते, परिपूर्णानन्दब्रह्मात्मैक्यविषयकाज्ञानस्य तन्मूलकस्य नाहं परिपूर्णानन्दं ब्रह्म किं तु मनुष्योऽहं, दुःख्यहमित्यादिरूपस्य सर्वसंसारदुःखनिदानभ्रमस्य वेदान्तविचारजन्यब्रह्मात्मैक्यसाक्षात्कारेण निवृत्त्या तादृशनिवृत्त्युपलक्षितात्मस्वरूपं परिपूर्णानन्दं ब्रह्मैव प्राप्तब्रह्मप्राप्तिशब्दितं फलितमिति सिद्ध्यतीति सफलत्वात्, ब्रह्मणो मानान्तरागोचरत्वेन प्रत्यक्षादिगृहीतग्राहित्वरूप सापेक्षत्वाभावाच्च, वेदान्ता ब्रह्मणि प्रमाणम्। न चाद्यसूत्रेण जिज्ञासापदस्वारस्येन विचाराधीनज्ञानस्याज्ञाननिवृत्तिरूपफलसिद्धेः इदं सूत्रं कृतकरमिति शंक्यं, जिज्ञासापदेन फलस्य सूचनेऽपि जिज्ञासापदलब्धज्ञाननिष्ठाज्ञाननिवृत्तिजनकतायां संशब्दितापक्रमादिषड्विधतात्पर्यलिङ्गज्ञानाधीननिर्णयविषयब्रह्मात्मैक्यविषयकत्वमवच्छेदकमिति प्रतिपादनपरत्वेनास्य सूत्रस्य कृतकरत्वाभावादिति सिद्धान्तः। सूत्रार्थस्तु तत् जीवाभिन्नं ब्रह्म ब्रह्मज्ञाननिष्ठमोक्षजनकतायां विषयितासंबन्धेनावच्छेदकं, उपक्रमादिषड्विधतात्पर्यलिङ्गज्ञानाधीननिर्णयविषयाखण्डसच्चिदानन्दब्रह्मात्मैक्यतात्पर्यकवेदान्तबोध्यत्वरूपसमन्वयादिति प्राहुः॥ एतेन 'तत्र पूर्वपक्षोऽनुपपन्नः' इत्यादिः 'जिज्ञासाशब्देन परिहृतत्वात्' इत्यन्तो मध्वचन्द्रिकाग्रन्थः परास्तः इति यदुक्तं,

(खं.) तत्तुच्छम् 'तत्, समन्वयात्' इति सूत्रघटकपदाभ्यां उक्तार्थलाभासम्भवात्। तथा हि—तच्छब्दस्य पूर्वप्रकृतपरामर्शकतया

पूर्वं जन्माद्यधिकरणादौ 'सर्वज्ञत्वादिविशेषणयुक्तं ईश्वरं मुक्त्वा संसारिणो वा उत्पत्त्यादि संभावयितुमशक्यं' इति, 'न हीदृशस्य शास्त्रस्य सर्वज्ञादन्यतः सम्भवोऽस्ति' इति च त्वदीयभाष्यवाक्याभ्यां जीवभिन्न-स्यैव सर्वज्ञसर्वशक्तिजगदुत्पत्तिस्थितिलयकारणस्य ब्रह्मणः प्रसक्तत्वा-वगत्या अस्मिन्नप्यधिकरणे 'तत् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थिति-लयकारणं वेदान्तशास्त्रादेवावगम्यते' इति वाक्येन जीवव्यावर्तकविशेषण-युक्तब्रह्मण एव ग्रहणेन 'तत् जीवाभिन्नं ब्रह्म' इति तत्पदव्याख्यानम-युक्तम्। जीवस्याल्पज्ञत्वेन सार्वज्ञादिगुणयुक्तब्रह्मणा ऐक्यं बाधितं च। त्वया मोक्षजनकज्ञाने निर्विशेषविषयकत्वस्य निर्विकल्पकज्ञानत्वस्य चाङ्गीकारेण तादृशज्ञाननिष्ठजनकतायां जीवस्य जीवाभेदस्य वा जीवा-भेदविशिष्टब्रह्मणो वा विषयतासंबन्धेनावच्छेदकत्वासम्भवात्. तत् जीवाभिन्नं ब्रह्म ब्रह्मज्ञाननिष्ठमोक्षजनकतायां विषयतासम्बन्धेनावच्छेद-कमित्यनुमानं त्वद्रीत्यैव बाधितं च। न च जीवाभिन्नत्वं न पक्षताव-च्छेदककुक्षिप्रविष्टं, किं तु ब्रह्ममात्रस्य पक्षत्वमिति वाच्यं, जिज्ञासा-धिकरण एव ब्रह्मज्ञानस्य मोक्षप्रयोजनकत्वोक्त्या ब्रह्मज्ञानमोक्षनिष्ठजनक-तायां ब्रह्मणः विषयितासंबन्धेनावच्छेदकत्वं सिद्धमिति समन्वयाधिकरण-स्य वैयर्थ्यापरिहारात्। निर्धर्मितावच्छेदकस्य पक्षीकर्तुमशक्यत्वेन ब्रह्मत्वविशिष्टस्यैव पक्षीकरणीयतया त्वदभिमतनिर्विकल्पकनिर्विशेष-विषयकब्रह्मज्ञाननिष्ठमोक्षजनकतायां विशिष्टस्य तस्यावच्छेदकत्वा-सम्भवाच्च। 'समन्वयात्' इत्यस्य उपक्रमादिषड्विधतात्पर्यलिंगज्ञाना-धीननिर्णयविषयाखण्डसच्चिदानन्दब्रह्मात्मैक्यतात्पर्यकवेदान्तबोध्यत्वरूप समन्वयादित्यर्थकत्वं स्वमनीषामात्रकल्पितं, समन्वयादिति पदेनास्या-र्थस्य केषामप्यप्रतीतेः। अनुशासनाभावाच्च। ब्रह्मणि वेदान्ता न प्रमाणमिति वादिनं पूर्वपक्षिणं प्रति एतादृशहेतोरसिद्धेश्च। न हि ब्रह्मणि वेदान्ता न प्रमाणमिति वक्ता सच्चिदानन्दब्रह्मात्मैक्यतात्पर्यकत्वं वेदान्तानामङ्गीकरोति। विष्णुतत्त्वरहस्यविवरणे,

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः प्रमाणैः स्मृतिनिकरमहाभारतादिप्रबन्धैः ।।
तत्रैव व्याससूत्राण्यकुटिलविधया भान्ति तात्पर्यवन्ति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्कराद्यैः स चापि ।।

इति, "तस्माल्लैङ्गस्कान्दशैवकौर्मब्रह्माण्डादितामसराजसपुराणानि तामसत्वराजसत्वाभ्यां मतिभ्रंशकरत्वात् श्रोत्रपदवीमनारोप्य सात्त्विकपुराणेष्वपि, ये जीवब्रह्मणोः स्वरूपाभेदवादाः, ये च प्रपञ्चमिथ्यात्ववादाः, ये वा निर्गुणब्रह्मवादाः, ये च रुद्रादिदेवतान्तरपरत्ववादाश्च, तान्सर्वान् प्रत्यक्षश्रुतिमनुस्मृतिभगवद्गीताब्रह्मसूत्रसिद्धान्तविरुद्धत्वात्परित्यज्य अवशिष्टानंशान् परिगृह्य, सम्प्रतिपन्नश्रुतिमनुस्मृतिभगवद्गीताब्रह्मसूत्रैः प्रमाणतमैः श्रीहरिरेव परब्रह्मेति विचार्य, एतद्देहान्त एव मुक्तः स्यामितीच्छावता पुरुषधौरेयेण श्रीमन्नारायण एवाप्रायणमुपासनीय इत्याकलयन्तु संतः" इति च उक्त्वा, उत्तरत्र श्रुतिमनुस्मृतिगीताब्रह्मसूत्राणां तथा जीवब्रह्मभेदे ब्रह्मणः सगुणत्वे च तात्पर्यस्य सप्रमाणं त्वयैव निर्णीतत्वेन, तथा सर्वमतसंग्रहविलासे ब्रह्मसूत्रकृतः वेदाचार्यस्य भगवतो व्यासस्य वेदान्तानां जीवब्रह्मणोः पारमार्थिकभेद एव तात्पर्यमभिप्रेतमिति, शाङ्करभाष्यगांभीर्यनिर्णयाख्यग्रन्थेऽपि जीवब्रह्मणोर्भेद एव श्रुतिसूत्राणां तात्पर्यमिति शङ्कराभिप्रेतमिति त्वयैव सहस्रकृत्वः उक्तत्वेन अखण्डसच्चिदानन्दब्रह्मात्मैक्यतात्पर्यकत्वं वेदान्तानामिति वर्णनं स्वोक्तिविरुद्धं च जीवब्रह्मैक्यप्रामाण्यभंगोक्तरीत्याऽनेकप्रमाणविरुद्धं चेति ।। एतेन 'वेदान्तविचारजन्यब्रह्मात्मैक्यसाक्षात्कारेण' इत्येतत्परास्तं, वेदांतविचारेण ब्रह्मात्मैक्यसाक्षात्कारस्यैवाजननात् ।।

(रा.) यच्चोक्तं "परिपूर्णानन्दब्रह्मात्मैक्यविषयकाज्ञानस्य तन्मूलस्य नाहं परिपूर्णानन्दं ब्रह्म किं तु मनुष्योऽहं दुःख्यहमित्यादिरूपस्य सर्वसंसारदुःखनिदानभ्रमस्य वेदान्तविचारजन्यब्रह्मात्मैक्यसाक्षात्कारेण निवृत्त्या" इति,

(खं.) तत्तुच्छम्, "न हीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति, येन नांत्या स्यात्, किं त्वविद्याविरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयते" इति, वाचारम्भणाधिकरणभामत्यामुक्तत्वेन साक्षात्कारेणाविद्यानिवृत्त्युक्तेः भामतीग्रन्थविरुद्धत्वात्। अद्वैतिमते ब्रह्मणः स्वप्रकाशतया भासमानत्वेन तत्रोक्ताज्ञानासम्भवाच्च। त्वयैव जीवब्रह्मणोः भेदस्य साधितत्वेन नाहं परिपूर्णानन्दं ब्रह्म इति ज्ञानस्य प्रमात्वेनोक्ताज्ञानमूलत्वाभावात् भ्रमत्वाभावाच्च। 'तस्माद्ब्रह्माप्येतीति उपचारमात्रमेतद्विपरीतग्रहवद्देहसन्ततेर्विच्छेदमात्रं ब्रह्मज्ञानफलमपेक्ष्य' इति बृहदारण्यशाङ्करभाष्यादावुक्तत्वेन नित्यसिद्धब्रह्मप्राप्तेः अद्वैतिमते अफलत्वाच्च ॥

(रा.) यच्चोक्तं, "ब्रह्मणो मानान्तरागोचरत्वेन प्रत्यक्षादिगृहीतग्राहित्वरूपसापेक्षत्वाभावाच्च वेदान्ता ब्रह्मणि प्रमाणं" इति,

(खं.) तत्तुच्छम्, अद्वैतिमते ब्रह्मणोऽखण्डत्वेन वाक्यार्थत्वाभावात्। पूर्वं ज्ञातस्यैव वस्तुतः पदैरुपस्थित्या पूर्वं ब्रह्मणः ज्ञातत्वाभावेन पदजन्योपस्थितिविषयत्वरूपपदार्थत्वासंभवाच्च। मानान्तरागोचरे ब्रह्मणि शक्त्या लक्षणया वा ब्रह्मविषयकबोधासंभवस्योक्तत्वाच्च॥

(रा.) चन्द्रिकोक्तगतार्थताशङ्कापरिहारार्थं जिज्ञासापदेन फलस्य सूचनेऽपि जिज्ञासापदलब्धज्ञाननिष्ठाज्ञाननिवृत्तिजनकतायां संशब्दितोपक्रमादिषड्विधतात्पर्यलिङ्गज्ञानाधीननिर्णयविषयब्रह्मात्मैक्यविषयत्वमवच्छेदकमिति प्रतिपादनपरत्वेनास्य सूत्रस्य कृतकरत्वाभावादिति यदुक्तं,

(खं.) तत्तुच्छम्, वेदान्तानां ब्रह्मात्मैक्ये तात्पर्याभावस्य वर्णितत्वेन तैः ब्रह्मात्मैक्यविषयज्ञानस्यैवासम्भवात्। ज्ञानस्याज्ञाननिवृत्तिजनकतायाः भामतीविरुद्धत्वेन 'ज्ञाननिष्ठाज्ञाननिवृत्तिजनकतायाः' इत्युः

क्तेरसङ्गतत्वाच्च। अद्वैतिमतेऽज्ञाननिवर्तकज्ञानस्य चिन्मात्रविषयकत्वेन तज्ज्ञाने ब्रह्मात्मैक्यविषयकत्वासम्भवाच्च ॥

(चं.) लौकिककार्यपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वाच्च इति यत्

(रा.) तन्न, लौकिककार्यपरवाक्यस्य प्रत्यक्षादिप्रमाणान्तरसापेक्षत्वे अनधिगतार्थगन्तृत्वलक्षणप्रामाण्यास्वीकारात्। अपौरुषेयस्यापि 'अग्निर्हिमस्य भेषजं' इत्यादेः प्रत्यक्षाधिगतार्थगन्तृत्वलक्षणसापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकमित्युक्त्यसङ्गतेश्चेति यदुदितं,

(खं.) तत्तुच्छम्, सिद्धवस्तुबोधने प्रमाणान्तरजन्यज्ञानापेक्षत्वरूपसापेक्षत्वप्रसङ्गः पूर्वपक्षितः। स च न युक्तः, सिद्धवस्तुबोधकत्वाभाववत्यपि कार्यपरवाक्ये सापेक्षत्वदर्शनेन व्यतिरेकव्यभिचारात्। सापेक्षत्वं प्रति सिद्धवस्तुबोधकतया अप्रयोजकतया पौरुषेयत्वस्य प्रमाणान्तरजन्यज्ञानापेक्षत्वरूपसापेक्षत्वं प्रति प्रयोजकतया सिद्धवस्तुबोधकत्वे सापेक्षत्वापादनस्यायुक्तत्वात्। प्रमाणान्तरावगतार्थत्वस्यापाद्यसापेक्षत्वरूपत्वाङ्गीकारे ईश्वरस्य सर्वज्ञत्वेन सर्वस्यापि प्रमाणान्तरावगतार्थकत्वप्राप्त्या सापेक्षत्वमेव स्यात्। प्रकृते 'अग्निर्हिमस्य भेषजं' इत्यादेः उक्तसापेक्षत्वाभावेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वमित्युक्तेरत्यन्तं सङ्गतत्वात् ॥

(चं.) सिद्धान्तोऽप्ययुक्तः। तथा हि—

स्वप्रभत्वादसंदिग्धेऽवाच्यत्वाच्छ्रुत्यगोचरे।
निर्विशेषे च चिन्मात्रे कथं श्रुतिसमन्वयः ॥

एवं संदिग्धस्यैव विषयत्वात् सामान्यज्ञानविशेषाज्ञाननिबन्धनस्य च सन्देहस्य निर्विशेषेऽसंभवात्, पूर्वपक्षसिद्धान्तयोश्च संदेहकोटयन्यतरकोटयवलम्बित्वात् फलस्य चैककोटिनिर्णया-

**धीनत्वात्, निर्विशेषात्मविषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनाख्य-पञ्चकरूपाधिकरणासंभवो द्रष्टव्य इति यदुक्तं,**

(रा.) तन्न, साक्षात्करोमि इत्यनुव्यवसायसिद्धलौकिकविषयतायाः प्रत्यक्षत्वात्मकत्ववत्, 'सन्देह्मि' इत्याद्यनुव्यवसायसिद्धविषयताविशेष एव संशयत्वं, न तु एकधर्मिकविरुद्धनानाधर्मप्रकारकज्ञानत्वं, तस्यायोग्यानेकपदार्थघटितत्वेन 'सन्देह्मि' इत्यादिप्रत्यक्षविषयत्वासंभवात्। तस्य सामान्यतः पदपदार्थसङ्गतिज्ञानवत्पुरुषीयश्रोत्रेन्द्रियजन्यप्रत्यक्षविषयीकृतात् 'केवलो निर्गुणश्च' इत्यादिशब्दाज्जायमाने कोटिद्वयानवगाहिनिर्विकल्पकज्ञानेऽपि संभवः, तदुत्तरं कदाचित् 'सन्देह्मि' इत्याद्यनुव्यवसायप्रत्यक्षदर्शनात्। तथा च तत्समानाकारकनिर्णयात्मकज्ञानरूपफलस्य विचारसाध्यत्वं संभवत्येव। 'केवलो निर्गुणश्च' इति वाक्ये श्रवणसमनन्तरजातापातज्ञानस्वरूपसंशयतद्वाक्यविचारजनितानापातज्ञानरूपनिर्णययोः निर्विशेषविषयकत्वनिर्विकल्पकज्ञानत्वाविशेषेऽपि, यदुत्तरं सन्देह्मीत्यादिप्रत्यक्षं तज्ज्ञानमापातज्ञानं संशय इति चोच्यते। यदुत्तरं तादृशप्रत्यक्षं नोत्पद्यते तज्ज्ञानमनापातज्ञानं निर्णय इति चोच्यते। सन्देहत्वस्योक्तरीत्या कोटिद्वयविषयकत्वरूपत्वाभावेन संशये कोटिद्वयविषयकत्वानियमादिति गौडब्रह्मानन्दस्वामिविरचितब्रह्मसूत्रमुक्तावलीजिज्ञासाधिकरणग्रन्थरीत्या पूर्वपक्षसिद्धान्तयोः विषयसंदेहयोः फलस्य च निर्विशेषेऽपि सिध्द्युपपत्तेः अधिकरणारम्भसम्भवात् इति यदुक्तं,

(खं.) तत्तुच्छम्, जिज्ञासाधिकरण एव त्वदुक्तस्य निर्विकल्पकसन्देहस्य, निर्विकल्पकनिश्चयस्य, सन्देहत्वस्य विषयिताविशेषरूपतायाः, 'केवलो निर्गुणश्च' इति वाक्यस्य निर्विकल्पकसंशयनिर्णयजनकतायाश्च अनुव्यवसायस्य निर्विकल्पकसन्देहादिविषयतायाश्च खण्डितत्वेन निर्विशेषात्मविषयसंशयपूर्वपक्षसिद्धान्तप्रयोजनाख्यपञ्चकरूपाधिकरणासंभवस्याद्वैतिमते दुरुद्धरत्वात्॥

(चं.) अपिच—

आद्यसूत्रेऽहमर्थे हि प्रसिद्धिः प्रतिपादिता।
जिज्ञासार्थं द्वितीये हि जगज्जन्मादिहेतुता॥
अविद्यमानाऽहमर्थे लक्षणत्वेन कीर्तिता।
ईश्वरस्य तृतीये तु निर्विशेषप्रमाणता॥
शास्त्रस्योक्ता चतुर्थे च तस्मिन्नेव समन्वयः।
प्रतिज्ञातोऽन्तरित्यादौ सविशेषं तु कथ्यते॥
ब्रह्मेति मायिनां पक्षस्तत्र किं केन सङ्गतम्।
तत्त्वविद्वेषमात्रेण श्रुतिसूत्रे कदर्थिते॥ इति कारिकोपरि,

(रा.) एकमेव चैतन्यमन्तःकरणशब्दितेनाहमर्थेन मायया चावच्छिद्यते। अन्तःकरणावच्छेदेन तदेव चैतन्यं जीव इति शब्द्यते। मायावच्छेदेन ईश्वर इति शब्द्यते। तत्तदवच्छेदविशिष्टं सत् तदेवावच्छेदकनिष्कासनेन शुद्धमित्यपि शब्द्यते। तथा चैकस्मिन्नेव जिज्ञासार्थं अन्तःकरणरूपावच्छेदकेनाहमिति प्रसिद्धिः। मायारूपेणावच्छेदकान्तरेण जगद्धेतुता। प्रमाणसमन्वयस्तु चैतन्ये मायावच्छेदेन। तथा चावछेदकभेदेन प्रसिद्धिजगत्कारणत्वादीनां एकवस्तुनिष्ठत्वसम्भवात् वैयधिकरण्याशङ्का न प्रसज्यत इति किमत्रासङ्गतमस्ति इति यद्दूषणमुक्तं,

(खं.) तत्तुच्छम्, अद्वैतिमते ब्रह्मातिरिक्तसत्यवस्तुनोऽभावात्, अध्यासकारणासम्भवेन मायायाः अन्तःकरणस्य च अध्यासासम्भवात्, असङ्गचैतन्यस्य मायान्तःकरणादिसंबन्धासम्भवात्, सम्बन्धाङ्गीकारेऽपि ब्रह्मणः भागाभावेन एकदेशसम्बंधासम्भवात् सर्वसम्बन्धे च जीवेश्वरब्रह्मरूपविभागानुपपत्तेः, अवच्छेदकभेदस्यैवासम्भवेनावच्छेदकभेदेन प्रसिद्धिजगत्कारणत्वादीनां एकवस्तुनिष्ठत्वकथनस्यात्यन्तमसङ्गतत्वात्। सर्वदा यस्य कस्य चित्संसारिणः सत्त्वेन सदा चैतन्यस्य विशिष्टत्वेन शुद्धत्वस्य कदाऽप्यसम्भवाच्च। अन्तःकरणावच्छिन्नचैतन्यरूपे जीवे कारणत्वो

क्तावपि ईश्वरकारणत्वोक्तेर्बाधकाभावेन "जन्माद्यस्य यतः, अनुपपत्तेस्तु न शारीरः" इत्यादिसूत्रेषु जीवकारणत्वादिनिषेधेन ईश्वरे कारणत्वादिसाधनप्रयासवैयर्थ्याच्च । "अन्तःकरणशब्दितेनाहमर्थेन" इति त्वया अन्तःकरणस्य अहमर्थत्वकथनेन अहमर्थे प्रसिद्धयुक्तावपि चैतन्ये अवच्छेदकभेदेनापि प्रसिद्ध्यप्राप्त्या वैयधिकरण्यस्य दुर्वारत्वाच्च । विष्णुतत्त्वरहस्यविवरणादिग्रन्थे "शास्त्राणां भेद एव" इत्यादिना जीवब्रह्मणोर्भेदस्य कथितत्वेन 'अन्तःकरणावच्छेदेन तदेव चैतन्यं जीव इति शब्द्यते' इत्यादेः स्वोक्तिविरुद्धत्वाच्च ॥

(चं.) किंच विस्मृतकण्ठमण्युपदेशस्य प्राप्तमणिप्राप्तिर्न फलं, किं तु प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः, मण्यप्राप्तिभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा फलम् । एवं चरणाभरणमिदं न सर्प इत्युपदेशस्यापि न नित्यनिवृत्तसर्पनिवृत्तिः फलं, किं त्वाभरणत्वज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः, सर्पभ्रमजन्यदुःखस्य वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा । न ह्युपदेशेन मणिः प्राप्तः सर्पोऽपि निवृत्त इत्यनुभवः, किं तु प्राप्तिर्ज्ञाता, भ्रमो निवृत्त इति । न च प्रकृते प्राप्तस्वरूपसुखादन्यत्प्राप्यं सुखं, नित्यनिवृत्ताविद्याभ्रमदुःखादेरन्यन्निवर्त्यं वाऽस्ति, येन सप्रयोजनता स्यादिति यदुक्तं,

(रा.) तन्न, न विस्मृतमण्युपदेशेन विलक्षणं सुखं जन्यते, तस्याननुभवात् । भ्रमव्यवहितो मणिः प्राप्त इति हि अनुभूयते । न हि चरणाभरणमिदं न सर्प इत्युपदेशेन सुखं जायते, अननुभवपराहतत्वादिति यत्,

(खं.) तत्तुच्छम्, शाङ्करीयबृहद्भाष्यादौ प्राप्तब्रह्मप्राप्तेः फलत्वनिरासात्, तन्न्यायेन प्राप्तमणिप्राप्तेः फलत्वासम्भवात्, कण्ठमण्युप-

देशस्य प्रागप्राप्तप्राप्तिज्ञानजन्यसुखं फलमित्यवश्यं वक्तव्यत्वात् । तादृशसुखानुभवाच्च । चरणाभरणमिदं न सर्प इत्युपदेशेन जायमानसुखस्य दुःखनिवृत्तेर्वा सर्वानुभवसिद्धत्वेनाननुभवपराहतत्वादित्युक्तेरयुक्तत्वात् ॥

(चं.) किंच—पूर्ववादिना फलाभावादिना तात्पर्ये आक्षिप्ते सिद्धान्तसूत्रे फलादिकं तात्पर्यं चानुपपाद्य प्रामाण्ये तात्पर्यं हेतूकर्तुमयुक्तमिति यदुदितं,

(रा.) तन्न, वह्नौ सन्दिहानं प्रति धूमोऽस्ति इति वाक्येनेव सूत्रे तात्पर्यादिति हेतूक्त्या प्रामाण्यतात्पर्यव्यापकफलतत्तात्पर्ययोः सिध्द्यनपायात् इति यत्,

(खं.) तत्तुच्छम्, फलाभावाद्ब्रह्मणि वेदान्तानां तात्पर्यं नास्ति, अतः ब्रह्मणि प्रामाण्यं न सम्भवतीति आक्षिपन्तं प्रति तात्पर्यात् ब्रह्मणि वेदान्तानां प्रामाण्यमिति वक्तुं न शक्यते इति चन्द्रिकोक्तदोषमपरिज्ञाय, प्रामाण्यतात्पर्यं भिन्नं फलतात्पर्यं भिन्नं, फलतात्पर्यं व्यवस्थापनीयं, न तु प्रामाण्ये तात्पर्यमिति चन्द्रिकोक्तमिति भ्रान्त्या प्रामाण्यतात्पर्यस्य फलतात्पर्यं व्यापकं, व्याप्यप्रामाण्यतात्पर्योक्त्या व्यापकफलतात्पर्यं उक्तं भवतीत्युक्तेः चन्द्रिकोक्तदोषपरिहारासमर्थत्वात् । वह्नौ सन्दिहानं प्रति वह्निज्ञापनार्थं वह्निभिन्नस्य वह्निव्याप्यस्यासन्दिग्धस्य बोधनसम्भवेऽपि वेदान्तानां ब्रह्मणि तात्पर्यमाक्षिपन्तं प्रति तत्तात्पर्यस्यैव हेतूकरणायोगात् ॥

(चं.) लक्षणाया अमुख्यत्वेन सौत्रसंशब्दार्थत्वायोगाच्च इति यदुक्तं,

(रा.) तन्न, 'तत् सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म इत्यादिना श्रीशाङ्करसमन्वयसूत्रसिद्धान्तभाष्योपक्रमेण वाच्ये सगु-

णेऽपि समन्वयोक्त्या 'सं' इत्युपसर्गोपपत्तेः। लक्षणया निर्विशेषसमन्वय-स्वीकारेऽपि उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गानवगामितशक्त्यपेक्षया प्रबलत्वेन 'सम्' इत्यस्य निर्विशेषपरत्वेऽप्युपपत्तेः इति यत्परेणोक्तं,

(खं.) तत्तुच्छम्, अद्वैतिमते सगुणस्य मिथ्यात्वेन तत्र वेदान्तानां समन्वयोक्तौ अतत्त्वावेदकत्वेनाप्रामाण्यप्रसङ्गात्। निर्विशेषज्ञानस्यैवाद्वैतिमते मोक्षजनकतया तज्ज्ञानार्थं तत्रैव समन्वयस्य वक्तव्यत्वेन सगुणसमन्वयस्यावक्तव्यत्वाच्च। शाङ्करभाष्ये उदाहृतानां अद्वैतिरीत्या निर्विशेषतात्पर्यकाणां सगुणेऽसम्भाव्यमानानां सत्त्वैकत्वाद्वितीयत्वादिप्रतिपादकानां "सदेव सोम्य" "तदेतद्ब्रह्मापूर्वं" इत्यादिनां सगुणे समन्वयस्यासम्भवदुक्तिकतया 'तत् सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म' इति समन्वयसूत्रोपक्रमभाष्ये उक्तत्वेऽप्ययुक्तत्वाच्च।

वाक्यानां लक्षणया शक्त्या वा क्वचित्समन्वयः उपक्रमादिना कल्प्यते, उपक्रमादिलिङ्गेन लक्षणया समन्वयापेक्षया शक्त्या समन्वयस्य मुख्यत्वेन समित्युपसर्गेण ब्रह्मणि वेदान्तानां मुख्यसमन्वयस्योक्तया लक्षणया समन्वयाङ्गीकारे सौत्रसंशब्दायुक्तताया अपरिहारात्। ब्रह्मणः सगुणत्व एव श्रुतिस्मृतिसूत्राणां तथा शङ्करभाष्यस्यापि तात्पर्यस्य विष्णुतत्वरहस्यविवरणादिग्रन्थे त्वयोक्तत्वेन त्वन्मते निर्विशेषब्रह्मणः शशविषाणायितत्वेन तत्र समन्वयकल्पनस्यायुक्तत्वाच्च॥

ॐ तत्तु समन्वयात् ॐ॥ अत्र शास्त्रयोनित्वं किमन्यस्यापि किं वा विष्णोरेवेति चिन्ता। तदर्थं वेदतात्पर्यनिश्चयः किं शैवागमादिना किं वोपक्रमादिनेति। तदर्थमुपक्रमादेर्बलाबलव्यवस्था न सम्भवत्युत सम्भवतीति। पूर्वपक्षस्तु—कारणत्वस्य शास्त्रयोनित्वेऽप्यतिव्याप्तिः, शैवाद्यागमाद्वेदव्याख्यानरूपान्मानान्तराविरुद्धात् रुद्रादेः कारणत्वे वेदतात्पर्यनिश्चयात् काव्यादिव्याख्यानादिव काव्यस्य। उक्तं ह्यागमेषु "ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इत्यादिशास्त्रं शिवस्य मोक्षदत्वादिपरमिति। नचैवं पञ्चरात्रादिना विष्णावपि तात्पर्यनिश्चयापत्तिः,

तथापि सिद्धान्त्यभिप्रेतावधारणासिद्धेः। उपक्रमादि तु न तात्पर्यनिश्चायकं, अश्वप्रतिगृहेष्ठिः उपक्रमाद्दातुः, उपसंहारात्प्रतिगृहीतुः इत्याद्यतिप्रसङ्गेन तेषामव्यवस्थिततत्वात्, किंतु सर्वज्ञप्रणीतागमा एवेति ॥ सिद्धान्तस्तु--

व्याख्यातृवचनानां यैर्लिगैस्तात्पर्यनिश्चयः ।
उपक्रमाद्यैस्तैरेव श्रुतितात्पर्यनिर्णयः ॥
आपातजप्रत्ययाश्च परस्परविरोधिनः ।
अविरुद्धा प्रतीतिस्तु पूर्वापरविमर्शजा ॥

अनिश्चिततात्पर्यस्यागमस्य शास्त्रतात्पर्यानिश्चयाकत्वादुपक्रमादिभिरागमतात्पर्यनिश्चये वेदेऽपि तैरेव लोके क्लृप्तैस्तन्निश्चयोऽस्तु । न च श्रुत्या प्रतीतार्थस्य उपक्रमादिना त्यागे श्रुतिर्बाधिता स्यादिति वाच्यं,

आपाततो भ्रमप्राप्तमर्थं हित्वा विमर्शतः ।
गहनश्रुतितात्पर्यविषयोऽन्विष्यते यतः ॥

एवं च आपातप्रतीतत्यागे पुरुषभ्रान्तिरेव त्यक्ता भवति न वेदार्थः। कुतः--

न हीक्षुलेहनेनैव ज्ञात इक्षुरसो भवेत् ।
न चेक्षुदण्डं निष्पीड्य लब्धो नेक्षुरसो भवेत् ॥

न ह्यनन्तशाखात्मकत्वात्स्वरूपेणैवापरिच्छेद्यो नानानिगमनिरुक्तव्याकरणादिना विना दुर्बोधपदार्थः नानान्यायकलापं च विना दुरधिगमवाक्यार्थश्च वेदः सुबोधार्थः । तदुक्तं वार्तिके--

अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते ।
अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥
पौर्वापर्यपरामृष्टः शब्दोऽन्यां कुरुते मतिम् ।

इति । तथा चैवं सूत्रयोजना---अन्वयादुपक्रमादिलिङ्गसमुदायात् शास्त्रे सम्यक् प्रविचारिते सति सर्वस्य शास्त्रस्य भगवत्येव सम्यग्

वचनवृत्त्या अन्वयात् शक्तितात्पर्यलक्षणसम्बधावगमात् तत् विष्ण्वाख्यं ब्रह्मैव जगज्जन्मादिकारणत्वेन शास्त्रयोनि, न तु हरहिरण्यगर्भादिरिति यदभिप्रेतं,

(रा.) तन्न, मध्वमतरीत्या सर्वव्याख्यानाधिकरण एवास्यार्थस्य कथनौचित्यात्। सङ्गतिलाभेनात्रोक्तौ पुनः सर्वव्याख्यानाधिकरणेऽस्यार्थस्य कथनेन पौनरुक्त्यादिदोषापत्तेरिति यत्परवचनम्,

(खं.) तत्तुच्छं, अधिकरणद्वयार्थाज्ञानमूलत्वात् । तथा हि— अस्मिन्नधिकरणे शास्त्रमपि रुद्रादीनां कारणत्वं प्रतिपादयतीति अतिव्याप्तिशंकायां सर्वं शास्त्रं जगत्कारणतया विष्णुमेव प्रतिपादयति, विष्णुविषयकोपक्रमादिलिंगवत्त्वादिति सामान्यरूपेण सर्वशास्त्रस्य विष्णु परत्वव्यवस्था क्रियते, आनंदमयाधिकरणमारभ्याध्यायपरिसमाप्तिपर्यंतं उदाहरणतया एकैकविषयवाक्यं स्वीकृत्योपक्रमादिवशात् तेषां तेषां वाक्यानां ब्रह्मणि समन्वयं प्रदर्श्य तस्यांतिमे "एतेन सर्वे व्याख्याताः व्याख्याताः" इत्यधिकरणे समन्विताातिरिक्तानां असदादिशब्दानां पूर्वं समन्वयज्ञापकतयोक्तन्यायातिदेशेन समन्वयोज्ञाप्यते, इत्येतयोरधिकरणयोः परस्परविलक्षणार्थकत्वेनैतदधिकरणार्थस्य तत्र कथनप्रसक्तेः पौनरुक्त्यप्रसक्तेर्वा अभाव इति ॥

॥ इति समन्वयाधिकरणं सम्पूर्णम् ॥

॥ श्रीः ॥

॥ अथ ईक्षत्यधिकरणम् ॥

## ॐ ईक्षतेर्नाशब्दम् ॐ



(चं.) अन्ये तु "सदेव सोम्येदमग्र आसीत्" इत्यादि कारणवाक्यं साङ्ख्यादिस्मृतिसिद्धाचेतनकारणानुवादीति प्राप्ते, ईक्षणेन चेतनकारणताप्रापकमिति सिद्धान्त इत्याहुः। तत्र किं विशिष्टस्य परिणामित्वमेतद्वाक्यबोध्यमिति सिद्धान्त्यते, किं वा कर्तृत्वं बोध्यमिति, यद्वा शुद्धस्य भ्रमाधिष्ठानत्वं बोध्यमिति। नाद्यद्वितीयौ, विशिष्टे 'सदेव' इत्यादिवाक्योक्तसत्त्वाद्ययोगात्। पूर्वसूत्रेऽखण्डे समन्वयस्यैव प्रतिज्ञातत्वेनात्राखण्डस्यैव वक्तव्यत्वाच्च। द्वितीये वैयधिकरण्यं च। न हि प्रधानं परिणामीति प्राप्ते ब्रह्म कर्त्रिति सिद्धान्तो युक्तः। अत एव न तृतीयः, प्रधानं परिणामीति प्राप्ते ब्रह्माधिष्ठानमित्यस्य व्यधिकरणत्वात्। कथंचिदवैयधिकरण्येऽपि "तदैक्षत, सेयं देवतैक्षत, नामरूपे व्याकरोत्" इत्यादिकमयुक्तं स्यात्, तस्य लक्षणया चिन्मात्रपरत्वे च सर्वमपि लक्षणया प्रधानपरं स्यात्। सूत्रे ईक्षतेरित्यादिहेतूक्तिश्च न स्यात्। न च तात्पर्याविषयेणेक्षणेन प्रधाननिरासः इति चन्द्रिकाग्रन्थः ॥

(पूर्वसूत्रेऽखंडे समन्वयस्यैव प्रतिज्ञातत्वेनात्राखंडस्यैव वक्तव्यत्वाच्च" इति चन्द्रिकोक्तदोषपरिहारार्थं) यदुक्तं,

(रा.) "सर्वेषां वेदान्तवाक्यानां ब्रह्मात्मैकत्वप्रतिपत्तिप्रयोजनानां ब्रह्मात्मनि तात्पर्येण समन्वितानां अन्तरेणापि कार्यानुप्रवेशं ब्रह्मणि

पर्यवसानमुक्तम्। ब्रह्म च सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणमित्युक्तम्" इतीक्षत्यधिकरणोपक्रमशाङ्करभाष्येण पूर्वाधिकरणोक्तसमन्वयस्य सर्वज्ञसर्वशक्त्याद्युपहितब्रह्मवृत्तित्वस्याप्यवगमेनोपहितस्यास्मिन्नधिकरणे परिणामित्वोक्तेः सुसङ्गतत्वादिति,

(खं.) तत्तुच्छम्, अद्वैतिमते ब्रह्मणः उपाध्युपहितत्वासंभवस्योक्तत्वात्। शाङ्करभाष्ये क्वचिदुपहितपराणि वाक्यानि क्वचिदनुपहितपराणि वाक्यानि दृश्यन्ते इत्यङ्गीकृत्यैवोपहितानुपहितोभयपरतया सूत्राणां योजनमसङ्गतमिति वक्तारं प्रति भाष्ये उपहितानुपहितपराणि वाक्यानि दृश्यन्ते इत्युक्तेरयुक्तत्वात्। उपहितस्य परिणामित्वं विशेषणस्य परिणामित्वनिमित्तं, किं वा विशेष्यस्य चैतन्यस्य। न द्वितीयः, तस्याविकारित्वात्। आद्ये तु उपाधिभूतमायाया एव परिणामित्वं न तु ब्रह्मणः इति मायापरपर्यायप्रधानपरिणामवादनिराकरणस्यासङ्गतत्वापत्तेश्च ॥

(रा.) इदमधिकरणं अचेतनस्य स्वातन्त्र्येण जगदाकारपरिणामित्वं नास्ति, किंतु अचेतनं प्रधानं न स्वतन्त्रं, तदुपहितब्रह्मैव स्वतन्त्रमित्येतत्परमिति तु,

(खं.) न वाच्यम्, अद्वैतिभिः मायाऽविद्यादिशब्दवाच्यप्रधानस्यैव परिणामित्वाङ्गीकारात्। शुद्धब्रह्मणो वा तदुपहितब्रह्मणो वा तन्नियामकत्वतदधिष्ठातृत्वादिधर्माणामनङ्गीकारात्। एतत्सूत्रेण तादृशार्थस्याप्रतिभासाच्च। उपहितब्रह्मणः नियामकत्वाद्यङ्गीकारेऽपि विशेष्यस्य शुद्धस्य नियामकत्वाद्यसम्भवात्, विशेषणे मायाद्युपाधावेव नियामकत्वादीनां वक्तव्यत्वेन ब्रह्मणः स्वातन्त्र्यासिद्धेश्च ॥

(विशिष्टे 'सदेव' इत्यादिवाक्योक्तसत्त्वाद्ययोगादिति चन्द्रिकोक्तदोषपरिहारार्थं) यदुक्तं,

(रा.) "सदेव सोम्येदमग्र आसीत्" इति श्रुत्युक्तं सत्त्वमुपहितस्यापि सम्भवति, विवरणव्याख्याने तत्त्वदीपने निर्विशेषचैतन्यं पारमा-

र्थिकसत्त्वं मायोपहितचैतन्यं व्यावहारिकसत्त्वं तूलाविद्यावच्छिन्नचैतन्यं प्रातिभासिकमित्युक्तत्वादिति.

(खं.) तत्तुच्छं, सत्त्वत्रैविध्ये प्रमाणाभावात्। मायावादिकृतस्य तत्त्वदीपनस्यान्यान् प्रति प्रमाणतयोदाहरणस्यायुक्तत्वाच्च। बाध्यत्वाविशेषात् व्यावहारिकप्रातिभासिकवैलक्षण्यकल्पनाया अयुक्तत्वात्। बाधकज्ञानभेदेन वैलक्षण्ये शुक्तिज्ञानरज्जुज्ञानरूपबाधकभेदेन रजतसर्पयोरपि वैलक्षण्यापाताच्च। "सदेव सोम्य, सत्यं ज्ञानमनन्तं" इत्यादिश्रुत्युक्तानां सत्त्वादीनां व्यावहारिकसत्त्वरूपत्वांगीकारे त्वदीयनिर्विशेषब्रह्मणोऽपि पारमार्थिकत्वं न सिध्येत्। तथा च शून्यवादापत्तेः। श्रीमच्चन्द्रिकोक्तानां बहूनां दोषान्तराणामनिवारणाच्च ॥

(चं.) अपि चात्र "सदेव" इत्यादिवाक्यसमन्वयोक्तिश्चेत् "आनन्दमयोऽभ्यासात्" इत्यादिवत् 'सदीक्षतेः' इति सूत्रं स्यात्। प्रधानस्य शाब्दत्वनिरासमात्रं चेदिदमधिकरणं तन्निरासके चतुर्थपादे स्यादिति यच्चन्द्रिकोक्तम्,

(रा.) तन्न, प्रधानवादिभिः परिनिष्ठितत्वाद्ब्रह्मणः प्रमाणान्तरगम्यतया न तत्र श्रुतितात्पर्यरूपसमन्वयः सम्भवति, किं तु श्रुतेः साङ्ख्यानुमानसिद्धप्रधानानुवादित्वमेवेति ब्रह्मसमन्वयोपरि आक्षेपे कृते तत्परिहारमुखेनास्याधिकरणस्य ब्रह्मणि श्रुतिसमन्वयदार्ढ्यार्थतया प्रवृत्तत्वात्। तदेतत्स्फुटीकृतं "साङ्ख्यादयस्तु प्रमाणान्तरगम्यमेवेति मन्यमानाः" इतीक्षत्यधिकरणशाङ्करभाष्येण। अत एवास्याधिकरणस्य समन्वयदृढीकारार्थतया समन्वयाधिकरणाव्यहितोत्तरमेव सङ्गतिः, न चतुर्थपाद इति यदुक्तं परेण,

(खं.) तत्तुच्छम्, चतुर्थपादीयाधिकरणानामपि प्रधानस्य जगत्कारणत्वबोधकशब्दप्रतिपाद्यत्वाभावसमर्थनद्वारा समन्वयदार्ढ्यार्थतया एतदधिकरणोत्तरत्वं स्यात्। अन्यथा समन्वयदार्ढ्यार्थकं ईक्षणीयत्वादि

करणमपि तत्पादे स्यात् । साक्षात्समन्वयपरत्वे 'सदीक्षतेः' इति स्यादिति चन्द्रिकोक्तदोषस्यापरिहारात् ।।

(रा.) सूत्रार्थस्तु-अनुमानादिप्रमाणान्तरसिद्धं जगत्कारणं न वेदान्तैरनूद्यते, अशब्दं हि तत्, मुख्यवृत्त्योपनिषद्गतसदादिकारणवाचिशब्दाप्रतिपाद्यत्वादिति यावत् । कुतोऽशब्दत्वं, ईक्षतेः "तदैक्षत" इति सद्रूपस्य कारणस्येक्षणश्रवणादिति यत्परोक्तं,

(खं.) तत्तुच्छम्, अद्वैत्यभिमतं जगत्कारणं ब्रह्म न वेदान्तैरनूद्यते, अशब्दं हि तत् मुख्यवृत्त्योपनिषद्गतसदादिकारणवाचिशब्दाप्रतिपाद्यत्वादिति यावत् इत्यद्वैत्यभिमतब्रह्मणोऽपि वेदान्तवेद्यत्वनिराकरणपरतया त्वदुक्तरीत्या योजयितुं शक्यत्वात् । उपहितब्रह्मणः कारणत्वांगीकारे मुख्यवृत्त्या त्रिकालाबाध्यत्वाद्यर्थकसदादिशब्दाप्रतिपाद्यत्वहेतुस्तत्र सिद्धः। निर्विशेषब्रह्मणः कारणत्वांगीकारेऽपि तस्यावाच्यत्वात् कारणवाचिसदादिशब्दाप्रतिपाद्यत्वं हेतुः सिद्ध एव न च लक्षणया सदादिशब्दप्रतिपाद्यत्वाद्धेतुरसिद्ध इति वाच्यं, प्रधानस्यापि लक्षणया सदादिशब्दप्रतिपाद्यत्वेन कारणवाचिसदादिशब्दाप्रतिपाद्यत्वादिति हेतुः प्रधानेऽप्यसिद्ध एव। ईक्षणकर्तृत्वरूपहेतुना प्रधानस्याशब्दत्वसाधनं निर्विशेषब्रह्मणोऽपि समानं, ईक्षणरूपस्य तस्येक्षणकर्तृत्वायोगात् । गौणमीक्षणकर्तृत्वं प्रधानेऽपि समं इत्युपहितब्रह्मण्यऽपि ईक्षणकर्तृत्वस्य सत्यभूतस्याभावात् आरोपितमेवांगीकरणीयम् । प्रधानेऽपि तदारोपितमीक्षणकर्तृत्वमस्तीति ईक्षणकर्तृत्वेनाशब्दत्वसाधनं उपहितब्रह्मणोऽपि समानमेव। प्रधानोपहितब्रह्मणोः ईक्षणकर्तृत्वस्यारोपसाम्ये प्रधाने प्रातिभासिकं उपहितब्रह्मणि व्यावहारिकमित्यद्वैतिमनीषोत्थभेदस्य साध्यसाधनेऽप्रयोजकत्वात् ।अस्मदुक्तरीत्याऽध्याहारं विना सूत्रार्थसंभवे बह्वध्याहारेण सूत्रार्थवर्णनस्यायुक्तत्वात् ।।

(रा.) यत्तु आनुमानिकप्रधानानुवादिनो वेदान्ता न ब्रह्मणि तात्पर्यलक्षणसमन्वयमर्हन्तीति पूर्वपक्षिणः साङ्ख्यस्य प्रत्यवस्थानेन

तन्निरासार्थेक्षतिसूत्रस्योक्ताध्याहारं विना पूर्वपक्ष्यभिप्रायनिवारकत्वासम्भवात्, 'अशब्दं' इत्यस्य तादृशसाध्यानुगुणहेत्वाभिधायित्वेन प्रथमांतस्यापि हेतुपरत्वाश्रयणात्, उक्तहेतोः स्वरूपासिद्धिवारणार्थं सूत्रे ईक्षतेरिति निर्देशः। "देवात्मशक्ति स्वगुणैर्निरूढां" इति श्रुत्या सत्त्वादिगुणत्रयरूपमायायाः शक्तित्वं प्रतिपाद्यते। शक्तिश्च शक्तिमत्परतन्त्रेति शक्तेरस्वातन्त्र्यम्। साङ्ख्यानुमानेन तु प्रधानस्य स्वातन्त्र्यं तैरङ्गीकृतम्। तच्च स्वतन्त्रं प्रधानं न श्रुतिभिः मुख्यवृत्त्या प्रतिपाद्यते इति सुष्ठूक्तं अशब्दत्वं शाङ्करभाष्यइति,

(खं.) तत्तुच्छम्, अस्य सूत्रस्य त्वदुक्तरीत्या साङ्ख्यस्यैव पूर्वपक्षित्वमित्यत्र ज्ञापकाभावेन तस्य पूर्वपक्षित्वमारोप्य तत्पूर्वपक्ष्यभिप्राय निराकरणार्थं बह्वध्याहारस्यान्याय्यत्वात्। एवं रीत्या सूत्रार्थवर्णनस्याद्वैत्यभिमतब्रह्मणि जगत्कारणत्वनिषेधपर्यवसायितया त्वन्प्रतिकूलत्वाच्च सुत्रे साध्यस्यैवानुक्तत्वेन अशब्दमित्यस्य तादृशसाध्यानुगुणहेत्वभिधायित्वोक्तेरसंगतत्वेन हेतुपरत्वाश्रयणस्यान्याय्यत्वात्। त्वदुक्ताशब्दत्वस्य वेदान्ताप्रतिपाद्यत्वरूपसाध्यं प्रति अप्रयोजकत्वात्। सदादिकारणवाचिशब्दाप्रतिपाद्यत्वेऽपि उपनिषद्गतेतरशब्देन प्रतिपाद्यत्वसम्भवेन वेदान्तप्रतिपाद्यत्वसम्भवात्। कल्पितस्येक्षणकर्तृत्वस्य प्रधानेऽपि सम्भवेनेक्षणकर्तृत्वस्य प्रधानेऽशब्दत्वासाधकत्वात्। सत्यस्यच तत्योपहितानुपहितब्रह्मणोरभावेन तयोरप्यशब्दत्वप्राप्त्या वेदान्ताप्रतिपाद्यत्वप्राप्तेः। ईक्षतेरिति हेतुनिर्देशस्त्वद्वैतिमते न युक्तः। एतत्सूत्रे "देवात्मशक्ति" इति श्रुतिसूचनद्वारा वा साक्षाद्वा प्रधानस्यास्वातन्त्र्यं नोक्तमिति तथा वर्णने उत्सूत्रितत्वप्राप्तेः त्वद्भाष्यकारीयं प्रधानस्य वेदान्तप्रतिपाद्यत्वाभावसाधकतया ईक्षतेरित्यस्य वर्णनं च स्वव्याघातकरमिति ॥

(चं.) किंचाशब्दत्वं अवाच्यत्वं वा शब्दमात्राविषयत्वं वा वेदासिद्धत्वं वा। कारणत्वेन वेदासिद्धत्वं वा। चतुष्टयमपि ब्रह्मण एव, त्वन्मते शास्त्रप्रतिपाद्यस्य शुद्धस्यावाच्यत्वात्,

अवाच्ये च वृत्त्यन्तरायोगात्। न तु प्रधानस्य, सांख्यमते तस्य वाच्यत्वात्। कारणत्वेनैव "अजां" इत्यादि श्रुतिसिद्धत्वाच्च। त्वयापि त्रिगुणस्योपादानतया "मायां तु प्रकृतिं" इत्यादिश्रुतिसिद्धत्वांगीकाराच्च। त्रिगुणस्य पारमार्थिकत्वादावेव हि तव विवाद इति चन्द्रिकोपरि,

(रा.) यत्तूक्तं 'तत्र तत्र किंचिद्भेदकल्पनेनोपहितं शुद्धमिति द्र ब्रह्मणी प्रतिपादिते। तत्रोपहित इव शुद्धेऽपि "तत्त्वमसि" इति श्रुतिगततत्पदवाच्यत्वमिष्टमेव। "गौरनित्या" इत्यादावनित्यत्वरूपविशेषणान्वयानुपपत्त्या गोत्वरूपविशेषणत्यागेन गोशब्दस्य विशेष्यीभूतव्यक्तिपरत्वेऽपि शक्तत्वव्यपदेशवत् सर्वज्ञत्वादिविशेषणप्रहाणेन विशेष्यचैतन्यमात्रपरस्य सद्ब्रह्मतदादिशब्दस्यापि शक्तत्वसम्भवात्। 'गौर्नित्या' इत्यादौ नित्यत्वरूपविशेषणान्वयानुरोधेन गोशब्दस्य जातिपरत्वात् विशेष्यप्रहाणाच्च लक्षणा। न च तर्हि निर्विशेषे ब्रह्मणि ब्रह्मादिपदानां लक्षणोक्तिः प्राचीनानां कथं संगच्छत इति शङ्क्यं विशेषणीभूतसार्वज्ञाद्यंशप्रहाणेन लक्षणोक्तिरौपचारिकीति बिन्दुटीकायां गौडब्रह्मानन्दस्वामिभिरुक्तत्वादिति,

(खं.) तत्तुच्छम्, अद्वैतिमते ब्रह्मणः उपहितत्वासम्भवस्य उपहितत्वाङ्गीकारेऽपि तस्मिन्सदादिशब्दवाच्यत्वाभावस्याद्वैतिभिः शुद्धब्रह्मणः अवाच्यत्वांगीकारेण वाच्यत्वोक्तेरपसिद्धान्तकरत्वस्य विष्णुतत्त्वरहस्यविवरणादौ त्वया "न च तत्त्वमसि" इति वाक्यमेव विशेषणांशत्यागेन विशेष्यैक्ये प्रमाणमिति शङ्क्यं, तत्त्वंपदयोर्द्वयोर्विशेष्यलक्षणापत्तेः" इत्यादिना विशेषणांशत्यागेन विशेष्यमात्रबोधने लक्षणाया आवश्यकत्वाङ्गीकारेण विशेष्यांशस्य वाच्यत्वोक्तेः स्वोक्तिविरुद्धत्वस्य च तस्मिन्नेव ग्रन्थे ब्रह्मणः सगुणत्वस्वीकारेणोपहितशुद्धभेदकल्पनायाः स्वोक्तिविरुद्धत्वस्य च 'गौरनित्या' इत्यादौ लक्षणानावश्यकत्वस्य च जिज्ञासा-

धिकरणादावुक्तत्वात् । मधुसूदनगौडब्रह्मानन्दादिभिरद्वैतसिद्धिब्रह्मानन्दीयग्रन्थे,

ब्रह्मण्यवाच्ये यो विद्वान् वाच्यतामधिगच्छति ।
स निस्त्रपो निमित्तानां विरहैः प्रतिबोध्यताम् ॥

इत्यादिग्रन्थेन स्पष्टं ब्रह्मणोवाच्यत्वनिषेधेन विशेषणीभूतसार्वज्ञ्याद्यंश प्रहाणेन लक्षणोक्तिरौपचारिकीति कल्पनायाः स्वव्याहतिकरत्वात् ।

(रा.) यद्यपि जगत्कारणत्वाद्युपलक्षितनिर्विशेषब्रह्मज्ञानादेवाज्ञाननिवृत्तिः । तथापि उपलक्ष्यज्ञानस्योपलक्षणधर्मविशिष्टब्रह्मज्ञानं विना असम्भवात् उपहितज्ञानस्याऽऽवश्यकत्वात् उपहितज्ञानस्य मोक्षप्रयोजकत्वात् उपहितब्रह्मणि जगत्कारणत्वलक्षणप्रमाणशास्त्रसमन्वयानामवश्यवक्तव्यतयाऽस्मद्भगवत्पादीयचतुःसूत्रीभाष्ये उपहितेऽपि ते प्रतिपादिताः । अतः शुद्धज्ञानस्य मोचकत्वं, उपहितज्ञानस्य शुद्धज्ञाननिष्पादकतया मोक्षप्रयोजकत्वं, अविद्यादेस्तु मोक्षप्रोजकज्ञानविशेष्यत्वाभावान्मोक्षाप्रयोजकत्वं अतएव "गौणश्चेन्नात्मशब्दात्" इत्यात्मशब्दः उपहितात्मपरः, "तन्निष्ठस्य" इति सूत्रे तत्पदमीक्षितृत्वविशिष्टब्रह्मपरं, उपहितब्रह्मनिष्ठाया अपि ब्रह्मप्राप्तिप्रयोजकत्वात् इति यत्परेणोक्तम्

(खं.) तत्तुच्छं, त्वन्मते शुद्धब्रह्मज्ञानस्यैव मोक्षसाधनत्वेन तादृशज्ञाने जगत्कारणत्वादीनामुपलक्षकाणामविषयत्वात्, उपलक्षकपदार्थज्ञानस्यानावश्यकत्वात् । जगत्कारणत्वादिविशिष्टब्रह्मज्ञानस्य तु सुतरामनावश्यकत्वात् । जगत्कारणत्वादिविशिष्टब्रह्मणि वेदांतसमन्वयस्यासंगतत्वात् । यथा कथंचित् विशिष्टज्ञानस्य मोक्षप्रयोजकत्वेन तस्मिन्स्समन्वयस्यावश्यकत्वे प्रधानस्य ज्ञानमपि मोक्षप्रयोजकमिति तत्रापि वेदान्तानां समन्वयस्य वक्तव्यत्वापत्तेः । न चोपहितस्य मोक्षप्रयोजकज्ञानविशेष्यत्वं, न तु प्रधानादेरिति वाच्यं, प्रधानं मिथ्याब्रह्माधीनं ब्रह्मव्यतिरेकेणासत् इत्यादिज्ञानस्य त्वन्मते मोक्षप्रयोजकतया

प्रधाने मोक्षप्रयोजकज्ञानविशेष्यत्वस्यापि सम्भवात्। समन्वयकरणं प्रति तादृशज्ञानविशेष्यत्वस्याप्रयोजकत्वाच्च। उपहितात्मनिष्ठस्येव प्रधाननिष्ठस्यापि परम्परया मोक्षसम्भवेन "तन्निष्ठस्य मोक्षोपदेशात्" इति सूत्रेण प्रधानस्य वारणासम्भवाच्च।

"–'तत्त्वमसि श्वेतकेतो' इति चेतनस्य मोक्षयितव्यस्य श्वेतकेतोः तन्निष्ठामुपदिश्य "तावदेव चिरं" इति मोक्षोपदेशात्" इति शाङ्करभाष्ये सूत्रस्यतच्छब्देन "तत्त्वमसि" इति श्रुतिघटकतच्छब्दार्थस्य ग्रहणात् तस्य च शुद्धपरत्वस्याद्वैतिभिरङ्गीकारेण तत्पदमोक्षितृत्वविशिष्टपरमित्यस्य तद्भाष्यविरुद्धत्वाच्चेति चन्द्रिकोक्तदोषाणां मध्ये एकस्याप्यपरिहारात्॥

॥ इति अद्वैतिमते ईक्षत्यधिकरणमयुक्तम् ॥

ॐ ईक्षतेर्नाशब्दम् ॐ। अत्र ब्रह्मणि समन्वयो न युक्तो युक्तो वेति चिन्ता। तदर्थं शुद्धं ब्रह्मावाच्यं वाच्यं वेति। तदर्थमवाच्यत्व श्रुतिः वाच्यत्वाभावाभिप्रायोत साकल्येनाप्रसिद्धत्वाभिप्रायेति। तदर्थं वाच्यत्वाभावाभिप्रायत्वे बाधकं नास्त्युतास्तीति। तदर्थं शुद्धं ब्रह्मानीक्षणीयमुतेक्षणीयमिति तदर्थं "तमेवैकं जानथ आत्मानं, आत्मन्येवात्मानं पश्येत्" इत्यादावीक्षणीयत्वेन श्रुत आत्मा सगुणो निर्गुणो वेति। तदर्थं आत्मशब्दः किं गौणात्मनि मुख्यः किं वा निर्गुण एवेति। तदर्थं "यस्यानुवित्तः" इत्यादि श्रुत्युक्तमात्मनिष्ठस्य मोक्षोपदेशादिकं गौणात्मनि युक्तमुत नेति। पूर्वपक्षस्तु–न समन्वयो युक्तः, तस्य "यतो वाचः" इत्यादिश्रुत्याआवाच्यत्वावगमात् इति। सिद्धान्तस्तु– "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इत्यादिश्रुतिभिः ईक्षणीयत्वस्य ब्रह्मणि प्रतिपादितत्वेन तस्य च वाच्यत्वं विनाऽनुपपत्तेर्वाच्यमेव ब्रह्मातस्तत्र समन्वयो युक्त एवेति। विशेषस्त्वाकरे द्रष्टव्यः इति चन्द्रिकासम्मताधिकरणोपरि,

(रा.) तन्न, अवाच्यमिति पूर्वपक्षे वाच्यत्वसाधकश्रुतेरेव सिद्धांत-

हेतुतयोपन्यसनीयत्वेन ईक्षतेः हेतुत्वेनोपन्यसनस्य, तस्य हेतुत्वप्रसाधनस्य च शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादिति यदुक्तम्,

(खं.) तत्तुच्छम्, "यद्यपि वाच्यत्वे श्रुतिरस्ति" इत्यादिना त्वदुक्तमाशंक्य "तथापि" इत्यादिना अवाच्यत्वेऽपि श्रुतेः सद्भावात् वाच्यत्वश्रुतिर्विशिष्टविषया न तु शुद्धविषयेति शङ्कोदयाच्च न श्रुत्यादि-मात्रेण वाच्यत्वनिश्चय इति सूत्रे प्रसिद्धश्रुत्यनुग्राहकन्याय एवोक्त इति समाहितत्वात् ॥

इत्यद्वैतखण्डनपूर्वकचन्द्रिकामण्डने

ईक्षत्यधिकरणम् ॥

॥ श्रीहरये नमः ॥

--श्री दिग्विजयरामो विजयते--

# अद्वैतखंडनपूर्वक चन्द्रिकामंडने आनन्दमयाधिकरणम्



## ॐ आनंदमयोऽभ्यासात् ॐ

(रा.) 'ब्रह्म पुच्छं' इत्यत्र श्रुतं ब्रह्म स्वप्रधानं, नानंदमयावयवत्वेनाप्रधानं ब्रह्म, मुख्यानंदपदस्याभ्यासात्।

असन्नेव स भवति, असद्ब्रह्मेति वेदचेत्।
अस्ति ब्रह्मेति चेद्वेद, संतमेनं ततो विदुः॥

इति ब्रह्मशब्दाभ्यासाच्च। न चात्र पुच्छशब्दः अवयवरूपविकारपरो ब्रह्मणः प्राधान्यं निरुणद्धि, आनंदमयस्यान्नमयादिविकारप्रायपाठात् विकाररूपतया तन्निरूपितावयवत्वस्य सर्वप्रतिष्ठाभूते ब्रह्मण्यसंभवेन पुच्छपदेन प्रतिष्ठापदलभ्यस्यानंदमयजगत्स्थितिहेतुरूपार्थस्य दार्ढ्यार्थमनुवादात्। 'पुच्छेनैव वयांसि वासोवृक्षं प्रतितिष्ठंति' इति तैत्तिरीयश्रुतौ पुच्छ पदस्य स्थितिहेत्वर्थता स्पष्टं प्रतीयत इति यदुक्तं,

(खं.) तत्तुच्छं, यद्यपि 'आनंदमयोऽभ्यासात्' इत्यादिसूत्रैः आनंदमयस्यैव स्वरसतः ब्रह्मत्वं ज्ञायते, न तु पुच्छस्य। तथापि 'वेदसूत्रयोर्विरोधे गुणे त्वन्यायकल्पनेति सूत्राण्यन्यथा नेयानि' इति भामत्यां भाष्याद्यद्वैतग्रन्थेषु च सूत्राणां प्रतीतमुख्यार्थं परित्यज्य लक्षणादिना अमुख्यार्थत्ववर्णनस्य तैरेवांगीकृतत्वेन सूत्रस्य कदर्थीकृतत्वप्राप्त्या,

सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यंते भाष्यं भाष्यविदो विदुः॥

इत्यत्रोक्तभाष्यलक्षणाभावेन शांकरव्याख्याने सूत्रभाष्यत्वस्यैवानुपपत्तेः। पूर्वोदाहृतानां श्लोकानां अन्नमयादिविषयत्वेन,

असन्नेव स भवति असद्ब्रह्मेति वेद चेत्।

इत्यादि श्लोकस्यापि आनंदमयविषयतायाः आवश्यकत्वेन पुच्छे ब्रह्म-शब्दाभ्यासस्याभावात्। एकस्मिन् वस्तुनि आनंदशब्दाभ्यासस्यैतत्प्रकरणे अभावाच्च ॥

(चं.) अन्ये तु, प्रथमे स्पष्टब्रह्मलिंगान्युदाहरणानि द्वितीय-तृतीययोस्त्वस्पष्टब्रह्मलिंगानि, तयोस्तु सविशेषनिर्विशेषविषय-तया भेदः, चतुर्थे प्रधानस्याशब्दत्वोक्तिरिति पादार्थानाहुः। तन्न, यथा प्रथमे 'अन्तस्तद्धर्मोपदेशात्' इत्यादौ 'सैवर्क्साम तदुक्थं तद्यजुः' इति सर्वात्मकत्वस्य, 'सर्वेभ्यः पाप्मभ्य उदितः' इति सर्वपापराहित्यस्य च ब्रह्मलिंगस्य स्पष्टता, तथा द्वितीये 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र 'सर्वं खल्विदं ब्रह्म' इति जीवेष्व-युक्तस्य सार्वात्म्यादेः 'अत्ता चराचर' इत्यत्र 'अन्यत्र धर्मादन्य-त्राधमात्' इति पुण्यपापरहित्यादेः 'अन्तरः' इत्यत्र 'एतदमृतम-भयमेतद्ब्रह्म' इत्यमृतत्वादेः, 'अंतर्यामी' इत्यत्र 'एव त आत्मां-तर्याम्यमृतः' इत्यमृतत्वादेः 'अदृश्यत्वादिगुणकः' इत्यादौ 'यः सर्वज्ञः' इति सार्वज्ञ्यादेर्ब्रह्मलिंगस्य स्पष्टत्वात्। एवं तृतीये 'द्युभ्वादि' इत्यत्र 'अमृतस्येष सेतुः, यः सर्वज्ञः' इत्यमृतसेतुत्वा-सार्वज्ञ्यादेः 'भूमा' इत्यत्र 'यत्र नान्यत्पश्यति' इत्यद्वितीयत्वादेः, 'भूमा' इत्यत्र 'यत्र नान्यत्पश्यति' इत्यद्वितीयत्वादेः, 'अक्षरमंबर' इत्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोत्रस्थूलमनणुत्वादेः, 'ईक्षतिकर्म' इत्यादौ 'परात्परं' इति परात्परत्वादेब्रह्मलिंगस्य स्पष्टत्वाच्च। वाक्यांतरे ब्रह्मधर्मतया निर्णीतत्वं वा जीवादौ स्वारस्येनानुपप-

द्यमानत्वं वा स्पष्टत्वं न त्वस्सायारस्येनापि जीवादावनुपपद्यमानत्वं, विषयवाक्ये ब्रह्मधर्मतया निर्णीतत्वं वा जीवादिप्रापकलिंगराहित्यं वा पूर्वपक्षानुदयापातात्। तच्च 'सर्वं खल्विदं' इत्यादावस्ति। न च 'सर्वत्र प्रसिद्ध' इत्यादेः 'मनोमयः प्राणशरीरो भारूपः' इत्यादिकमुदाहरणं; तत्र च न ब्रह्मलिंग स्पष्टं किंतु 'सर्वं खल्विद' इत्युपक्रम इति वाच्यं, प्रथमेपि 'अंतः' इत्यस्योदाहरणे 'य एषोंतः' इत्यत्र सार्वात्म्यस्य, 'ज्योतिश्चरण' इत्यस्योदाहरणे 'यदतः परो दिवो ज्योतिः' इत्यत्रामृतत्वादेः, 'प्राणस्तथा' इत्यस्योदाहरणे 'प्राणोस्मि प्रज्ञात्मा' इत्यत्र हिततमत्वादेर्ब्रह्मलिंगस्याभावात्। द्वितीयादावपि 'य एषोंतरक्षिणि पुरुषो दृश्यते, एतदमृतमभयमेतद्ब्रह्म, एष त आत्मांतर्याम्यमृतः' इत्याद्युदाहरणवाक्य एवामृतत्वादेः स्पष्टत्वाच्च। यथा च द्वितीये तृतीये च समन्वेतव्यं मनोमयत्वादिकं न ब्रह्मणि स्पष्टं तथा प्रथमे समन्वेतव्यमादित्यस्थत्वाकाशप्राणशब्दादिकं न ब्रह्मणि स्पष्टमिति चन्द्रिकाग्रन्थः तदुपरि,

(रा.) तत्र, ब्रह्मलिंगस्य यत् स्पष्टत्वं तस्य भाष्यभामत्यादिरीत्या जडजीवमात्रधर्मतया झटिति प्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मसमभिव्याहृतत्वरूपत्वात्, भवदुदाहृतद्वितीयपादीयसार्वात्म्यादिधर्मस्य जीवधर्मतया झटिति प्रतीयमानमनउपकरणकत्वरूपमनोमयत्वादिलक्षणधर्मसमभिव्याहृतत्वेन स्पष्टब्रह्मलिंगत्वाभावेन पादार्थसांकर्यप्रसक्तेः। प्रथमपादीयांतस्तद्धर्माधिकरणादिस्थितापहृतपाप्मत्वादि ब्रह्मलिंगस्य 'हिरण्मयः पुरुषो दृश्यते' इत्यादिनोक्तेन जीवेश्वरोभयवृत्तितया झटिति प्रतीयमानेन शरीरनखवत्वादिना समभिव्याहृतत्वेऽपि जीवमात्रधर्मतया झटिति प्रतीयमानधर्मसमभिव्याहृतत्वाभावेन स्पष्टब्रह्मलिंगत्वाक्षतेरिति यदुक्तं,

(खं.) तत्तुच्छं, जीवेश्वरोभयवृत्तितया त्वदंगीकृतानां शरीरनखवत्वादीनामिव तदविनाभूतमनोमयत्वादिधर्माणामपि जीवेश्वरोभयवृत्तितायाः त्वयाऽवश्यमंगीकरणीयत्वेन जडजीवमात्रधर्मत्वासिद्धया भयदुदाहृतद्वितीयपादीयसार्वात्म्यादिधर्मस्य जडजीवमात्रधर्मतया झटिति प्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वेन त्वदीयपरिष्काररीत्याऽपि स्पष्टब्रह्मलिंगत्वानपायेन पादार्थसांकर्यस्यापरिहारात् । अन्यथा शरीरनखवत्वादीनामपि जडजीवमात्रधर्मत्वापत्त्या अंतस्तद्धर्माधिकरणस्थितापहतपाप्मत्वादिब्रह्मलिंगस्य स्पष्टब्रह्मलिंगत्वाभावापत्तेः । एवं द्वितीयपादीयात्तृत्वाद्यधिकरणोदाहृतविषयवाक्यस्थानां पुण्यपापराहित्यादीनामपि जडजीवमात्रधर्मतया झटिति प्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वेन स्पष्टब्रह्मलिंगत्वप्राप्त्या श्रीमच्चंद्रिकाकारोक्तपादसांकर्यापरिहारात् ॥

(चं.) यच्च द्वितीये सविशेषं तृतीये निर्विशेषमित्युक्तं, तदपि 'सर्वत्र' इत्यत्र 'सर्वं खल्विदं ब्रह्म' इत्यविद्यादिसर्वभ्रमाधिष्ठानत्वादिरूपसार्वात्म्यादेः, 'अत्ता' इत्यत्र 'अन्यत्र भूताच्च भव्याच्च, महतो महीयान्' इति कालत्रयातीतत्वादेः, 'अंतर' इत्यत्र 'कं ब्रह्म खं ब्रह्म' इति पूर्णसुखत्वादेः 'अंतर्यामि' इत्यत्र 'एष त आत्मा' इति जीवतादात्म्यादेः, 'अदृश्यत्वादि' इत्यादौ च 'यतदद्रेश्यं' इत्यदृश्यत्वादेस्सविशेषेनुपपत्तेः । तृतीयेऽऽपि 'द्युभ्वादि' इत्यत्र 'तमेवैकं जानथ, यदा पश्यः पश्यते रुक्मवर्णं' इति दृश्यत्वरूपित्वादेः, 'भूमा' इत्यत्र 'एवं पश्यन्' इति सप्रकारकज्ञानविषयत्वादेः, 'अक्षरं' इत्यत्र 'अदृष्टं द्रष्टृश्रुतं श्रोतृ' इति द्रष्टृत्वादेः, 'ईक्षतिकर्म' इत्यत्र 'पुरुषमीक्षते' इति दृश्यत्वादेः, 'दहरः' इत्यादौ 'सत्यकामः' सत्यसंकल्पः इति कामादेर्निर्विशेषेऽनुपपत्तेश्च । यदि च चिन्मात्रस्यैव निर्विशेषत्वेन भ्रमाधिष्ठानत्वादिविशिष्टस्य सविशेषत्वं, तर्हि द्युभ्वाद्यायत-

नत्वविशिष्टमपि सविशेषमेव स्यात् । 'यस्मिन् द्यौः' इत्यादेश्च लक्षणया चिन्मात्रपरत्वे, 'सर्वं खल्विदं ब्रह्म' इत्यादेरपि प्रामाण्याय तन्मात्रपरत्वं स्यात् । सविशेषे वस्तुतो निर्विशेषे चारोपितविशेषस्याविरोधेऽप्युभयत्राप्युभयोक्तौ वाक्यव्यवस्थायोगेन तन्निबंधनपादव्यवस्था न युक्ता। एतेन प्राथिकत्वात्पादव्यवस्थेतिनिरस्तं, सर्वसांकर्यस्योक्तत्वादिति ग्रन्थोपरि,

(रा.) सविशेषब्रह्मनिष्ठत्वस्य विवक्षितधर्मकब्रह्मप्रतिपादकवाक्यविचारत्वरूपत्वात्, निर्विशेषनिष्ठत्वस्या विवक्षितधर्मकब्रह्मवाक्यविचारत्वरूपत्वात् । द्वितीयपादीयसर्वप्रपंचभ्रमाधिष्ठानत्वरूपसार्वात्म्यादेरूपास्यतया विवक्षितत्वात् सविशेषनिष्ठत्वाविघातात्, तृतीयपादविचारितधर्माणां ज्ञेयब्रह्मोपलक्षकतया तेषु विवक्षितत्वाभावात् निर्विशेषनिष्ठत्वाविघातादिति यदुक्तं,

(खं) तत्तुच्छं, सविशेषब्रह्मनिष्ठत्वपदेन विवक्षितधर्मकब्रह्मप्रतिपादकवाक्यविचारत्वरूपार्थस्य, निर्विशेषनिष्ठत्वपदेन अविवक्षितधर्मकब्रह्मवाक्यविचारत्वरूपार्थस्याप्रतीतेः ताभ्यां पदाभ्यां प्रतीयमानार्थोपरि चंद्रिकोक्तदोषस्यापरिहारात् । सविशेषब्रह्मनिष्ठत्वपदाभ्यां स्वरसतः तादृशार्थाप्रतीतावपि लक्षणादिना तादृशार्थपरत्वं अभिप्रेतमिति चेत् तथापि पादभेदाव्यवस्थितेः । तथा हि—ब्रह्मणि धर्माणां केन विवक्षितत्वं अविवक्षितत्वं वा अभिप्रेतं भवता । न तावन्मयेति वक्तुं शक्यं भवता, भवद्विवक्षाविवक्षयोः पादभेदाप्रयोजकत्वात् । सूत्रकृता वा श्रुत्या वा विवक्षितत्वं अविवक्षितत्वमिति वक्तव्यं । तदपि पादभेदव्यवस्थापकं न भवति, द्वितीयपादीयविषयवाक्यप्रतिपाद्यसार्वात्म्यादेः उपास्यतया विवक्षितत्ववत्, तृतीयपादीयविषयवाक्यप्रतिपाद्यानां द्युभ्वाद्यायतनत्वादीनां निर्विशेषज्ञानार्थविवक्षायाः आवश्यकत्वात् । अन्यथा 'यस्मिन्द्यौः' इत्यादिश्रुतिषु 'द्युभ्वाद्यायतनं स्वशब्दात्' इत्यादिसूत्रेषु च द्युभ्वाद्यायतनत्वादिधर्माणां कथनमेव न स्यात् । शांकरभाष्ये तृतीयपादीयप्रथमा-

धिकरणे विधारणत्वमात्रमेव सेतुश्रुत्या विवक्ष्यते, न पारवत्त्वादि' इति स्पष्टं विधारणवत्त्वस्य विवक्षितत्वोक्तेः अविवक्षितधर्मकब्रह्मप्रतिपादक-वाक्यविचारत्वाभावेन चंद्रिकोक्ता पादाव्यवस्थितिः दुर्वारा। उपलक्ष्ये अद्वैत्यभिमते ब्रह्मणि विशेषाभावेनोपलक्षणज्ञानदशायामेव ब्रह्मणोऽज्ञातत्वेन उपलक्षणोक्तेर्वैयर्थ्यात्। एकेनोपलक्षणेनोपलक्ष्यज्ञानसिद्धेरनेकधर्माणा-मुपलक्षणत्वोक्त्ययोगाच्च। न च येन पुरुषेणैकेनोपलक्षणेनोपलक्ष्यं न ज्ञातं तं प्रति विशदप्रतीत्यर्थं अनेकोपलक्षणकथनमावश्यकमिति वाच्यं अद्वैतिमते ब्रह्मणः निर्विशेषत्वेन निरंशत्वेन च प्रतीतौ यत्किंचिदंशविषय-कत्व-यत्किंचिद्धर्मविषयकत्वरूपाविशदत्वस्य सर्वांशविषयकत्व–सर्वधर्म विषयकत्वरूपविशदत्वस्य चायोगात्॥

(रा.) यद्यपि द्वितीये अत्त्राधिकरणं निर्विशेषनिष्ठं, तृतीये दहराधिकरणं सविशेषनिष्ठं, तथापि प्रायेण द्वितीयतृतीयपादयोः सविशेषनिर्विशेषनिष्ठत्वान्न पादसांकर्यं, मध्वभाष्येऽपि 'प्रायिकत्वाच्च अध्यायानां पादानां' इत्यनेन ग्रंथेन प्रायिकत्वाभिप्रायेणैवाध्यायपादार्थौ वर्णिताविति यदुक्तम्,

(खं.) तत्तुच्छं, अत्त्राधिकरणोक्तात्तृत्वादिधर्माणां निर्विशेषेऽसंभवेन तस्याधिकरणस्य निर्विशेषनिष्ठत्वोक्तेरयोगात्। अत्तृत्वादीनामविवक्षितत्वाभिप्रायेण निर्विशेषत्वनिष्ठत्वोक्तौ दहराधिकरणोक्तानामपि धर्माणां अविवक्षितत्वाविशेषेण दहराधिकरणस्यापि निर्विशेष-निष्ठत्वापत्तेः। सर्वत्राधिकरणीयसार्वात्म्यादेः अत्तृत्वाधिकरणीयात् अन्यत्र भूताच्च भव्याच्च' इत्युक्तकालत्रयातीतत्वादितो विशेषाभावेन तयोः सविशेषनिष्ठत्व-निर्विशेषनिष्ठत्वोक्तेरसंगतत्वाच्च। चंद्रिकायां बहुसांकर्यस्य वर्णितत्वेन प्रायिकत्वाभिप्रायेणापि पादभेदकथना-संभवाच्च॥

(चं.) यद्योक्तं परैः, प्रधानाद्येव कारणतया सर्ववेदांतार्थ इति लक्षणासंभवाशंकायास्त्रिपाद्यां निरासः, चतुर्थपादे तु प्रधान-

मपि कारणतया वेदांतैकदेशार्थ इत्यतिव्याप्तिशंकायाः। अत एव 'आनुमानिकमप्येकेषां' इति सूत्रेऽपिशब्द एकशब्दश्चेति, तन्न, 'आनुमानिकं' इत्यादौ पूर्वपक्षिणा यस्य 'महतः परमव्यक्तं, अजामेकां' इत्यादेः प्रधानपरत्वं शंकितं तस्यैकदेशस्य सिद्धांतेपि ब्रह्मपरत्वाभावात्। अविद्यादिपरत्वे च ब्रह्मलक्षणस्य प्रधानेतिव्याप्तावप्यविद्यायामतिव्याप्त्यपरिहारात्। तस्मान्न परमते पादभेदो युक्त इति ग्रन्थः एतदुपरि,

(रा.) तन्न, ईक्षादिघटितकर्तृत्वसमाधिकरणोपादानत्वस्याभिन्ननिमित्तोपादानशब्दितस्य ब्रह्मलक्षणस्य अस्मद्भगवत्पादाभिमतस्य जडरूपाविद्यायामप्रसक्तत्वेनातिव्याप्तेरभावात् इति यदुक्तम्,

(खं.) तत्तुच्छं, उपादानत्वं हि तत्तपदार्थरूपेण परिणाममानत्वं,। तच्च निर्विकारे निर्विशेषे ब्रह्मणि न संभवतीति उपादानत्वस्यैव निर्विशेषब्रह्मलक्षणत्वासंभवात्, कर्तृत्वसमानाधिकरणोपादानत्वस्य तु सुतरां ब्रह्मलक्षणत्वासंभवात्। न च मायाविशिष्टब्रह्मणः परिणामितया उपादानतारूपं लक्षणं संभवतीति वाच्यं, विशेषणोभयान्वयित एव विशिष्टान्वयितया वशेष्ये शुद्धे ब्रह्मणि अनन्वयिनः उपादानत्वस्य विशिष्टेऽयोगात्। न च तद्रूपेण परिणममानत्वं नोपादानत्वं, किंतु तत्तदात्मना प्रतिभासमानत्वं, तच्च ब्रह्मणि संभवतीति वाच्यं, ब्रह्म सत्यं जगन्मिथ्येत्यद्वैतिमते ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वात् ब्रह्मणो जगदाकारेण प्रतिभाससामग्र्याः सामान्यज्ञानविशेषज्ञान-सादृश्यादिरूपायाः असंभवेन जगदाकारेण प्रतिभासासंभवेन तादृशोपादानत्वस्याप्यसंभवात्। 'महतः परमव्यक्तं' इत्यादौ अव्यक्तशब्दवाच्ये ईक्षादिघटितकर्तृत्वसमानाधिकरणोपादानत्वं उच्यते न वा। नेति चेत्, तादृशलक्षणस्यातिव्याप्तिशंकायाः अभावेन अव्यक्तशब्दस्य प्रकृतिपरत्वनिराकरणं व्यर्थमेव। उच्यते चेत्, अव्यक्तशब्दस्य प्रकृतिपरतां निराकृत्य अविद्यापरत्वे स्वीकृते तत्र ब्रह्मलक्षणस्यातिव्याप्तेर्दुर्वारत्वाच्च ॥

(चं.) नापि अद्वैत्युक्तपादक्रमो युक्तः, सुबोधस्य प्राथम्ये आनंदमयादौ निर्विशेषविचारायोगात् । दुर्बोधस्य प्राथम्ये तु स्पष्टब्रह्मलिंगानां प्राथम्यायोगात् । निर्विशेषस्य तृतीये निरूपणायोगाच्च । ईक्षत्यधिकरणोक्ताशब्दत्वस्य विक्षिप्य चतुर्थपादे व्युत्पादने हेत्वभावाच्च । चतुर्थस्य तु समन्वया-संगतिः परैरेवांगीकृतेति ग्रन्थोपरि,

(रा.) तन्न, प्रथमपादोक्तजगत्कारणत्वतदाक्षिप्तसर्वज्ञत्वसर्व-शक्तित्वनित्याव्यापित्वादि सिद्धवत्कृत्य तदुपजीवनेन द्वितीयतृतीय-पादानां प्रवृत्ततया प्रथमद्वितीयपादयोरुपजीव्योपजीवकभावसंगत्यवग-मेनोपजीव्यप्राथम्यन्यायेन प्रथमद्वितीयपादयोः क्रमोपपत्तेः । ईक्षत्यधि-करणे ईक्षणश्रवणेन प्रधानस्य कर्तृत्वांशे अशब्दत्वं व्युत्पादितं, ईक्षत्यधि-करणेन संगतिलाभेनाऽऽनन्दमयाधिकरणं प्रवृत्तं, तेन सङ्गत्याऽन्यदन्यदि-त्येवं रीत्या वाक्यान्वयाधिकरणपर्यंतमधिकरणानि प्रवृत्तानि । अनन्तरं चादौकर्तृत्वांशेऽशब्दत्वेन व्युत्पादितस्य प्रधानस्योपादानत्वांशे सशब्दत्व-शङ्कायां तन्निराकरणार्थं प्रकृत्यधिकरणप्रवृत्तेर्युक्तत्वादिति यदुक्तम्,

(खं.) तत्तुच्छं, प्रथमद्वितीयपादयोरुपजीव्योपजीवकभावरूप-सङ्गत्यवगमेन असङ्गतताशङ्कायाः निवर्तनेऽपि स्पष्टब्रह्मलिंगानां प्रथमे, अस्पष्टब्रह्मलिंगानां सविशेषनिर्विशेषनिष्टानां द्वितीयतृतीयपादयोरिति क्रमे नियामकाभावरूपदोषस्य चन्द्रिकोक्तस्य अवारणात् । नह्युप-जीव्योपजीवकभाव एव क्रमनियामकः, उपजीव्यप्रथमतायाः क्वचित्स्थले उपजीवकप्रथमतायाः तत्रतत्र तन्त्रेषु दृष्टतया तस्य पौर्वापर्यक्रमं प्रत्य-प्रयोजकत्वात् । अत एव चिंतामणावनुमितिनिरूपणानंतरमनुमान-निरूपणमपि सङ्गच्छते, उपजीव्यत्वस्य प्राथम्यप्रयोजकतायां चिंतामणे-रयुक्ततापत्तेः । तच्च जगदुपादानकारणं किं चेतनमुताचेतनमिति सन्देहे 'तस्मादचेतनं प्रधानं जगदुपादानमनुवदन्ति श्रुतय इति पूर्वपक्षः' इति ईक्षत्यधिकरणभामत्यां प्रधानं जगदुपादानमिति पूर्वपक्षयित्वा चेतनो-

पादानमेव जगत् भुजङ्ग इव रज्जावारोपितो रज्जूपादान इति सिद्धांतः' इति चेतनोपादानमिति सिद्धांतितायां ईक्षत्यधिकरणे ईक्षणश्रवणेन प्रधानस्य कर्तृत्वांशे अशब्दत्वं व्युत्पादितमित्यस्य भामतीग्रन्थानवलोकन-निमित्तत्वाच्च। ईक्षत्यधिकरणेनानन्दमयाधिकरणस्येवानुमानिकाद्यधिकरणानामपि सङ्गतेः भामतीरत्नप्रभादिभवदीयभाष्यव्याख्यानेषूक्ततया 'ईक्षत्यधिकरणेन सङ्गतिलाभेनानन्दमयाधिकरणं प्रवृत्तं, तेनतेन सङ्गत्याऽन्यदन्यदित्येवं रीत्यावाक्यान्वयाधिकरणांतमधिकरणानि प्रवृत्तानि, अनन्तरं चादौ कर्तृत्वांशेऽशब्दत्वेन व्युत्पादितस्य प्रधानस्योपादानत्वांशे सशब्दत्वशङ्कायां तन्निराकरणार्थं प्रकृत्यधिकरणप्रवृत्तेर्युक्तत्वात्' इत्यस्य भामतीरत्नप्रभाद्यज्ञानमूलत्वाच्च।

(चं.) अन्ये तु, आनन्दमय-तदवयवपुच्छयोर्द्वयोर्ब्रह्मत्वायोगात् एकस्य ब्रह्मता वाच्या। तत्रानन्दमयस्य ब्रह्मत्वे विकारार्थमयटः प्रायपाठत्यागः, प्राचुर्यस्यापि प्रतियोग्यल्पत्वापेक्षत्वाद्ब्रह्मणि च दुःखलेशस्याप्यभावात् मयटः स्वार्थत्यागः, पुच्छवाक्यगतब्रह्मशब्दस्य च गौणार्थत्वं, "सैषानंदस्य मीमांसा" इत्यादावभ्यस्यमानानंदप्रातिपदिकेन मयडर्थो लक्ष्यत इति चत्वारो दोषाः। पुच्छस्य ब्रह्मत्वे प्रायपाठबाधनमात्रं। पुच्छपदमुख्यार्थत्यागस्तु आनंदमयस्य ब्रह्मत्वपक्षेऽपि समः।....... तदुक्तं भामत्यां—

प्रायपाठपरित्यागो मुख्यत्रितयलंघनम्।
पूर्वस्मिन्नुत्तरे पक्षे प्रायपाठस्य बाधनम्॥

इति।.....तस्मादानंदमयो न ब्रह्म। (किंतु पुच्छं ब्रह्म)।.... सूत्राणि तु "गुणेत्वन्यायकल्पना" इति न्यायेन (प्रधानभूतवेदविरुद्धत्वा) दन्यथा व्याख्येयानीत्याहुः, तन्न, यतः,

एकत्रापि न मुख्यार्थलंघनं मामके मते।
सर्वत्रापि च मुख्यार्थलंघनं तावके मते ।।

तथा हि——..........अन्नमयप्राणमयादावपि मयटः प्राचुर्यार्थतया विकारप्रायपाठस्यैवासिद्धेर्न तत्त्यागः। प्राचुर्यस्य प्रतियोग्यल्पत्वापेक्षत्वेऽपि न प्रतियोगिनः सामानाधिकरण्यनियमः। यतः प्राचुर्यस्य

विजातीयसमानाधिकरणाल्पं यथा तथा।
सजातीयविभिन्नाधिकरणाल्पं निरूपकम् ।।

दृश्यते हि 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ समानाधिकरणस्य विजातीयशूद्रादेरल्पत्वेनेव 'प्रचुरप्रकाशः सविता' इत्यादौ व्यधिकरणस्य सजातीयस्य नक्षत्रादिप्रकाशस्याल्पत्वेनापि प्राचुर्यम्। प्रकृते च 'सैषानंदस्य' इत्यादि श्रुत्यैव व्यधिकरणस्य सजातीयस्य जीवानंदस्याल्पत्वमुक्त्वा ब्रह्मानंदस्य 'यतो वाचः' इति महत्त्वमुक्तम्। यत्तु प्राचुर्यस्य विशेषणत्वे प्रतियोगिन ईषदनुवृत्तिप्रतीतिनियमाभावेऽपि विशेष्यत्वे तन्नियमः, 'ब्राह्मणप्रचुरोग्रामः,' इत्यादौ दर्शनात्। 'आनंदमयः' इत्यत्र च प्राचुर्यं विशेष्यमिति कल्पतरूक्तं, तन्न, 'प्रचुरप्रकाशःसविता' इत्युक्तेऽपि तस्मिन्नंधकारलेशाप्रतीतेः।

अंतःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यंति यतयः
क्षीणदोषाः।
य एषोऽन्तरहृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः।।

"प्रज्ञानघन एवानंदमयः" इत्यादौ त्वन्मतेऽपि ब्रह्मण्यपि विज्ञानमयादि शब्दप्रयोगाच्च। न चात्र प्राचुर्यार्थत्वसंभवे वैयर्थ्या-

पादकं स्वार्थिकत्वं युक्तम् । 'ब्राह्मणप्रचुरः' इत्यादावपि प्रचुर-शब्दो महत्त्वमात्रमाह, विरोधिप्रतीतिस्तु मानांतरात् इति ग्रन्थोपरि,

(रा.) तन्न, प्राणमयमनोमययोर्मयटः 'द्व्यचश्छंदसि' इति च्छंदोविषयेण विशेषशास्त्रेण विकारार्थत्वस्य वक्तव्यतया 'तत्प्रकृतवचने मयट्' इति च्छंदोऽच्छंदःसाधारणेन सामान्यशास्त्रेण प्राचुर्यार्थत्वाश्रयणा-योगात्, 'पदे जुहोति' 'आवहनीये जुहोति' इति विशेषसामान्यशास्त्रयोः प्राबल्यदौर्बल्यव्यवस्थायाः पूर्वतंत्रे निर्णीतत्वात्। प्राणमनोमयरूपविकार-क्रमानुरोधेन विज्ञानमयानंदमयोरपि मयटो विकारार्थत्वावश्यकतयाऽऽनंद-मयस्य ब्रह्मत्वे विकारप्रायपाठत्यागापत्तेरवर्जनीयत्वात् इति यदुक्तं,

(खं.) तत्तुच्छं, 'विशये प्रायदर्शनमिति न्यायेन संदेहसत्त्व एव प्रायपाठानुसारेण निर्णयत्वेन आनंदमयशब्दस्य त्र्यच्कप्रकृतिकतया 'द्व्यचश्छंदसि' इति सूत्रेण विकारार्थे मयट्प्रसक्त्यभावेन अयं मयट्शब्दो विकारार्थो वा प्राचुर्यार्थो वेति संदेहाभावेन प्रायपाठानुसरणस्यानावश्य-कत्वात् । विकार प्रायपाठस्याभावाच्च तथा हि– विज्ञानमयान्नरसमय-शब्दयोः त्र्यच्कचतुरच्कप्रकृतिकतया ब्रह्मलिंगानां श्रवणेन च त्वदुक्त-रीत्यैव 'द्व्यचश्छंदसि' इति सूत्रेण विकारार्थे मयडप्रसक्तिः । प्राणमय-मनोमययोरपि, 'ये प्राणं ब्रह्मोपासते' 'यतो वाचो निवर्तन्ते' इत्यादिषु ब्रह्मत्व-मनोवाचामगोचरत्वादिब्रह्मलिंगश्रवणेन 'अंतःशरीरे ज्योतिर्मयो हि शुभ्रः' 'य एषोंतर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयः' इत्यदौ विकारहीने ब्रह्मणि 'ज्योतिर्मयः मनोमयः' इति विकारभिन्नार्थे द्व्यच-श्छंदसि मयट्प्रयोगदर्शनेन 'द्व्यचश्छंदसि' इति सूत्रं छंदसि विकाराथ द्व्यचः मयट् भवतीति विधायकमेव, न तु प्राचुर्यार्थे द्व्यचः मयटो निषेधकमित्यंगीकार्थतया प्राणमय मनोमयशब्दघटकमयटोरपि विकारार्थ-त्वाप्राप्तिः । किं च 'द्व्यचश्छंदसि' 'तत्प्रकृतवचने मयट्' इति सूत्रयोः सामान्यविशेषभावोऽपि नास्ति। सामान्यविशेषभावेऽपि विशेषस्य

सामान्यापेक्षया विशेषत्वेनैव न प्राबल्यम् । प्राबल्यार्थं निरवकाशत्वस्याप्यपेक्षणीयत्वेन 'शरमयं बर्हिः' 'पर्णमयी जुहूः' इत्यादौ 'द्व्यचश्छंदसि' इति सूत्रस्य सावकाशत्वेन निरवकाशत्वं न नास्तीति ।।

(रा.) मयट आनंदमये प्राचुर्यार्थत्वेऽपि समानाधिकरणविजातीयदुःखाल्पत्वप्रातियोगिकप्राचुर्यं मयडर्थः उत व्यधिकरणसजातीयानंदाल्पत्वप्रतियोगिकं प्राचुर्यं मयडर्थः इति प्राचुर्यनिरूपकभेदेन 'ब्राह्मणप्रचुरो ग्रामः, प्रचुरप्रकाशः सविता' इत्यादिव्यपदेशदर्शनात् संदेहे सति समानाधिकरणविजातीयाल्पत्वप्रतियोगिकप्राचुर्यस्य विकारार्थपर्यवसायिनः प्राणमयमनोमयादिप्रायपाठानुरोधेन ग्राह्यत्वात् । व्यधिकरणसजातीयाल्पत्वप्रतियोगिकप्राचुर्यग्रहणे विकारार्थपर्यवसायिप्रायपाठानुगुण्यं न सेत्स्यति । अतः 'आनन्दमयः' इत्यत्र मयटो विकारप्रायपाठानुगुणप्राचुर्यार्थस्य विकारपर्यवसायिनो ग्रहणस्याऽऽवश्यकतयाऽऽनंदमये विकारार्थत्वस्य निष्प्रत्यूहं सिद्धेः इति यदुक्तं,

(खं.) तत्तुच्छं, त्वदुक्तरीत्या 'द्व्यचश्छंदसि' इति सूत्रविरोधेनानंदमये विकारार्थकमयटः प्रसक्तेरेवाभावात् निष्प्रत्यूहं सिद्धेर्दूरतोऽपास्तत्वात् । विकारार्थकमयट्प्रायपाठाभावस्यानुपदमेवोक्तत्वाच्च । 'प्रचुरब्राह्मणो ग्रामः' इत्यादौ समानाधिकरणविजातीयशूद्राल्पत्वप्रतियोगिकप्राचुर्ये विकारार्थपर्यवसायित्वाभावेन तादृशप्राचुर्यस्य विकारार्थपर्यवसायित्वोक्तेः अत्यन्तासंगतत्वाच्च। अन्यथा व्यधिकरणसजातीयानंदाल्पत्वप्रतियोगिकप्राचुर्यकस्यापि विकारार्थपर्यवसायित्वसंभवेन 'आनंदमयः' इत्यत्र एतादृशविकारार्थकमयट्स्वीकारेऽपि बाधकाभावेनानंदमयस्य ब्रह्मत्वेऽपि विकारार्थकमयटः स्वीकर्तुं शक्यत्वेन प्रायपाठबाधाप्रसक्तेश्च । 'सैषानंदस्य मीमांसा भवति' इत्यारभ्य मनुष्यादिचतुर्मुखांतजीवेषु तरतमभावापन्नानंदमुक्त्वा,

यतो वाचो निवर्तंते अप्राप्य मनसा सह ।
आनंदं ब्रह्मणो विद्वान् ............. ।।

इति ब्रह्मानंदस्य निरतिशयत्वबोधकश्रुत्यैव समानाधिकरणविजातीयदुःखाल्पत्वप्रतियोगिकप्राचुर्यं मयडर्थः उत व्यधिकरणसजातीयानंदाल्पत्वप्रतियोगिकप्राचुर्यं मयडर्थ इति संदेहस्य निवृत्तिसंभवाच्च ॥

(रा.) यत्तु– 'सैषानंदस्य' इत्यादौ उत्तरोत्तरजीवानंदस्य पूर्वपूर्वजीवानंदादुत्कर्षप्रतिपादनेऽपि परब्रह्मानन्दस्य जीवानंदापेक्षयोत्कर्षप्रतिपादनाभावेन तादृशग्रंथस्यानंदमये मयटः स्वव्यधिकरणजीवानंदाल्पत्वप्रतियोगिकब्रह्मानंदप्राचुर्यार्थत्वं प्रत्यनियामकत्वात् । 'स एको ब्रह्मण आनंदः' इत्यत्र ब्रह्मपदोक्तस्य पूर्वपर्यायस्थितत्प्रजापतिरूपजीवानंदापेक्षया शतगुणोद्रिक्तानंदकत्वावगमेऽपि श्रीमच्छंकरभगवत्पादमत इव श्रीमदानंदतीर्थभगवत्पादमतेऽपि 'स एको ब्रह्मण आनंदः' इति ब्रह्मपदस्य चतुर्मुखपरत्वाभ्युपगमेन ब्रह्मानंदस्य तत्पर्यायेणापि जीवानंदापेक्षयोत्कर्षाप्रतिपादनात् । तादृशषष्ठयन्तब्रह्मपदस्य परब्रह्मपरत्वमपि न संभवति, 'ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनंदः' इति तादृशब्रह्मानंदस्य परिच्छेदावगमात्। एतेन आनंदमये ब्रह्मत्वस्वीकारेऽपि न मयटो मुख्यार्थोल्लंघनं' इत्यादिर्मध्वचन्द्रिकाग्रन्थः परास्तः, तत्र मयटः समानाधिकरणविजातीयाल्पत्वप्रतियोगिकप्राचुर्यार्थत्वस्यानुपदोक्तरीत्या वक्तव्यतया तादृशप्राचुर्यविशिष्टार्थकानंदमयपदार्थस्य दुःखमिश्रत्वेन परब्रह्मत्वासंभवेन तस्य ब्रह्मत्ववादिना मयण्मुख्यार्थोल्लंघनावश्यकत्वादिति यदवादि,

(खं.) तत्तुच्छं, 'स एको ब्रह्मण आनंदः' इत्यनेन परब्रह्मानंदस्य निरतिशयत्वस्याकथनेऽपि,

यतो वाचो निवर्तंते अप्राप्य मनसा सह ।

इत्युत्तरग्रंथेनैव ब्रह्मानन्दस्य जीवानन्दापेक्षया प्राचुर्योक्तेः त्वदीयशंकाया उत्तरग्रन्थानवलोकननिमित्तत्वात् । अत आनन्दमये ब्रह्मत्वस्वीकारेऽपि न मयटो मुख्यार्थल्लंघनमिति श्रीमच्चंद्रिकाग्रन्थः साधुरेव, अनुपदोक्त-

रीत्या समानाधिकरणविजातीयाल्पत्वप्रतियोगिकप्राचुर्यार्थत्वस्य परित्यागेऽपि तस्य मयण्मुख्यार्थत्वाभावेन मयण्मुख्यार्थत्यागाभावात् ॥

(रा.) यत्तु न्यायरक्षामणावित्यादिनाऽऽशंक्य परमतं निराकृतं,

(खं.) तदनुमतमेवास्माकम् ।

( चं ) एकत्रापि न मुख्यार्थलंघनं मामके मते ।
सर्वत्रापि च मुख्यार्थलंघनं तावके मते ॥

तथा हि– आनन्दमय-पुच्छयोर्द्वयोरपि पूर्णत्वेन ब्रह्मशब्दस्तावन्मुख्यः । पूर्णत्वं हि ब्रह्मशब्दमुख्यार्थः । यथा धर्मांतरेष्वदृष्टमपि जातिसमवायादौ धर्मितोऽधिकदेशत्वं, यथा वा परिच्छिन्नेनाव्रियमाणसम्बन्धिनाऽऽवृतेष्वन्येषु अदृष्टमपि परिच्छिन्नाज्ञानावृते निरंशे चैतन्येऽपरिच्छिन्नत्वं, यथा वाऽऽनन्दांतरेष्वदृष्टमपि ब्रह्मानन्दस्य पूर्णत्वादिकं, तथाऽन्यत्रादृष्टमपि अवयवस्य पूर्णत्वं विचित्रशक्तिब्रह्मावयवेऽस्तु । उक्तं च 'विश्वतश्चक्षुः, पूर्णमदः पूर्णमिदं' इत्यादिश्रुत्या, 'सर्वतः पाणिपादं तत्' इत्यादिस्मृत्या चावयवस्य पूर्णत्वम् । तथा 'उद्बब्रह्मात्मनः केशौ' इत्यादिस्मृत्या केशस्य कृष्णस्य व्याप्तं त्वयैकेन दिशश्च सर्वाः' इति पूर्णतोक्ता । तदुक्तमनुव्याख्याने

ब्रह्मताऽवयवेऽपि स्यात्तथाऽवयविनि स्वतः ।
यथैव कृष्णकेशस्य कृष्णस्य ब्रह्मताऽखिला ।
दर्शिता चैव पार्थाय निस्सीमाः शक्तयोस्य हि ॥

इति युक्तं चानवस्थापरिहाराय क्वचित्संबंध्यादेरेव संबंधत्वादिवत्, अस्मिन्नेव प्रकरणे 'आनंदं ब्रह्मणः' इति श्रुतेरानंदात्म-

कस्यैव ब्रह्मण आनंदित्ववच्च विशेषबलात् शक्तिव्यक्तिभावात् 'स शिरः स दक्षिणः पक्षः' इत्यादिश्रुत्याऽवयविन एवावयवत्वम्। तदुक्तं न्यायविवरणे 'न चावयवत्वविरोधः, 'नेह नानास्ति किंचन' इति श्रुतेरवयवाद्यभेदात्' इति । इति चन्द्रिकोपरि,

(रा.) तन्न. 'स शिरः स दक्षिण पक्षः, इति मध्वोदाहृत्श्रुतेः क्वापि वेदकोशेऽनुपलब्ध्या तदध्येतृपुरुषानुपलब्ध्या च शशश्रृंगतुल्यत्वात्। क्षीराब्धिशायिभगवत्केशस्य परिपूर्णब्रह्मरूपत्वे तस्य व्यापकतया 'उद्बब्र्हात्मनः केशौ' इति उत्पाटनोक्त्यसंगतेः । न हि विभुत्वयुक्तस्याकाशस्योत्पाटनं संभवति । श्रीकृष्णस्य केशत्वोक्तिस्तु 'मत्केशेनापि कंसादिवधः कर्तुं शक्यते; एतद्विषये भवद्भिः शंका न कार्या' इति रीत्या कंसादिवधस्यानायाससाध्यत्वाभिप्रायेति यदभाणि.

(खं.) तत्तुच्छं, परमात्मनः शिरआद्यवयवाभिन्नत्वमंगीकृत्य 'सशिरः स दक्षिणः पक्षः' इति भगवतः शिरआद्यभिन्नत्वप्रतिपादकश्रुतेः असत्वं मनुषे किं वा भगवतः शिरआद्यभिन्नत्वमनंगीकृत्य 'स शिरः' इति श्रुतेः असत्वं । नाद्यः, भगवतः शिरआद्यभिन्नत्वांगीकारे तन्मात्रेणास्मदिष्टसिद्धेः 'स शिरः' इत्यादिश्रुतेः सत्वासत्वविचारस्याननसरदुस्थत्वात् । न द्वितीयः,

एवं संस्तूयमानस्तु भगवान्परमेश्वरः ।
उज्जहारात्मनः केशौ सितकृष्णौ महामुने ।।
उवाच च सुरानेतौ मत्केशौ वसुधातले ।
अवतीर्य भुवो भार क्लेशहानिं करिष्यतः ।।
सुराश्च सकलाः स्वांशैरवतीर्य महीतलम् ।
कुर्वंतु युद्धमुन्मत्तैः पूर्वोत्पन्नैर्महासुरैः ।।
ततः क्षयमशेषास्ते दैतेया धरणीतले ।
प्रयास्यंति न संदेहो मद्दृक्पातविचूर्णिताः ।।

वसुदेवस्य या पत्नी देवकी देवतोत्तमा ।
तस्यायमष्टमो गर्भो मत्केशो भविता सुराः ॥
अवतीर्य च तत्रायं कंसं घातयिता भुवि ।
कालनेमिसमुद्भूतमित्युक्त्वांतर्दधे हरिः ॥
विष्णोरंशे महीं याते ऋतवोऽप्यभवञ्छुभाः ।
न सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा ॥
बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम् ।
रूपकर्मस्वरूपाणि न परिच्छेद्यगोचरे ॥
यस्याखिलप्रमाणानि स विष्णुर्गर्भगस्तव ।
एवं संस्तूयमाना सा देवैर्देवमधारयत् ॥
गर्भेण पुंडरीकाक्षं जगतां त्राणकारणम् ।
मध्यरात्रेऽखिलाधारे जायमाने जनार्दने ॥
श्रीवत्सवक्षसं जातं तुष्टावानकदुंदुभिः ।

इत्यादिप्रबंधेन विष्णुपुराणे केशस्य गर्भप्रवेशाविर्भावादीनामुक्त्या कृष्णस्य अवयवभूतकेशावतारत्वस्य, केशरूपावयवस्य 'व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादिना पूर्णत्वस्य चोक्तत्वेन अवयवावयविनोरभेदस्य सिद्ध्या, नेह नानास्ति किंचन' इत्यादिश्रुत्या ब्रह्मणि अवयवादिप्रतियोगिकभेदस्यापि निषिद्धत्वेन च शिरआद्यभिन्नत्वानंगीकारस्यानुचितत्वात् । भगवतो विचित्रशक्तिमत्त्वस्य 'सर्वोपेता च तद्दर्शनात्' इति सूत्रे उक्तत्वेन तादृश्या अघटितघटनाशक्त्या प्रामाणिकस्य सर्वस्यापि निर्वाहसंभवेन गर्भवासाविर्भावदेवतास्तुत्यादिप्रतिपादकस्य तादृशग्रंथसंदर्भस्य 'श्रीकृष्णस्य केशत्वोक्तिस्तु मत्केशेनापि कंसादिवधः कर्तुं शक्य ते; एतद्विषये भवद्भिः शंका न कार्येतिरीत्या कंसादिवधस्यानायाससाध्यत्वाभिप्राया' इति गौणार्थकल्पनस्यान्याय्यत्वात् । ब्रह्मणः सर्वजगताऽभेदं वदतस्तवावयवयवेनाभेदानंगीकारस्यानुचितत्वाच्च । 'अनंता वै वेदाः' इति वेदानामानंत्यस्य प्रमाणसिद्धतया कूपकूर्मायितैरज्ञातत्वस्य तदसत्त्वासाधकत्वाच्च । अन्यथांधेनादृष्टस्यापि वस्तुनोसत्त्वापातात्

वेदकोशेऽनुपलभ्यमानश्रुतीनां शाबर-शांकर-रामानुजीयभाष्यादिषूपलभ्य-मानत्वेन तावतैवासत्वासिद्धेश्च ॥

(चं.) किंच 'सोकामयत' इत्यत्र पुल्लिंगेन सन्निहित-परामर्शिना तच्छब्देन नपुंसकब्रह्मपुच्छशब्दनिर्दिष्टस्य 'तस्माद्वा एतस्मादात्मनः' इति व्यवहितात्मशब्दनिर्दिष्टस्य च परामर्शा-योगेन सन्निहितस्यानंदमयस्यैव परामर्ष्टव्यत्वात्। 'सोकामयत' इत्यस्य च कारणवाक्यस्य त्वयापि ब्रह्मपरत्वेनांगीकृतत्वात्कथ-मानंदमयस्याब्रह्मतेति ग्रन्थोपरि,

(रा.) तन्न, सर्वनामस्वभावापर्यालोचनविजृंभितत्वात्। ब्रह्म पुच्छं' इत्यत्र ब्रह्मपदस्य परब्रह्मपरत्वं मध्वभाष्येऽप्युक्तम्। तच्च ब्रह्माऽऽनंदमयापेक्षया सन्निकृष्टं। 'सोऽकामयत' इत्यत्र सन्निकृष्टपरा-मर्शस्वभावेन सर्वनामप्रातिपदिकेन सन्निकृष्टं पुच्छं ब्रह्म परामृष्टव्यं, न त्वानंदमयः, विप्रकृष्टत्वात्। पुल्लिंगं तु पाशाधिकरणन्यायेन प्रधानप्रातिपदिकानुसारेण ब्रह्मण्येव व्यवहितात्मशब्दाभिप्रायेण नेतव्यम्। अन्यथा गुणभूतलिंगानुसारेणानंदमयस्य व्यवहितस्य ग्रहणे प्रधानभूतं प्रातिपदिकमन्यथाकृतं स्यादिति यदुक्तम्,

(खं.) तत्तुच्छं, "ननु 'सोकामयत' इति ब्रह्मणि पुल्लिंग-निर्देशो नोपपद्यते। नायं दोषः "आत्मन आकाशः संभूतः" इत्यत्र पुल्लिंगेनात्मशब्देन ब्रह्मणः प्रकृतत्वात्" इति त्वदीयशांकरभाष्ये नपुंसकब्रह्मशब्दनिर्दिष्टस्य 'सोऽकामयत' इति पुल्लिंगेन निर्देशासंभव-मुक्त्वा पुल्लिंगात्मशब्दोक्तस्य ग्रहणमित्युक्ते तावद्यतोऽसंगतं, आत्म-शब्दोक्तस्य दूरस्थत्वात् सन्निहितपरामर्शकेन तच्छब्देन ग्रहणायोगात्। आनंदमयस्य समीपस्थत्वात्पुल्लिंगेन प्रकृतत्वाच्च, सर्वनामप्रकृतिप्रत्य-योभयस्वारस्यलाभाय तस्यैव स इति शब्देन परामर्शस्य योग्यत्वात्। एवं प्रकृतिप्रत्यययोः स्वारस्यसंभवे प्रत्ययस्यास्वारस्यकल्पनासंभवाच्च।

प्रकृत्यपेक्षयाप्रत्ययस्यप्राधान्यस्याद्वैतसिद्धौ तत्त्वमसिवाक्यविचारे मधुसूदने नांगीकृतत्वेन प्रकृतेः प्राबल्यांगीकारस्य तद्विरुद्धत्वाच्च। अत्यंतसन्निकृष्ट-स्यायोग्यस्यापि तच्छब्देन ग्रहणांगीकारे 'उताविद्वानमुं लोकं प्रेत्य' इति पूर्ववाक्ये प्रसक्तस्याविदुषो विदुषो वा ग्रहणं स्यात्। "आनंदमयोऽभ्यासात्, विकारशब्दान्नेति चेन्न प्राचुर्यात्" इत्यादिसूत्रैः आनंदमयस्यैव ब्रह्मत्वं साधितं सूत्रकृद्भिरिति पुच्छस्य ब्रह्मत्वे सूत्रविरोधापाताच्च ॥

(चं.) अपि चानुवाकांत उदाहृतो 'यतो वाचः' श्लोक एव मनोमयेऽपि श्रुत्योदाहृतः। तस्य च 'आनन्दं ब्रह्मणः' इति श्रुत्या 'यतो वाचो निवर्तंते, न बिभेति कुतश्चन' इतिलिंगाच्च ब्रह्मविषयत्वं त्वयाऽपि स्वीकृतमिति कथं मनोमयस्याब्रह्मतेति, यदुक्तं-

(रा.) तन्न, उपक्रमस्थमनोमय इति मयटा विकारार्थकेन मनोमयस्याब्रह्मत्वनिश्चयात्। उपसंहारगतस्य 'यतो वाचः' इत्यस्य तत्पर्यायगतस्योपक्रमाधिकरणन्यायेन प्राशस्त्यपरतया योजनीयत्वात् इति यदुक्तं,

(खं.) तत्तुच्छं, 'नानुपमर्द्याभावात्' इति न्यायेनोपक्रमापेक्षयोपसंहारस्य प्राबल्यात्। उपसंहारगतेन मनोमयस्य विष्णुत्वं विनाऽनुपपद्यमानेन 'यतो वाचः' इति श्लोकेन उपक्रमस्थस्य 'मनोमयः' इत्यत्र विद्यमानस्य मयटः प्राचुर्यार्थतायाः स्वीकार्यत्वात्। न चोपक्रमाधिकरणविरोधः, "वेदो वा प्रायदर्शनात्" इति (जै. सू. ३.३.२.) सूत्रे 'उच्चैर्ऋचा क्रियते' इति मंत्रगतऋक्शब्दस्य वेदपरत्ववर्णनं नोपक्रमेण किंतु वेदशब्दाभ्यासादेवः 'प्रायदर्शनात्' प्रायः बाहुल्यं तस्य दर्शनादिति अभ्यासरूपहेतोरेव प्रदर्शितत्वात्। न तूपक्रमादिरूपहेतोः, तथासति वेदो वा उपक्रमादित्यतक्ष्यत्। जैमिनिसूत्रव्याख्यातारस्तु ब्रह्मसूत्रव्याख्यातृशंकरादिवद्भ्रांता एवेति। जैमिनिसूत्रव्याख्यातृरीत्योपक्रमस्योप-

संहारापेक्षया स्वभावतः प्राबल्यांगीकारेऽपि उपक्रमगतमचटः प्राचुर्याद्य-नेकार्थत्वेन सावकाशत्वात्। उपसंहारगतस्य 'यतो वाचः' इति श्लोकस्य त्वदुक्तरीत्यैव निरवकाशत्वात्। स्वभावतः प्रबलस्यापि सावकाशस्योपक्रमगतमयटः उपसंहारगतेन अत एव स्वभावतो दुर्बले-नापि निरवकाशेन "यतो वाचः" इति मनोमयस्य विष्णुत्वव्यवस्थापकेन श्लोकेन प्राचुर्यार्थतया योजनस्य न्याय्यत्वाच्च ॥

(चं.) यच्चोक्तं, शुद्धब्रह्मपरमेतदिति, तन्न 'कामात्' इति सूत्रे 'सोऽकामयत, भीषास्मात्' इत्यादिश्रुतौ च कामादि-गुणविशिष्टस्यैवोक्तेरिति, यदुदितं,

(रा.) तन्न, गुणकथनेऽपि तत्र महाविवक्षाऽभावेनाविवक्षित-धर्मकब्रह्मपरतयोक्तश्रुतिसूत्राभ्यां निर्विशेषसिद्ध्यविरोधात्। यथा च तत्र गुणाविवक्षातथोपपादितमाकरे इति, यदभाणि,

(खं.) तत्तुच्छं, कामादिगुणानां विवक्षाऽभावे तैर्गुणैः प्रधान-निरासस्यासंभवापत्तेः, श्रुत्यर्थनिर्णायकसूत्रोक्तानां विवक्षाऽभावे सूत्रस्य श्रुत्यर्थनिर्णायकत्वाभावापत्तेः, विवक्षाऽभावज्ञापकस्य त्वयाऽनुक्तत्वात्, एतदधिकरणीयशांकरभाष्येऽनुपलभ्यमानत्वात्, त्वच्चेतसि विद्यमानाकर-ग्रन्थस्य विवक्षाभावानुपपादकत्वात्। श्रुतिसूत्रोक्तधर्माणां विवक्षाऽ-भावे ब्रह्मधर्माणां सत्त्वज्ञानादीनामप्यसत्त्वापत्त्या त्वदभिमतब्रह्मणः जडत्वशून्यत्वादिकं स्यात्। गुणस्य विवक्षाऽभावो नाम ब्रह्मणि विद्यमानत्वेऽपि अत्र कथने तात्पर्यं नास्तीति वा, ब्रह्मणि न संत्येव जनमोहनार्थयुक्तिरिति वा। आद्ये ब्रह्मणः निर्विशेषत्वहानिः। द्वितीये भ्रांतिजनकत्वेन नदीतीरे पंच फलानि संतीति वंचकवाक्यवत् श्रुतिसूत्र-योरप्रमाणतैव कथितेति अद्वैतिनिष्ठं प्रच्छन्नबौद्धत्वमेव प्रकटीकृतं स्यात्। विष्णुतत्त्वरहस्यविवरणादिग्रन्थे ब्रह्मणः सगुणत्व स्वीकारेण सगुणत्वस्य शांकराभिमतत्ववर्णनेन च स्वोक्तिविरुद्धत्वाच्च।

(चं.) अत्र च 'भेदव्यपदेशात्' इत्यनेनैक्यनिषेधादभेदप्रतिकूलता स्फुटैवेति, यत्,

(रा.) तन्न, व्यावहारिककल्पितभेदस्य सूत्रितत्वेनाभेदसिद्ध्यविरोधादिति, यदुदितं,

(खं.) तदतितुच्छं, स्वयमेव विष्णुतत्त्वरहस्यविवरणादिग्रन्थे स्पष्टं जीवेशयोर्भेदे तस्य पारमार्थिकत्वे श्रुतिसूत्राणां तात्पर्यमिति वर्णितत्वेन भेदस्य व्यावहारिकत्वोक्तेर्व्याहतत्वात्। भेदमिथ्यात्वे प्रमाणाभावात्। भेदसत्यत्वेऽनेकप्रमाणानां जीवब्रह्मभेदप्रकरणे उक्तत्वात्। श्रुतिसूत्रप्रतिपाद्यार्थस्य कल्पितत्वे श्रुतिसूत्रयोरप्रामाण्यापत्तेश्चेत्यलं अपहसनीयस्वव्याघातकरप्रक्रियानिरासप्रपंचेन ॥

(रा.) यत्तु, आनंदमयादीनां पंचानां ब्रह्मत्वमिति, तन्न, अन्नमयप्राणमयमनोमयविज्ञानमयानां ब्रह्मत्वे 'ब्रह्मविदाप्नोति परं' इति श्रुत्युक्त ब्रह्मप्राप्तिरूपमोक्षस्य "एतमन्नमयमात्मानमुपसंक्रम्य" इत्यादावन्नमयोपसंक्रमणेनैव सिद्धतया 'अन्नमयमुपसंक्रम्य' इत्युक्त्वा प्राणमयाद्युपसंक्रमणस्य कथनानुपपत्तेः। न चान्नमयादीनां ब्रह्मतयाऽत्यंताभेदेऽपि अन्नमयप्राणमयादिशब्दानां भेदात् 'अन्नमयमुपसंक्रम्य' 'प्राणमयमुपसंक्रम्य' इत्यादि निर्देशोपपत्तिरिति शंक्यं, अन्नमयप्राणमयादिपदार्थानां परस्परभेदं विनापि शब्दभेदमात्रेण तथा व्यपदेशे 'वटवृक्षमुपसंक्रम्य न्यग्रोधमुपसंक्रामिति' इत्यादिवाक्यानामपि स्वारसिकत्वापत्तेः। न च पंचानां ब्रह्मत्वेऽप्यन्नमयप्राणमयादिस्वरूपाणां रामकृष्णादिस्वरूपवद्भेदादुक्तनिर्देशोपपत्तिः संभवतीति शंक्यं, रामादिविग्रहाणां मनोमयादिविग्रहाणां मनोमयत्वादीनां रामत्वकृष्णत्वादीना मध्वमते ब्रह्मस्वरूपत्वेन परस्परभेदासंभवात्। न च घटशरावाद्यादीनां मृदात्मनाऽभेदेऽपि परस्परात्मना भेदवन्मनोमयप्राणमयादीनां ब्रह्मात्मनाऽभेदेऽपि मनोमयादीनां परस्परात्मना भेदोपपत्तिरिति शंक्यं, घटत्वशरावत्वरूपधर्माणां भेदात् तद्धर्मविशिष्टरूपेण घटशरावमृदात्मकानामपि भेदः संभवति। अन्नमय-

त्वप्राणमयत्वरामकृष्णत्वादीनां धर्माणां मध्वमते "एवं धर्मान् पृथक् पश्यन्" इति श्रुत्यनुसारेण ब्रह्मात्यंताभिन्नमनोमयाद्यत्यंताभेदस्याऽऽवश्यकतया तेषां मनोमयादीनां धर्मतोऽपि भेदासंभवात् इति यदभिहितं,

(खं.) तत्तुच्छं, "न च व्यापकस्य परमात्मनः सर्वदा प्राप्तत्वात् मुक्तस्य तत्प्राप्त्युक्तिरसंगतेति वाच्यं देशविशेषावच्छेदेन विग्रहविशेषावच्छेदेन च तत्प्राप्तिकथनोपपत्तेः" इति विष्णुतत्त्वरहस्यविवरणे त्वया सर्वदा प्राप्तस्यापि देशविशेषाद्यवच्छेदेन प्राप्त्युपदेशस्य कथितत्वेन तद्वदेव विशेषबलादुक्तव्यपदेशोपपत्तेः : "न चान्नमयादीनां" इत्यारभ्य "मनोमयादीनां धर्मतोऽपि भेदासंभवात्" इत्यंतो ग्रन्थः अनुक्तोपालंभनत्वेनोपेक्ष्य एव ।।

(रा.) विशेषबलादुक्तव्यपदेश इत्यपि न सत्, विशेषस्यापि ब्रह्मभेदाभेदाभ्यां विकल्प्य जिज्ञासाधिकरण एव निराकृतत्वात्। विशेषांगीकारे प्रमाणाभावाच्च। न हि श्रुतौ स्मृतौ वा धर्मधर्मिणोरत्यंताभेदेऽपि विशेषबलादाश्रयाश्रयिभावादिव्यवहारोपपत्तिरिति वचनं दृश्यते। न चान्यथानुपपत्तिस्तत्र प्रमाणं, तथाविधान्यथानुपपत्तेरनुपलंभात्। न च "सत्यं विज्ञानमानंदं ब्रह्म" इति श्रुत्युक्तानां ज्ञानानंदादीनामपर्यायत्वाय विशेष आश्रयितव्यः, ज्ञानत्वानंदत्वादिरूपकल्पितप्रवृत्तिनिमित्तधर्मभेदेनैव विशेष्यस्यैकत्वेऽप्यपर्यायत्वोपपत्तेः। भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकार्थवृत्तिः सामानाधिकरण्यमिति हि शाब्दाः। न चाऽऽकाशशब्दाश्रयपदयोरपर्यायत्वार्थं विशेषकल्पनं, "वृक्षो महीरुहः शाखी" इत्यादिकोशादाविव व्याख्यानव्याख्येयभावेनाऽऽकाशशब्दाश्रयपदयोरुपपत्तौ तदर्थं शशशृङ्गतुल्यस्य विशेषस्याकल्पनीयत्वात्। न च गुणगुणिनोरभेदपक्षे घटोपलंभे शुक्लाद्यनुपलंभार्थं, भेदाभेदपक्षे तयोरविरोधार्थं, 'कालः सदाऽस्ति' 'देशः सर्वत्रास्ति' इत्यबाधितव्यवहारार्थं विशेषोऽगीकार्य इति शंक्यं, तत्तदसाधारणस्वरूपस्यैव तत्तव्यवस्थापकत्वोपपत्तेः। तस्मात "अन्नमयमात्मानमुपसंक्रम्य" "एतं प्राणमयमात्मानमुपसंक्रम्य" इत्यादिना अन्नमयादीनां भेदव्यपदेशात्तेषामब्रह्मत्वमेवेति यदुक्तम्,

(खं.) तत्तुच्छं, विशेषस्य ब्रह्माभेदपक्षमङ्गीकृत्य व्यवहारनिर्वाहकतायाः जिज्ञासाधिकरणे साधितत्वात्। न च विशेषे प्रमाणाभावः, मधुसूदनादिभिस्त्वया चांगीकृतस्य तत्तदसाधारणवस्तुस्वरूपापरपर्यायस्वभावविशेषस्यैवास्मन्मते विशेषशब्दवाच्यतया 'कालः सदाऽस्ति' 'देशः सर्वत्रास्ति' 'स्वे महिम्नि प्रतिष्ठितः' 'आनंदं ब्रह्मणो विद्वान्' इत्यादीनामभेदेऽप्याधाराधेयभावबोधकानां विशेषांगीकारमंतराऽनुपपद्यमानानां त्वदाद्यंगीकृतानां श्रुतिस्मृत्यादिव्यवहाराणामेव प्रमाणत्वात्। ज्ञानत्वानंदत्वादिधर्माणां ज्ञानानंदादिधर्मिणां चाभेदेन तद्वाचकशब्दानां पर्यायतापत्त्या तत्परिहारार्थमपि विशेषस्य स्वीकार्यत्वाच्च, अपर्यायतायाः प्रामाणिकत्वात्। न च ज्ञानत्वानन्दत्वादिरूपतल्पकप्रकृतिनिमित्तभेदेनैव विशेष्यस्यैकत्वेऽपि प्रामाणिकापर्यायतोपपत्तिरिति वाच्यं ज्ञानानंदादिशब्दानां वास्तवप्रवृत्तिनिमित्तस्यावश्यकत्वात्, शक्यतावच्छेदकरूपेणैव धर्मिबोधकत्वाच्छब्दानां। घटकलशशब्दयोरपि कल्पितप्रवृत्तिनिमित्तधर्मभेदेनापर्यायतापत्तेः तत्रापि भिन्नप्रवृत्तिनिमित्तानामध्याससंभवात्। आकाशशब्दाश्रयपदयोरपर्यायत्वस्य प्रामाणिकत्वे तत्रापि विशेषकल्पनस्यावश्यकत्वात्। अस्मदङ्गीकृतविशेषस्य शशश्रृङ्गायितत्वे 'कालः सदास्ति' इत्यादिव्यवहारनिर्वाहकतत्तदसाधारणवस्तुस्वरूपापरपर्यायस्वभावविशेषस्यापि शशश्रृङ्गतुल्यतापत्तेः। "अन्नमयमात्मानमुपसंक्रम्य" "एतं प्राणमयमात्मानमुपसंक्रम्य" इत्यादावन्नमयादीनां भेदव्यपदेशाभावात्तेषां ब्रह्मत्वमेवेति ॥

(रा.) "अन्योंतर आत्मा प्राणमयः, अन्योंतर आत्मा मनोमयः" इत्याद्यन्यशब्दनिर्देशादपि तेषामन्नमयादीनामब्रह्मत्वं। न हि ब्रह्मप्रतियोगिकभेदानुयोगि ब्रह्मेति केनापि ब्रह्मवादिनाऽभ्युपगम्यते, "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिविरोधादिति, यदुक्तम्,

(खं.) तत्तुच्छं, भिन्नानामेव घटभूतलादीनां आधाराधेयभावस्य लोके दृष्टत्वेऽपि यथा 'स्वे महिम्नि प्रतिष्ठितः' इत्यादौ अभिन्नयोरेवा-

धाराधेयभावस्य तत्तदसाधारणवस्तुस्वरूपापरपर्यायस्वभावविशेषेण निर्वाहस्तथाऽभिन्नयोरेव विशेषबलेनान्यादिशब्दनिर्वाहात् ।

अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः ॥

इति ब्रह्मांडपुराणे ईश्वरशक्त्याऽभिन्नयोरपि अन्यादिशब्दनिर्वाहस्योक्तत्वाच्च ॥

क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः ।
मन्दराद्रेरधिष्ठानं भ्रमतोऽभून्महामुने ॥७६॥
रूपेणान्येन देवानां मध्ये चक्रगदाधरः ।
चकर्ष नागराजं तु दैत्यमध्येऽपरेण च ॥८७॥
उपर्याक्रांतवान् शैलं बृहद्रूपेण केशवः ।
तथाऽपरेण मैत्रेय यत्र दृष्टं सुरासुरैः ॥८८॥
तेजसा नागराजं तु तथा व्यापितवान्हरिः ।
अन्येन तेजसा देवानुपबृंहितवान्प्रभुः ॥८९॥

इत्यादिविष्णुपुराणवचनेषु अभिन्नेष्वेव भगवद्रूपेषु 'रूपेणान्येन' इति, 'अपरेण च' इति 'तथा परेण' इति, 'अन्येन तेजसा' इति अन्यादिशब्दानां श्रवणात्। 'यदेकमव्यक्तमनंतरूपं' इत्येकस्य भगवतः अनंतरूपत्वोक्तेश्च । तादृशश्रुतिपुराणगतानामन्यादिशब्दानामनंतरूपतायाश्च विशेषबलेन वा ईश्वरशक्त्या वा सर्वैर्घटनीयत्वाच्च ॥

(रा.) (१५७) यत्तु, "अनन्योऽप्यन्यशब्देन' इति पुराणवचनस्य प्रामाणिकैः क्वाप्यलिखितत्वेन दृश्यमानपुराणकोशेष्वदर्शनेन च मध्वभाष्योदाहृतमाठरायणकौशिकादिवाक्यवदसंप्रतिपन्नत्वात् । तद्वचनस्य प्रामाणिकत्वे "तत्त्वमसि" इत्यादिनाऽभिन्नतया प्रतिपादितयोर्जीवब्रह्मणोः "द्वा सुपर्णा" "जुष्टं यदा पश्यत्यन्यमीशं" "पृथगात्मानं प्रेरितारं च

मत्वा" इत्यादिजीवब्रह्मभेदवाक्येऽप्यैश्वर्यबलादन्यादिशब्दोपपत्तेर्माध्वै-स्तेषां जीवब्रह्मभेदसाधकतयोपन्यसनानुपपत्तेश्चेति,

(खं.) तत्तुच्छं, आपस्तंबादिसूत्रेषु पूर्वमीमांसायां शंकरभाष्ये रामानुजभाष्ये श्रीकंठभाष्ये चाप्रसिद्धश्रुतीनामुदाहृतत्वात्। न ह्यल्पज्ञैरदृष्टत्वमात्रेण ता असत्य इति वक्तुं शक्यते, अन्धैरदृष्टानां पदार्थानामप्यसत्त्वप्रसङ्गात्। "यदेकमव्यक्तमनंतरूपं" इति श्रुत्या एकस्यैवानेकरूपत्वस्य,

रूपेणान्येन देवानां मध्ये चक्रगदाधरः।

इत्यादिविष्णुपुराणघटकानां भिन्नेष्वेव रूपेषु विद्यमानानां अन्यादिशब्दानां च ईश्वरशक्त्या वा विशेषबलेन वांगीकार्यत्वेन तत्प्रतिपादकप्रमाणसत्त्वासत्त्वविचारस्यानावश्यकत्वाच्च ॥ "तत्त्वमसि" इत्यादिवाक्यानां जीवब्रह्मणोरभेदसाधकत्वाभावस्य जीवब्रह्मैक्यप्रमाणभंगे व्यवस्थापितत्वात्। विष्णुतत्त्वरहस्यादिग्रन्थे "जीवब्रह्मणोर्भेदः पारमार्थिक इत्येव सूत्रकाराभिप्राय इति सिद्धं" इति, – जुष्टं यदा पश्यन्त्यमीशमस्य महिमानमिति वीतशोकः" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्याद्या श्रुतिः जीवब्रह्मभेदस्य मोक्षहेतुज्ञानविषयत्वं ब्रुवाणा भेदस्य पारमार्थिकत्वं गमयति, भेदस्यापारमार्थिकत्वे तज्ज्ञानस्य भ्रांतित्वापत्त्या मोक्षहेतुत्वायोगात्" इति, "जीवब्रह्माभेदः अनुप्रवेशोपाधिक इत्यत्रोदाहृतसंप्रतिपन्नश्रुतिप्रमाणवत् विशेषणांशं परित्यज्य विशेष्यमात्राभेदे न किंचित्प्रमाणभूतं श्रुतिवाक्यं दशोपनिषत्सु दृश्यते। न च "तत्त्वमसि" इति वाक्यमेव विशेषणांशत्यागेन विशेष्यैक्ये प्रमाणमिति शंक्यं, तत्त्वंपदयोर्विशेष्यलक्षणापत्तेः" इति,

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा
साकं सर्वैः प्रमाणैः श्रुतिनिकरमहाभारतादिप्रबंधैः।
तत्रैव व्याससूत्राण्यकुटिलविधया भांति तात्पर्यवंति
प्रत्नैराचार्यरत्नैरपि परिजगृहे शंकराद्यैः स चापि ॥

इति चैवमादिभिरनेकवाक्यैः जीवब्रह्मणोरभेदोऽप्रामाणिकः भेद एव प्रामाणिकः इत्युक्तत्वेनाभेदसाधकप्रमाणस्यैवाभावेन जीवब्रह्मणोर्भेद-साधकानामैश्वर्यबलादन्यार्थत्वानुपपत्तेः, अस्माभिस्तेषां जीवब्रह्मभेद-साधकतयोपन्यासस्योपपन्नतमत्वात् । प्रतिवादिना त्वयैव "जुष्टं यदा" इत्यादीनां जीवब्रह्मभेदसाधकतया, "तत्त्वमसि" इत्यादीनां जीवब्रह्माभेद-साधकतया चांगीकृतत्वात् ॥

(रा.) यत्तु, किंचान्नमयादीनां ब्रह्मत्वे "अन्नमयप्राणमयमनो-मयविज्ञानमयानन्दमया मे शुध्यंतां" इत्यानन्दमयादीनां शुध्यत्वोक्तिर-युक्तेति,

(खं.) तत्तुच्छं, शुद्धिप्रार्थनावाक्ये ब्रह्मशब्दाभावात्, ब्रह्मलक्षणा भावात्. ज्ञानिनस्तत्प्राप्तिकथनाभावात्, रसशब्देनविशेषणाभावात्, अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिः" इत्यादाविव संज्ञा-भेदात् शुद्धिप्रार्थनालिंगात्, "कुंडपायिनामयने मासमग्निहोत्रं जुहोति" इत्यादाविव प्रकरणभेदाच्च तत्रोक्तानां अन्नमयादीनामब्रह्मत्वस्य चंद्रि-कायां व्यवस्थापितत्वात् ॥

(रा.) यत्तु, अनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणांतरस्य पूर्व-तंत्रीयस्य धात्वर्थभावनामात्रविषयकत्वेनाधात्वर्थभावनारूपमनोमयादि-ष्वप्रवृत्ते 'शुध्यंतां' इति वाक्योक्तान्नमयादयः 'अन्नमयमात्मानमुपसंक्रा-मति इति वाक्योक्तान्नमयाद्यपेक्षया भिन्नाः प्रकरणांतरन्यायादित्ययुक्तं, इति,

(खं.) तत्तुच्छं, तादृशप्रकरणस्य धात्वर्थभावनामात्रविषयकत्वे प्रमाणाभावेन मनोमयादिष्वपि प्रवृत्तेः संभवात् । प्रकरणभेदेन वस्तु-भेदमात्रे दृष्टांतदानसंभवाच्च ॥

(चं.) शुद्धिप्रार्थनावाक्ये ब्रह्मशब्दाश्रवणात् ज्ञानिनस्त-त्प्राप्तिकथनाभावात्, रसशब्देन विशेषणाभावात्, "अथैष ज्योति-

रथैष विश्वज्योतिः" इत्यादाविव संज्ञाभेदादन्नमयादीनामब्रह्मत्वम्, इति यत्,

(रा.) तन्न, मध्वमते 'अन्नमयमात्मानमुपसंक्रामति' इत्यादावपि ब्रह्मशब्दाभावेनान्नमयादीनामब्रह्मत्वापत्तेः। "अन्योंतर आत्मा प्राणमयः" इत्यादौ मुक्तप्राप्यत्वानुक्तेस्तंत्रोक्तान्नमयादीनामब्रह्मत्वापत्तेः। "अन्नमयमात्मानमुपसंक्रामति" इत्यत्र "एष पुरुषोऽन्नरसमयः" इतिवद्रसशब्दाभावेन "अथैष ज्योतिः" इतिवदन्नमयसंज्ञाभेदान्मध्वमतेऽन्नरसमयापेक्षयोपसंक्रमवाक्योक्तान्नमयस्य भेदापत्तेः, इति यत्,

(खं.) तत्तुच्छं, "एतमन्नमयमात्मानमुपसंक्रामति" इत्यादौ 'एतं' इतिशब्दस्य पूर्वोक्तपरामर्शकत्वेन पूर्वं ब्रह्मरूपाणां अन्नमयादीनामेवोक्तत्वेनात्रत्यान्नमयादीनां ब्रह्मत्वनिश्चयात्। एकप्रकरणस्थत्वाच्च। न हि अन्नमयादीनां ब्रह्मत्वे समुदितानां पूर्वोक्तानां लिंगत्वं, एकैकेनापि ब्रह्मत्वसिद्धेः। "अन्नमयमात्मानमुपसंक्रामति" इत्यादौ ज्ञानिप्राप्यत्वलिंगसद्भावाच्च। अत एव शुद्धिप्रार्थनावाक्ये प्रत्येकं ब्रह्मत्वज्ञापकलिंगानामभावोक्तिः संगच्छते। ब्रह्मत्वसाधकात्मशब्दसद्भावाच्च। "अन्योंतर आत्मा प्राणमयः" इत्यत्र प्राणमयं प्रत्युदाहृतश्लोके "सर्वमेव त आयुर्यंति, ये प्राणं ब्रह्मोपासते" इति ब्रह्मशब्दात्। 'सर्वमायुर्यंति' इति पूर्णायुष्यरूपमोक्षजनकज्ञानविषयत्वोक्तेश्च। 'एतमन्नमयमात्मानमुपसंक्रामति' इत्यत्र रसशब्दाभावेऽपि एतं' इति विशेषेण आत्मशब्दादिना च ब्रह्मत्वनिश्चयात्॥

(रा.) यत्तु, किंचान्नमयादीनां ब्रह्मत्वे भवतां प्रमाणतमत्वेनाभिमते भागवते श्रुतिगीतायां "दृतय इव श्वसन्नसुभृतो यदि तेऽनुविधा महदहमादयोंडमसृजत् यदनुग्रहतः। पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतः परमं त्वं यदवशेषमृतं" इति श्लोकेऽन्नमयादिषु चरमस्यैव ब्रह्मत्वोक्त्या अन्नमयादीनां चतुर्णां अब्रह्मत्वसिद्धिर्विरुध्येत, इति,

(खं.) तत्तुच्छं, त्वदुक्तरीत्या भागवतपाठस्यैवाभावात्। पुरुषविधान्वयोऽत्र चरमोत्तममध्यमादिषु यस्तव सदसतः परं प्रथमे यदवशेषमृतं" इति पाठो वर्तते । तादृशपाठे चरमस्यानन्दमयस्य ब्रह्मत्वाबोधनात्। अद्वैतिमते आनंदमयपुच्छस्यैव ब्रह्मत्वात् आनंदमयस्य ब्रह्मत्वबोधकतादृशपाठांगीकारस्य त्वन्मतविरुद्धत्वाच्च। अन्नमयप्राणमयमनोमयविज्ञानमयानंदमयानां पंचानां ब्रह्मत्वमङ्गीकुर्वतामस्माकं मते आनंदमयस्य ब्रह्मत्वबोधकतादृशपाठोऽपि न बाधकः अन्नमयादीनां ब्रह्मत्वानिषेधात्। अन्नमयादिषु चरमस्यानंदमयस्य ब्रह्मत्वकथनं कुत इति न शंक्यं, 'महदहमादयोऽण्डमसृजन् यदनुग्रहात्.... चरमोन्नमयादिषु यः' इत्यस्य अन्नमयादिषु यश्चरमः आनंदमयः तस्यानुग्रहतः महदहंकारादितत्त्वाभिमानिनो देवा अंडमसृजन् इत्यर्थकत्वेन आनंदमयस्यास्यामेवोपनिषदि 'सोऽकामयत' इति सृष्टिकर्तृत्वश्रवणेन अन्नमयादिषु चरमस्यानंदमयस्य सृष्टिकथनार्थं प्रवृत्तेः॥

(चं.) किंचान्नमयादीनामब्रह्मत्वे ब्रह्मजिज्ञासोस्तदुपदेशायोगः। द्वारमपि द्वारत्वेनोपदेष्टव्यं, न त्वात्मतया। लोके हि चन्द्रारुंधत्यादौ शाखास्थूलतारादिकं द्वारत्वेनैवोपदिश्यते, इति यत्,

(रा.) तन्न, चंद्रारुंधत्योर्बुद्ध्यवतारार्थं 'शाखाग्रं चंद्रः इयं स्थूलताराऽरुंधती' इत्यादौ द्वारभूतानामपि चंद्रत्वारुंधतीत्वादिनोपदर्शनात् इति यत्,

(खं.) तत्तुच्छं, द्वितीयाचन्द्रस्य हि सूक्ष्मत्वेन दूरदेशस्थत्वेन च झटिति तत्प्रदेशे इंद्रियाणां प्रवृत्त्ययोगेन चन्द्रसन्निकर्षस्यासंभवेन चन्द्रप्रत्यक्षासंभवात् समीपवर्तिशाखाग्रे इंद्रियप्रवृत्तिद्वारा तत्पुरोदेशे विद्यमानचंद्रसन्निकर्षार्थं कुत्र चंद्र इति पृष्टः 'शाखाग्रं पश्य' इत्येवोपदिशति, न तु 'शाखाग्रंचंद्रः' इत्यभेदेन। एवमेव 'स्थूलतारांपश्य' इति, न तु

'स्थूलताराऽरुंधती' इति। एवं दृष्टांतस्यासंप्रतिपन्नत्वेन तद्दृष्टांतेनान्नमयादीनां ब्रह्मज्ञा द्वारत्वाद्ब्रह्मत्वोक्तिरित्यस्यायुक्तत्वात्। चन्द्रादीनां प्रत्यक्षयोग्यत्वेन तेषां चाक्षुषत्वप्रयोजकेन्द्रियसन्निकर्षार्थं शाखाग्रोपदेशस्य संभवेऽपि ब्रह्मणः चाक्षुषप्रत्यक्षयोग्यत्वाभावेन तद्विषयकशाब्दपरोक्षस्य वा त्वन्मतरीत्या शाब्दापरोक्षस्य वाऽन्नमयादीनां ब्रह्मत्वानुक्तावपि त्वन्मते 'तत्त्वमसि' इति वाक्यादिव संभवेनान्नमयादीनां द्वारत्वोक्तेर्वैयर्थ्याच्च ॥

(चं.) 'अन्नं ब्रह्म' इत्यनुक्त्वा 'आनंदो ब्रह्म' इति वक्तुं नाशक्यं, येनान्नादेर्द्वारत्वं स्यात्, इति यत्,

(रा.) तन्न, चन्द्रे बुद्ध्यारोहसाधनमार्गांतरसत्त्वेऽपि 'शाखाग्रं चंद्रः' इत्यत्र शाखाग्रस्य चन्द्रत्वोक्तिवत् अत्रापि मार्गांतरसत्त्वेऽप्यत्र ब्रह्मत्वोपदेशस्यापि ब्रह्मणि बुद्ध्यवतारमार्गत्वानपायात्, इति यत्,

(खं) तत्तुच्छं, अनेकेषु मार्गेषु एकेन मार्गेण निर्वाहे अन्यो मार्गो मास्तु इत्याशंकायाः एकस्य मार्गत्वेऽपि अन्यस्य मार्गत्वानपायादिति समाधानस्य कर्तुं शक्यत्वेऽपि, अन्नादीनां ब्रह्मत्वोपदेशेऽपि, 'आनंदो ब्रह्म' इत्युपदेशस्यावश्यकत्वेन तेनैव ब्रह्मज्ञाननिर्वाहे अन्नादीनां द्वारतया ब्रह्मत्वोपदेशस्य वैयर्थ्याशंकायां अन्नादीनां ब्रह्मत्वोपदेशस्य ब्रह्मणि बुद्ध्यवतारमार्गत्वानपायादित्यस्यासंगतत्वात्। शाखाग्रस्य चन्द्रत्वेनोपदेशस्यैवाभावादित्युक्तत्वेन तस्य दृष्टांतत्वासंभवाच्च। अन्नादीनां ब्रह्मज्ञानद्वारत्वं दृष्टजनकतया अदृष्टजनकतया वा। नाद्यः, 'आनन्दो ब्रह्म' इति वाक्येन जायमानज्ञानं प्रति प्रयोजकीभूतस्य दृष्टस्य प्रयोजनस्य 'अन्नं ब्रह्म' इत्यादिवाक्येनादर्शनात्। न द्वितीयः, अदृष्टस्य प्रयोजकत्वज्ञापकान्यथानुपपत्त्याद्यभावात्। तथा च अन्नादीनां ब्रह्मत्वोपदेशः 'आनन्दो ब्रह्म' इति वाक्येन जायमानब्रह्मज्ञानं प्रत्यप्रयोजक इति तदुपदेशस्यायुक्तत्वापरिहाराच्च ॥

(चं.) न च 'सत्यं ज्ञानं' इति स्वरूपलक्षणेन ब्रह्मोपदिश्य पुनस्तस्य देहादिरूपताभ्रांतिमुत्पाद्य पुनरपि पुच्छवाक्येन तदुपदेशोऽर्थवान्, इति यत्,

(रा.) तन्न, सत्यमित्यादिना ब्रह्मस्वरूपावगमेऽपि अन्नमयादिपंचकोशाधारत्वेन ब्रह्मस्वरूपभानार्थं देहादिरूपतोक्तिपूर्वकं पुच्छपदेन कोशाद्याधारतया ब्रह्मोपदेशस्यावश्यकत्वात्, इति यत्

(खं.) तत्तुच्छं, त्वन्मते निर्विशेषज्ञानस्य मोक्षप्रयोजकत्वेन तस्य च त्वन्मतरीत्याऽखंडार्थबोधकेन सत्यमित्यादिवाक्येन जातत्वेन कोशाद्याधारत्वेन ब्रह्मस्वरूपज्ञानस्यानावश्यकत्वात्। तस्य भ्रमत्वेन मोक्षविरोधित्वाच्च। ब्रह्मणः देहादिरूपितोक्तिमन्तरा कोशाद्याधारत्वस्य वक्तुं शक्यत्वेन देहादिरूपताभ्रमजननस्यात्यंतमयुक्तत्वाच्च। आधाराधेयभावस्योत्सर्गतो भेदव्याप्तत्वेन ब्रह्मस्वरूपभानविरुद्धत्वाच्च ॥

(चं.) न च द्वारोपदेशः प्रत्यक्प्रावण्यार्थः, कोशानां पराक्त्वात् परागुपदेशेन प्रत्यक्प्रावण्येऽतिप्रसंगात्। प्रत्यक्त्वेनारोपस्यानंदमये उत्तरानुवाकोक्तान्नादौ चाभावात्। आनंदमये अन्नादौ च ब्रह्मशब्दाश्रवणात्, इति यत्,

(रा.) तन्न, न हि पृथिव्या पृथिवी लक्ष्यते, किंतु तद्भिन्नेन गंधेन, तथा प्रत्यग्रूपवस्तुना प्रत्यग्रूपलक्षणासंभवात् तद्भिन्नेन पराग्रूपेणैव प्रत्यगुपलक्षणस्यावश्यकत्वात्, इति यत्,

(खं.) तत्तुच्छं, चन्द्रज्ञानार्थं चन्द्रदेशनेत्रदेशमध्यवर्तिशाखाग्रोपदेशः तद्देशे इंद्रियप्रावण्यद्वारा चंद्राधिकरणतत्पुरोदेशे इंद्रियप्रावण्यार्थं यथा क्रियते, न तु पूर्वदेशवृत्तिचंद्रज्ञानार्थं पश्चिमदेशवर्तिशाखाग्रोपदेशः, तथा बहिर्देशे विषयादिषु संवलच्चित्तस्य प्रत्यग्ब्रह्मणि प्रावण्यार्थं तत्प्र-

न तु पराग्भूतान्नमयाद्युपदेशः अन्नमयादिषु

देहेषु चित्तस्य स्वत एव सत्त्वात्। तदुपदेशस्य प्रत्यग्ब्रह्मणि चित्त-प्रावण्यप्रयोजकत्वाच्च। अन्यथा पूर्वदेशवृत्तिचंद्रज्ञानार्थं पश्चिमदेशवृत्ति-शाखाग्रोपदेशस्यापि कर्तव्यतापत्तेरिति चंद्रिकाभिप्रायः, न तु तदेव तेनैव लक्षणीयमिति। एवं अर्थांतरं परिकल्प्य दूषणाभिधानेन छलोत्तररूप-त्वात् चंद्रिकाभिप्रायाज्ञानमूलत्वाद्वा त्वदुत्तरमुपेक्षणीयमेवेति ॥

(चं.) तत्रत्यानां[1] अन्नादीनामन्नमयादित्वे च तत्रत्यस्त्व-याब्रह्मत्वेन स्वीकृतः आनन्दोप्यानंदमयः स्थानप्रमाणात्, इति यत्,

(रा.) तन्न, 'अन्नमयप्राणमयमनोमयविज्ञामयानंदमया मे शुध्यंतां' इत्यत्रापि पंचमस्थानत्वासाम्यादानंदमयस्य ब्रह्मत्वापत्तेः। तत्र शोध्यत्वसूचिताशुद्धिसंबंधात् तस्य ब्रह्मत्वसंभवे आनंदवल्लामपि प्रिय-मोदाद्यवयवकत्वरूपजीवलिंसंबंधात् ब्रह्मत्वासंभवात्, इति यदुक्तं,

(खं.) तत्तुच्छं, चंद्रिकावाक्यार्थाज्ञानमूलत्वात्। तथा हि— उत्तरानुवाकोक्तान्नादौ च प्रत्यक्त्वेनारोपस्याभावात्' इति पूर्ववाक्येन 'अन्नं प्राणं चक्षुः श्रोत्रं' इत्याद्युक्तान्नादौ ब्रह्मपदाश्रवणात् प्रत्यक्त्वारोपभावेन पराग्भूतान्नादीनां प्रत्यक्त्वमिव प्रत्यक्त्वेन ज्ञानत्वमपि नास्तीति न तदुप-देशेन प्रत्यग्ब्रह्मणि मनःप्रावण्यमित्युक्ते, उत्तरानुवाकोक्तान्नादीनां ब्रह्म-वल्ल्युक्तान्नमयादीनामैक्येनान्नमयादिषु 'अन्नं ब्रह्मेति व्यजानात्' इति ब्रह्मत्वोक्त्या प्रत्यक्त्वारोपात् अन्नादिषु अपि प्रत्यक्त्वरोपः प्राप्त एवेति वस्तुतः पराग्भूतानामपि अन्नादीनां प्रत्यक्त्वेनारोपविषयत्वात् प्रत्य-ग्ब्रह्मणि मनःप्रावण्यार्थं तदुपदेशो भविष्यतीति पुनः मायिना शंकिते, अन्नादीनामन्नमयादित्वे मीमांसकमतसिद्धस्थानप्रमाणेनानन्दोऽपि आनंद-मयः स्यात्, तथा चानंदमयस्याब्रह्मत्वेन त्वयांगीकृतत्वात् आनन्दोऽपि अब्रह्म स्यात्, तथा चानन्दो ब्रह्मेति त्वन्मतभंगः स्यात् इति हि चंद्रिका-

[1] भृगुवल्ल्युक्तानां।

कारैः आनंदस्यानंदमयत्वापादनद्वारा आनंदस्याब्रह्मत्वमेवापादिते, न तु आनंदस्य ब्रह्मत्वात् आनंदमयोऽपि ब्रह्म स्यादिति। 'अन्नादीनामन्नमया-दित्वे आनंदोऽप्यानंदमयः स्यात्' इति चन्द्रिकावाक्यात्तथा स्पष्टं प्रती-तेश्च। आनंदमयस्य ब्रह्मत्वापादनं नास्य वाक्यस्यार्थं इति बालानामपि प्रतीतेः चंद्रिकावाक्यार्थस्याज्ञानदोषेणानंदमयस्य ब्रह्मत्वं आपादितं चंद्रि-काकृद्भिरिति भ्रांत्वा तथाऽनूद्य 'अन्नमयप्राणमयमनोमयविज्ञानमयानंद-मयस्य ब्रह्मत्वापत्तेरित्यादिदूषणकथनमिति ॥

(चं.) अज्ञातधर्मतत्त्वं 'चैत्यवंदनादि धर्मः' इति मन्वानं प्रति 'चैत्यवंदनादि धर्मः' इत्युपदिश्य 'ज्योतिष्टोमादि धर्मः' इति यथा नोपदिश्यते, तथाऽज्ञातब्रह्मतत्त्वं 'अन्नामयादिकं ब्रह्म' इति भ्रांतं प्रति 'अन्नमयादिकं ब्रह्म' इत्युपदिश्य आनंदो ब्रह्मेति वा पुच्छं ब्रह्मेति वा उपदेशायोगः, इति यत्,

(रा.) तन्न, धर्मस्य ब्रह्मण इवात्यंतं दुर्ज्ञानत्वाभावेन तथोप-देशासंभवेऽप्यत्यन्तदुर्ज्ञेयस्य ब्रह्मणो यथायथोपदेशे विज्ञेयत्वं संभवति, तथातथोपदेशसंभवात्, इति यदुक्तं,

(खं.) तत्तुच्छं, अन्नमयादेर्ब्रह्मत्वोपदेशस्य ब्रह्मज्ञानं प्रति प्रयोजक-त्वाभावस्य प्रयोज्यत्वेन त्वदभिमतनिर्विशेषज्ञानस्य सत्यमित्यादिनैव जातत्वेन अन्नाद्युपदेशानंतरमपि कर्तव्येन 'पुच्छं ब्रह्म, आनंदो ब्रह्म' इत्याद्युपदेशेनैव ब्रह्मज्ञानसिद्धेरन्नादेर्ब्रह्मत्वोपदेशस्य व्यर्थतायाश्च पूर्व-मेवोक्तत्वात्।

(चं.) किं च निरवयवे चित्तप्रावण्यार्थं निरवयवांतर-मेवोपदेष्टव्यं, न तु 'अयं दक्षिणः पक्षः' इति सावयवं, इति यत्,

(रा.) तन्न, निरवयवेन निरवयवलक्षणायोगेन सावयवेनैव तदुप-लक्षणावश्यकत्वात्। अन्यथा घटेन घटोपलक्षणापत्तेः, इति यत्,

(खं.) तत्तुच्छं, चित्तस्य प्रावण्यं नाम अन्यविषये विद्यमानस्य मनसः तद्विषयत्वसंपादनम् । यथैतस्ततस्संचरतो मनस. चंद्रविषयकत्वार्थं चंद्रप्रदेशवर्तिशाखाग्रोपदेशा क्रियते, तयोर्द्वयोः पुरोदेशवृत्तित्वेन साजात्यात् न तु पश्चिमदेशवृत्तिशाखाग्रोपदेशः, एवं उपदेश्यज्ञाप्यवस्तुनोः साजात्यस्यावश्यकत्वात् अन्नमयादीनां ब्रह्मणश्च सावयवत्वनिरवयवत्वाभ्यां विजातीयत्वाद्ब्रह्मणि चित्तप्रावण्यार्थं न विजातीयमुपदेष्टव्यं, किंतु सजातीयं निरवयववांतरमेवेति चंद्रिकाभिप्रायः, न तु तेनैव तदिति । तथा च घटेन घटोपलक्षणापत्तेरिति दूषणस्य चंद्रिकाभिप्रायाज्ञानविजृंभितत्वात् ॥

(चं.) अपि च न तावदन्नादीनां वा प्राणादीन् प्राणमयादीत्वा प्रति द्वारत्वं, अन्नादिज्ञानं विनापि प्राणादिज्ञानात्। ब्रह्मणि द्वारत्वे अन्नादिपूर्वकं प्राणाद्युपदेशो न युक्तः । अनेकद्वारवैय्यर्थ्यं च । न च द्वारविकल्पः उत्तरानुवाके 'अन्नं ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजनात्' इत्यादिना अन्नप्राणादिद्वारसमुच्चयोक्तेः इति यत्,

(रा.) तन्न, यस्य पुरुषस्यैकेनोपलक्षणेनोपलक्ष्यस्वरूपं सम्यग्ज्ञायते तं प्रत्येकस्योपलक्षकत्वसम्भवेऽपि यस्य चतुर्भिरेव सम्यगुपलक्ष्यज्ञान तं प्रति चतुर्णामुपलक्षकत्वोक्तिसम्भवात्, पुरुषमतिवैविध्यस्य सर्वैरङ्गीकार्यत्वात्, इति यदवादि,

(खं.) तत्तुच्छं, ब्रह्मरूपोपलक्ष्यस्य निर्विशेषत्वेन निरंशत्वेन च कैश्चिद्धर्मैर्ज्ञानं कैश्चिद्धर्मैरज्ञानमित्यस्य, केनचिदंशेन ज्ञानं केनचिदंशेनाज्ञानमित्यस्य वा असम्भवेन ब्रह्मज्ञाने सम्यक्त्वासम्यक्त्वयोरयोगेन सम्यग्ज्ञानार्थं चतुर्णामुपलक्षकत्वोक्तेरयुक्तत्वात्, पुरुषमतिवैविध्येऽपि ब्रह्मविषयकमतौ त्वन्मतरीत्या वैविध्याभावात् ॥

(चं.) अपि च 'यतो वै' इत्यादि वाक्योक्तकारणत्वस्यापि त्वत्पक्षे ब्रह्मणि द्वारत्वात् कोशानां च कारणत्वे द्वारत्वाभावात्कोशोपदेशवैयर्थ्यम्, इति यदवादि,

(रा.) तन्न, यस्य पुरुषस्य कारणत्वमात्रेण ब्रह्मोपलक्षणं न जातं, तं प्रति कोशानामप्युपलक्षकत्वोक्त्यावश्यकत्वात्, इति यत्,

(खं.) तत्तुच्छं, 'आनन्दो ब्रह्म' इत्युपदेशेन जायमानज्ञानं प्रति कारणत्वोपदेशस्य वा अन्नादीनां ब्रह्मत्वोपदेशस्य वा प्रयोजकत्वाभावादित्युक्तत्वात्। प्रयोजकत्वांगीकारे तु तयोर्विशेषाभावेन एकेन ज्ञानं भवति अन्येन न भवतीति विशेषकल्पकाभावात् ।।

(चं.) किं च भृगुर्वरुणोपदिष्टानां द्वारत्वं न वेत्ति चेद्विरोचनस्येव पुनरुपसत्त्ययोगः। वेत्ति चेत् 'नान्नं ब्रह्मेति व्यजानात् नान्नाद्ध्येव' इत्यादि श्रूयेत। तस्मादन्नमयादयो ब्रह्मैव न कोशाः, इति यत्,

(रा.) तन्न, असुरजातेर्विरोचनस्य पापवशाद्द्वारत्वाज्ञानेन पुनरुपसत्त्यभावेऽपि देवजातेः भृगोः पुण्यवशादन्ने द्वारत्वज्ञानात् तदुपसत्त्युपपत्तेः इति यत्,

(खं.) तत्तुच्छं, भृगुः वरुणोपदिष्टानां अन्नादीनां द्वारत्वं न जानाति किं वा जानाति। यदि द्वारत्वं न जानाति, अन्नादीनि ब्रह्मैवेति जानाति, तदानीं चक्षुरन्तरस्थप्रतिबिंबस्य ब्रह्मत्वज्ञानेन विरोचनस्य पुनरुपसत्त्यभाववत् भृगोरपि पुनरुपसत्त्ययोगः। द्वारत्वं जानाति चेत्, 'नान्नं ब्रह्मेति व्यजानात्, नान्नाद्ध्येव खल्विमानि भूतानि जायन्ते' इति वाक्यविन्यासः स्यात् इति पक्षभेदेन चंद्रिकाकारैर्दोषस्योक्तत्वेन देवजातेः भृगोर्द्वारत्वज्ञानं भवतीति द्वितीयपक्षस्वीकारेण प्रथमपक्षोक्तदोषाभावेऽपि 'नान्नं ब्रह्मेति व्यजानात्' इत्यादि वाक्यविन्यासापत्तिरूपस्य द्वितीयपक्षो-

वतदोषस्य परिहारानुक्तेः। अद्वैतिमते सर्वेषां चिद्रूपत्वेन तारतम्याभावात देवत्वासुरत्वनिमित्तोपाधीनां च कल्पितत्वेनारोपितरजतद्वय इव विशेषाभावात् एकस्य ज्ञानं एकस्याज्ञानं इत्यादिविशेषस्यायोगाच्च ।।

(चं.) "भृगुर्वै वारुणिः इत्यत्तरानुवाके उक्तानां अन्नादीनां ब्रह्मत्वं तावदुपेयं, 'भार्गवी वारुणी विद्या परमे व्योमन्प्रतिष्ठितां' इति श्रुत्या स्वयमेव ब्रह्मपरत्वोक्तेः, 'अधीहि भगवो ब्रह्मेति' ब्रह्मप्रश्नोत्तरत्वात्। 'स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्' इति श्रवणानंतरभाविनिदिध्यासनाख्यतपसाऽपरोक्षीकृतत्वलिंगात् । 'अन्नं ब्रह्म' इत्यादिब्रह्मशब्दात्। 'अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादि ब्रम्हलक्षणाच्च। तत्समाख्यया चात्राप्यन्नमयादीनां ब्रम्हत्वमिति, यत्,

(रा.) तन्न, अन्नप्राणमनोद्वारकप्रतिपत्तिविषयस्यानंदस्य ब्रह्मत्वेन 'भार्गवी वारुणी' इत्युक्तविद्यायाः परमव्योमशब्दितब्रह्मनिष्ठत्वोपपत्तेः। 'राजा गच्छति' इत्युक्ते सपरिवारस्य राज्ञो गंतृत्वप्रतीतिवत् 'अधीहि भगवो ब्रह्म' इत्यत्र ब्रह्मप्रतिपत्तिहेतुभूतद्वाररूपपदार्थपरिकरोपेतस्य ब्रह्मणोऽध्यापनीयत्वप्रतीत्याऽन्नप्राणादिरूपद्वारोपदेशस्यापि प्रश्नानुगुणत्वात्। "स तपस्तप्त्वा अन्नं ब्रह्मेति व्यजानात्" इत्यस्य सः भृगुः तपः आलोचनं 'तप आलोचने' इति वचनात्, अन्नादेर्ब्रह्मजन्यत्वेन तस्य साक्षाद्ब्रह्मत्वासंभवेन ब्रह्मप्रतिपत्तिद्वारतयाऽस्य ब्रह्मत्वमित्यालोचनाकारः तप्त्वा तादृशालोचनं कृत्वा अन्नं ब्रह्म अन्नस्य ब्रह्मजन्यत्वात्कार्येण कारणानुमानमिति रीत्याऽन्नं ब्रह्मप्रतिपत्तिसाधनमिति व्यजानात् इति ज्ञानं प्राप्तवानित्यर्थकतया भवदभिमतान्नब्रह्मत्वासाधकत्वात्। अन्नं ब्रह्म' इति ब्रह्मशब्दस्य 'शाखाग्रं चन्द्रः' इति शाखायां चंद्रशब्दश्रवणेऽपि चन्द्रत्वासाधकत्ववदन्ने ब्रह्मत्वासाधकत्वात्। "अन्नाद्ध्येवखल्विमानि भूतानि जायन्ते" इति ब्र लक्षणस्य "तदैक्षत बहुस्यां प्रजायेयेति तत्

जोऽसृजत, तदैक्षत बहु स्यां प्रजयेयेति तदपोऽसृजत" इत्यादौ तेजआद्यचेतनेषुबहुभवनसङ्कल्पपूर्वकस्रष्टृत्वरूपब्रह्मलिंगस्योपचारेण निर्देशवदचेतनेऽन्न उपचारेण निर्देशात् तेन निर्देशेनान्नस्य ब्रह्मत्वसिद्धेः। तत्र तेजआदिपदस्य तदन्तर्यामिब्रह्मपरत्वेऽन्नादिशब्दस्याप्यन्नाद्यंतर्यामिब्रह्मपरत्वमेवापद्यते। न च तन्माध्वानामिष्टं, अन्नादीनां रामकृष्णादिवत् साक्षाद्ब्रह्मत्वस्य तैरुक्तत्वादिति, यदुक्तम्,

(खं.) तत्तुच्छं, अन्नप्राणादीनां ब्रह्मप्रतिपत्तिं प्रति प्रयोजकत्वस्य खण्डितत्वेनान्नादीनां द्वारत्वाभावात् ब्रह्मत्वस्याप्यभावे "अन्नं प्राणं चक्षुः श्रोत्रं" इत्यादेः ब्रह्मविद्यात्वाभावप्रसंगेन "भार्गवी वारुणी विद्या" इति उक्तब्रह्मविद्यात्वविरोधस्य दुष्परिहरत्वात्। अन्नप्राणादीनां ब्रह्मप्रतिपत्तिप्रयोजकत्वाभावादेव ब्रह्मप्रतिपत्तिपरिकरत्वाभावात् तदुक्तेः प्रश्नाननुगुणत्वापरिहारात्। "अन्न ब्रह्मेति व्यजानात्" इति वाक्येन अन्नब्रह्मशब्दयोः सामानाधिकरण्यादिना अन्नविशेष्यकब्रह्मत्वप्रकारकज्ञानाश्रय इत्येव स्वरसतः प्रतीतेः 'अन्नं ब्रह्म' अन्नस्य ब्रह्मजन्यत्वात् कार्येण कारणानुमानमिति रीत्याऽन्नं ब्रह्मप्रतिपत्तिसाधनं, इति व्यजानात् इति ज्ञानं प्राप्तवान् इत्यर्थस्याभानात् लक्षणादिना तथार्थकत्वे "आनन्दो ब्रह्मेति व्यजानात्" इत्यपि आनन्दस्य ब्रह्मजन्यत्वात् कार्येण कारणानुमानमिति रीत्या आनन्दः ब्रह्म प्रतिपत्तिसाधनं इति ज्ञानं प्राप्तवानित्यर्थकत्वापत्तेः, उभयोर्वाक्ययोरविशेषात्। शाखाग्रं चंद्र इत्युपदेशस्येवाभावेन शाखायां चन्द्रशब्दाश्रवणात्तद्दृष्टांतेन ब्रह्मशब्दस्य ब्रह्मत्वासाधकत्वोक्तेरयुक्तत्वात्। अन्नादिषु श्रुतस्य ब्रह्मशब्दस्य ब्रह्मत्वासाधकत्वे पुच्छादिषु श्रुतानां ब्रह्मशब्दानां ब्रह्मत्वासाधकत्वापत्तेर्विशेषाभावात्। परमात्मना सृष्टा तेजोभिमानिदेवता अबभिमानिदेवतामसृजत् इति यत्किंचिद्वस्तु प्रत्येव कारणत्वं। तदपि "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्युत्तरवाक्यानुसारेणेश्वराधिष्ठिततया ईश्वरनियम्यतयैव न स्वतन्त्रतयेति "तदैक्षत बहुस्यां प्रजायेयेति। तदपोऽसृजत" इत्यादिषु ब्रह्मलक्षणीभूतस्वतन्त्रसर्वकारण-

त्वस्यानुक्तत्वात् तस्यौपचारिकत्वोक्तिः श्रुत्यर्थाज्ञानविजृम्भितैव। शांकरीयोपनिषद्भाष्येऽपि तेजआदिपदस्य तदन्तर्यामिपरमात्मपरत्वमेवांगीकृतं, न तु तेजआद्यचेतनपरत्वमङ्गीकृत्य तस्मिन् जगत्कारणत्वलक्षणस्य गौणत्वं। तस्मात् स्वातंत्रतया सर्वजगत्कारणत्वस्य तेजआदौ अप्रतिपादनात्तस्योपचारत्वोक्तेः कारणाभावात्तद्दृष्टांतेनान्नादिषु श्रूयमाणकारणत्वस्यौपचारिकत्वोक्तेः असंगतत्वात् । निष्कारणं औपचारिकत्वांगीकारे "यतो वा इमानि भूतानि जायन्ते आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इति श्रुतकारणत्वस्याप्यौपचारिकत्वांगीकारप्रसंगेन 'न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरमुक्त्वाऽन्यतः प्रधानादचेतनात् अणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यं' इति त्वदीयसूत्रभाष्ये तेन कारणत्वेनान्येषां व्यावृत्तिः कृताऽसमंजसा स्यात् । तेजआदिपदस्य तदन्तर्यामिब्रह्मपरत्वं नास्माभिः स्वीकृतमित्यन्नादिशब्दस्यान्नाद्यन्तर्यामिनपरत्वापादनमसंगतमेवेति ।

(रा.) यत्त्वन्नमयादिपर्यायेषु श्लोकस्यान्नमयादिरूपावयविविषयत्ववदानन्दमयपर्यायेऽपि "असन्नेव स भवति" इति श्लोकस्यानन्दमयरूपावयविविषयत्वं वक्तुं युक्तं, न त्वानन्दमयावयवपुच्छविषयत्वमित्याशंक्य, तन्न, अन्नमयादिपर्यायश्लोकेऽष्वन्नमयादीनां यानि पुच्छानि तेषु निर्दिष्टशब्दानामिदंपदपृथिवीपदाथर्वांगिरसपदमह.पदानामभ्यासादर्शनेन तच्छ्लोकानां पुच्छरूपावयवाविषयत्वं पुच्छाद्यवयवयुक्तावयविविषयत्वं च स्वीकृतं। आनन्दमयपर्यायश्लोके "असन्नेव स भवति" इत्यत्र "ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयपर्यायपुच्छावयवप्रयुक्तब्रह्मपदस्याभ्यासदर्शनेनाऽऽनन्दमयपर्यायश्लोकस्याऽऽनन्दमयावयविविषयत्व – पुच्छब्रह्मविषयत्वयोरेव स्वीकार्यत्वात्, ब्रह्मशब्दाभ्यासस्य ब्रह्मणि तात्पर्यलिंगत्वात् इति दूषणं यदुक्तम्,

(खं.) तत्तुच्छं, चंद्रिकायां "असन्नेव स भवति" इति श्लोकस्याऽऽनन्दमयरूपावयविविषयत्वं वक्तुं युक्तं इत्यनुक्तत्वात्। उक्ता-

वत्यानन्दमयस्योक्तरीत्या ब्रह्मत्वे सिद्धे ब्रह्मपदघटितश्लोकस्याप्यानन्दमयरूपावयविविषयकत्वे बाधकाभावाच्च ।। चतुर्षु अवयविविषयतयोदाहृतत्वेन पञ्चमप्रकरणेऽप्यव्यवयविविषयताया एव प्रायपाठानुगुण्येन ग्राह्यत्वाच्च । आनन्दमयादीनां ब्रह्मत्वे मुख्यार्थलंघनस्याभावात्। पुच्छस्यैव ब्रह्मत्वमिति त्वत्पक्षे मुख्यार्थलंघनस्य सत्त्वात् । श्रुतिविरोधाभावात् न सूत्राणि अन्यथा व्याख्येयानि,

अनंतशाखातत्त्वार्थविदा सूत्रकृतेरितम् ।
कूपमंडूकवत्स्वल्पवाक्यज्ञोऽन्यथयेत्कथम् ।।

पौरुषेयेषु सूत्रेषु स्वायत्ते शब्दप्रयोगे सर्वज्ञः सूत्रकारः किमर्थं श्रुतिविरोधभ्रांतिकरं सूत्रनिर्माणं कुर्यात्। तस्मात् सूत्रे सूत्रकर्तरि भगवतिच विद्वेषादेव सूत्राणामन्यथाकरणमिति।

(रा.) इदं तु बोध्यं-माध्वमते 'एवं धर्मान् पृथक् पश्यन्' इत्यादिश्रुत्यनुरोधेनान्नमयत्वप्राणमयत्वादिधर्माणां अन्नत्वप्राणत्वादिधर्माणामन्नमयादिशरीराणां च ब्रह्मात्यन्ताभिन्नतयाऽन्नमयोपदेशेन 'अन्नं ब्रह्मेति व्यजानात्' इत्यादिना ब्रह्मोपदेशज्ञानयोर्निष्पन्नतया प्राणमयाद्युपदेशस्य 'प्राणो ब्रह्मेति व्यजानात्' इत्यादेः, 'पुनरेव वरुणं पितरमुपससार' इत्यादेश्च वैयर्थ्यमसांगत्यं च दुर्वारमेव, तत्तद्धर्मशरीराणां ब्रह्मात्यन्ताभिन्नतया धर्मभेदेन वा शरीरभेदेन वा पुनर्ब्रह्मोपदेशतज्ज्ञानयोर्वक्तुमयुक्तत्वादिति, यदुक्तं,

(खं.) तत्तुच्छं, यथा 'स्वे महिम्नि प्रतिष्ठितः' इत्यादावभेदेऽपि आधाराधेयभावनिर्वाहस्तत्तदसाधारणवस्तुस्वरूपापरपर्यायेण स्वभावविशेषेण, तथाऽन्नमयादिरूपाणामभेदेऽपि विशेषबलादेव पुनर्ब्रह्मोपदेशाज्ज्ञानयोः निर्वाहकरणात्, घटरूपयोरभेदेऽपि घटस्य ज्ञाततायाः रूपस्याज्ञाततायाः स्वभावविशेषेण त्वया निर्वाहस्य कृतत्वात् ।

ॐ आनन्दमयोऽभ्यासात् ॐ

सिद्धान्ते अधिकरणस्वरूपं तु– "तस्माद्वा एतस्माद्विज्ञानमयादन्योंतर आत्माऽऽनन्दमयः" इति तैत्तिरीयश्रुतावानन्दमयशब्दप्रतिपाद्यः विषयः किं चतुर्मुखः किं रुद्रः किं जीवः किं वा विष्णुरिति संदेहः। आनंदमयः चतुर्मुखो भवेत्, चतुर्मुखवाचकशतानन्दशब्दसमानार्थकशब्दप्रतिपाद्यत्वात्। रुद्रो वा भवेत्, रुद्राधिकरणसूर्याधारत्वात्। जीवो वा भवेत्, जीवाभिमन्यमानान्नमयकोशप्रायपठितत्वात्। न तु विष्णुः तस्याविकारित्वेन मयडंतशब्दबोध्यानन्दविकारित्वासंभवादिति पूर्वपक्षे, तस्य च 'सोकामयत' इति जगत्कारणत्वोक्त्या न ब्रह्मणः जगत्कारणत्वं लक्षणं सम्भवतीति प्राप्ते आनन्दमयशब्दप्रतिपाद्यः विष्णुरेव, विष्णावसाधारणब्रह्मशब्दाभ्यासात्। न च विकारार्थकमयडंतानन्दशब्दवाच्यत्वं न संभवतीति वाच्यं मयटः प्राचुर्यार्थत्वात्। न च विकारार्थमयडंतान्नमयादिप्रायपाठविरोधः, अन्नमयादिष्वपि विष्णवसाधारणानां ब्रह्मशब्दादीनां सत्त्वेन तेषामपि विष्णुत्वेन तद्गतमयटामपि प्राचुर्यार्थत्वात्। आनन्दमयस्य ब्रह्मत्वे तदवयवस्य 'ब्रह्मपुच्छं प्रतिष्ठा' इति ब्रह्मत्वोक्तिर्विरुध्यते इति न शंक्यं, ब्रह्मावयवावयविनोरभेदादिति यत्,

(रा.) तन्न. अन्नमये 'अन्नात्पुरुषः' इति जन्यत्वोक्त्या न जिज्ञास्यब्रह्मत्वं इति पूर्वपक्षोत्थानसंभवात्तत्सूचनार्थं प्रथमानतिक्रमणार्थं च सूत्रेऽन्नमयस्यैव निर्देष्टव्यतया पंचानां ब्रह्मत्वपक्षे चरमस्यानन्दमयस्य निर्देशानुपपत्तेः। किंचान्नमयस्य ब्रह्मत्वसाधने ब्रह्मशब्दाभ्यासरूपहेत्वसिद्धिश्च, अन्नमयपर्याये 'येऽन्नं ब्रह्म' इति सकृदेव ब्रह्मशब्दश्रवणात्। न चाभ्यासस्यात्मशब्दविषयत्वं, आत्मशब्दश्च 'आनन्दमयमात्मानमुपसंक्रामति, अन्नमयमात्मानमुपसंक्रम्य' इत्यादावन्नमयेऽप्यभ्यस्त इति वाच्यं, अभ्यासस्यात्मशब्दविषयत्वे

असन्नेव स भवति असद्ब्रह्मेति वेद चेत्।

इत्यादौ ब्रह्मशब्दाभ्यासात्' इति भवद्भाष्यविरोधप्रसङ्गात्। न च 'ब्रह्मशब्दाभ्यासात्' इत्यादि मध्वभाष्यस्थ 'ब्रह्मशब्द' इत्यस्य ब्रह्म-

वाचकशब्द इत्यर्थः। स च शब्दः आनन्दमयपर्याये ब्रह्मशब्दः, अन्यपर्यायेष्वात्मशब्द इति शंक्यं, 'तदेव ब्रह्म परमं कवीनां 'एतमेवब्रह्मेत्याचक्षते'

ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते।
असंपूर्णाः परे यस्मादुपचारेण वा भवेत्।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।
वासुदेवात्मकं ब्रह्म मूलमात्रेण वा यतिः॥

इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात्' इति मध्वभाष्यपर्यालोचनेन वकाररेफादिघटितसमुदायात्मक ब्रह्मशब्दस्यैवाभ्यासः इत्यवगमेन तद्विरोधप्रसंगेनात्मशब्दाभ्यासस्य वक्तुमशक्यत्वात्।

वस्तुतस्तु- जयतीर्थकृततत्त्वप्रकाशिकायां 'एकप्रकारासकृदुक्तिरभ्यासः' इत्युक्तत्वेन 'असद्ब्रह्मेति वेद चेत् इत्यादावसदस्तित्वप्रकारकशब्दाभ्यासस्याप्येकप्रकाराभ्यासत्वाभावेन भाष्ये ब्रह्मशब्दाभ्यासोक्तिरप्यसंगता इति, यदभ्यधायि,

(खं.) तत्तुच्छं, उपासनानुसारेण फलदातृत्वादानन्दरूपगुणस्य सर्वापेक्षितत्वेनानन्दपूर्णत्वेनोपासने ईश्वरः आनंदरूपं फलं ददातीति सर्वापेक्षितानन्दप्राप्तिफलकानन्दपूर्णत्वोपासनार्थं आनन्दपूर्णत्वज्ञानं प्रथममावश्यकमिति चरमस्याप्यानंदमयस्य प्रथमं निर्देश इति पूर्वाचार्यैरेवोक्तत्वादयमाक्षेपः पूर्वाचार्यग्रन्थानवलोकननिबंधन एव। आनंदमयविज्ञानमययोर्ब्रह्मशब्दाभ्याससत्वात् तद्विवक्षया ब्रह्मशब्दाभ्यासो हेतुः, न त्वन्नमयादिविवक्षया, येनासिद्धिः स्यात्। अत एवोक्तं भाष्ये येऽन्नं ब्रह्मेत्यादिरूपात्' इत्यत्र ब्रह्मशब्दादिति, क्वचिद्ब्रह्मशब्दाभ्यासादिति। टीकायामपि 'आनंदमये ब्रह्मशब्दाभ्यासात्' इति, 'अन्नमयादिष्प्रत्युदाहृतश्लोकेषु तद्विषयत्वेन ब्रह्मशब्दश्रवणात्' इति। अथवा 'ब्रह्मशब्दाभ्यासात्' इत्यस्य ब्रह्मवाचकशब्दाभ्यासादित्यर्थः। ब्रह्मवाचकात्मशब्दाभ्यासस्य पंचस्वपि विद्यमानत्वात्। न च 'तदेव ब्रह्म परमं कवीनां, एतमेव

ब्रह्मेत्याचक्षते, ब्रह्मशब्दः परे विष्णौ' इतिभाष्यपर्यालोचने ब्रह्म इत्यानुपूर्व्यवच्छिन्नस्य शब्दस्य प्रतिभासात् तद्विरोधप्रसंगेनात्मशब्दाभ्यासादिति वक्तुमशक्यमिति वाच्यं 'परं आत्मेति' आत्मशब्दस्यापि प्रमाणभाष्ये गृहीतत्वेन 'इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् इत्यादिपदस्य स्थापितत्वेन,

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य संततो भावस्तस्मादात्मेति भण्यते। इति,
आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते॥

इत्यादिप्रमाणानामप्यादिशब्देन स्वीकार्यत्वेन त्वदीयभाष्यपर्यालोचनस्यैव भ्रमत्वात्। टीकायां 'एकप्रकारासकृदुक्तिरभ्यासः' इत्येवोक्तं, न तु अस्तित्वरूपैकप्रकारकब्रह्मशब्दाभ्यास इति। अतो भाष्ये ब्रह्मशब्दाभ्यासोक्तिः सङ्गतैवेति। तस्मात्,

ब्रह्मशब्दात्समस्तात्तत्वादिलिंगाच्च वाक्यतः।
पूर्वोत्तरस्मान्मंत्रस्थब्रह्मप्रकरणादपि।
भृगुवल्लीसमाख्यानान्मुक्तगीतावसानकात्।
स्थानप्रमाणतश्चैव पंचानां ब्रह्मणा स्थिता॥ इति

इति आनंदमयाधिकरणं

समाप्तम्

## अन्तस्स्थत्वाधिकरणप्रारम्भः ॥



ॐ अंतस्तद्धर्मोपदेशात् ॐ

(चं.) (३०८) "य एषोन्तरादित्ये हिरण्मयः य एषोन्तरक्षिणि पुरुषो दृश्यते" इत्यक्ष्यादित्ययोरन्तस्स्थः प्रतीयते। स विद्याकर्मातिशयलब्धैश्वर्यः कश्चित्संसारी, न तु परमात्मा, "हिरण्यश्मश्रुः" इत्यादौ रूपादिश्रवणात्। परमात्मनश्चारूपत्वेन श्रुतत्वादिति प्राप्ते, परमात्मैवेति सिद्धान्तः, आदित्यवाक्ये 'सर्वेभ्यः पाप्मभ्य उदितः' इति श्रुतस्य सर्वपापराहित्यस्याक्षिवाक्ये 'सैवक्र्तत्साम' इत्यादौ श्रुतस्य सार्वात्म्यस्य च संसारिण्यसंभवात्। रूपादिकं तु नीरूपेऽपि सविशेषब्रह्मणि साधकानुग्रहार्थमैच्छिकमुपास्यंमायामयमस्ति। यद्वासर्वस्य कार्यजातस्य ब्रह्मोपादानकत्वादुपादेयस्य चोपादानानन्यत्वात्कार्यशरीरगतरूपादिभिर्ब्रह्म व्यपदिश्यते। मुमुक्षुं प्रति सविशेषनिरूपणं च मोक्षसाधननिर्विशेषब्रह्मज्ञानार्थम्। यथोक्तं,

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मंदास्तेनुकंप्यंते सविशेषनिरूपणैः ॥

इत्यादीत्याहुः। केचित्तु इदमेववाक्यमुदाहृत्यैवमेव च पूर्वपक्षयित्वा "तस्य यथा कप्यासं पुण्डरीकं" इति श्रुतं पुण्डरीकाक्षत्वं सिद्धान्तयुक्तिमाहुः। तदुभयमपि न, अस्मद्रीत्याऽऽनन्दमयाधिकरणाक्षेपायादृश्यत्वादिगुणोक्तस्य स्वप्रकरणस्थभेदव्यपदेशवतश्च वाक्यस्योदाहरणत्वसम्भवे तद्रहितस्य तदयोगात्। उक्तं हि

त्वयैव "य आदित्यमन्तरो यमयति" इति श्रुत्यन्तरे भेदव्यपदेशादिति। किं च,

नीरूपेऽपि च रूपादि यद्युपास्त्यर्थमुच्यते।
जीवेऽपि पाप्माभावादि तद्वदुपास्त्यर्थमुच्यताम्॥

**अविद्यमानारोपस्योभयत्र तुल्यत्वात्। तथा चापहतपाप्मत्वस्य जीवसाधारणतया तेनान्तस्स्थः परमात्मैवेति सिद्धान्तानुत्थितिरिति यदुक्तम्,**

(रा.) तन्न, जीवे व्यावहारिकस्य पाप्मनः सत्वेन तद्राहित्यं प्रातिभासिकमेव वाच्यं, ब्रह्मणि तु व्यावहारिकपापासंभवात् तद्राहित्य व्यावहारिकं। श्रुतेश्च व्यावहारिकविषयकत्वेन प्रामाण्यसंभवे प्रातिभासिकजीवगतापहतपाप्मत्वविषयकत्वसंभवेन 'स एषः' इति श्रुत्युक्तापहतपाप्मत्वस्य व्यावहारिकतया ब्रह्मसाधारणधर्मत्वाविरोधादिति यत्परेणोक्तं,

(खं.) तत्तुच्छं, त्वन्मते उपास्यस्यनामादौ ब्रह्मत्वादेः प्रातिभासिकत्वनियमेन तद्वदेव "अथ य एषः" इत्युपासनावाक्यस्य जीवगतप्रातिभासिकपापराहित्यविषयत्वसंभवात् जीवे पाप्मादेर्व्यावहारिकत्वेऽपि तद्राहित्यश्रुतेः त्वन्मतरीत्या त्वम्पदलक्ष्यशुद्धरूपाभिप्रायेण पारमार्थिकविषयकत्वसंभवात्। न च तथा सति ब्रह्मविषयत्वापत्तिः, त्वयाऽस्य सविशेषाशुद्धब्रह्मविषयत्वाङ्गीकारात्। त्वन्मते चोपासनावाक्यानां उपासनाकर्तव्यत्वे तात्पर्यस्य विद्यमानत्वेनोपासनाविषयीभूतेऽर्थे प्रातिभासिकव्यावहारिकभेदसद्भावेऽपि तत्रोपासनावाक्यानां तात्पर्याभावात्। तत्तात्पर्यविषयीभूतोपासनाकर्तव्यतायाश्च सर्वत्र व्यावहारिकत्वेन तत्र तात्पर्यवतां वाक्यानां प्रामाण्यसंभवेन जीवे पापराहित्यस्य प्रातिभासिकत्वाङ्गीकारेऽपि श्रुतेस्त्वन्मतरीत्याऽप्रामाणाख्यदोषाभावाच्च। व्यावहारिकप्रातिभासिकयोर्द्वयोर्बाधविलम्बाविलम्बरूपवैलक्षण्येऽपि अध्यस्तत्वेना-

तत्त्वत्वा द्व्यावहारिकविषयकत्वेऽपि अतत्त्वविषयकत्वेन तत्त्वावेदकत्वरूपप्रामाण्यविघातकतया प्रातिभासिकापहतपाप्मत्वविषयकत्वोक्तेर्निष्प्रयोजनत्वाच्च। एतेन,

(रा.) (१६८) नाम्नि व्यावहारिकस्यापि ब्रह्मत्वस्यासंभवेन नाम्नि ब्रह्मवोपासने उपास्तिविषयस्य ब्रह्मत्वस्य प्रातिभासिकत्वस्वीकारेऽपि ब्रह्मण्यपहतपाप्मत्वस्य "एष आत्माऽपहतपाप्मा" इत्यादिश्रुत्यंतरसिद्धस्य व्यावहारिकस्य प्रकृते उन्नामप्रवृत्तिनिमित्ततयाऽनुसन्धेयसर्वपापराहित्यरूपत्वसंभवे प्रातिभासिकस्य सर्वत्पापराहित्यस्योन्नामप्रवृत्तिनिमित्ततयोपास्यकोटिनिवेशायोगात् सति संभवेऽमुख्यं न ग्रहणमर्हतीति न्यायात् इति यदुक्तं,

(खं.) तत्परास्तं, व्यावहारिकप्रातिभासिकयोर्द्वयोरप्यध्यस्तत्वात् बाधविलम्बाविलम्बयोस्तत्त्वत्वातत्त्वत्वे प्रत्यप्रयोजकत्वात् व्यावहारिकविषयकत्वेऽप्यतत्त्वावेदकत्वेनाप्रामाण्यापरिहारादित्याद्युक्तदोषात् ॥

(रा.) (२६८) उपासनावाक्य एव सर्वत्रापहतपाप्मत्वसत्त्वेन तद्वाक्यस्योपासनाकर्तव्यतापरत्वेन तद्वाक्येनोपासनाया व्यावहारिकत्वसिद्धावपि अपहतपाप्मत्वादेर्न व्यावहारिकत्वसिद्धिरित्याशंक्य, सगुणवाक्यानामुपासनातात्पर्यकत्वेऽप्युपास्यधर्मः किं प्रातिभासिक उत व्यावहारिक इति विमर्शे दहरादिविद्यायां 'सत्यकामः सत्यसङ्कल्पः' 'सत्या कामाः अथ य इहात्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्' इत्यादिना काम्यमानानामपहतपाप्मत्वादीनां कामसङ्कल्पादीनां च सत्यशब्देनैव सत्यत्वोक्त्याऽपहतपाप्मत्वादिधर्माणां व्यावहारिकसत्यत्वस्यैवासति बाधके स्वीकर्तुमुचितत्वात् इति यदुदितं,

(खं.) तत्तुच्छं, उपासनावाक्यस्योपासनातात्पर्यकत्वेन तेनोपासनायाः व्यावहारिकत्वसिद्धावपि अपहतपाप्मत्वादौ तात्पर्याभावेन तस्य व्यावहारिकत्वासिद्धेः श्रीमच्चन्द्रिकादावनुक्तत्वेन तच्छंकाया एव निर्मू-

लत्वात्। न "त्वन्मते चोपासनावाक्यस्य तत्कर्तव्यतामात्रपरत्वेनार्थपरत्वाभावात् कर्तव्यतायां च व्यावहरिकप्रातिभासिकविभागाभावात्" इति वाक्येनोक्तेति वाच्यं, तस्मिन् वाक्ये, जीवे पापराहित्यस्य प्रातिभासिकत्वांगीकारेऽपि न दोषः तत्रोपासनावाक्यस्य तात्पर्यभावात्तात्पर्यविषयीभूतायामुपासनायां सर्वत्र व्यावहारिकत्वेन व्यावहारिकप्रातिभासिकविभागस्याभावेन त्वन्मन्तरीत्याऽप्रामाण्याप्रसक्तेरित्यभिप्रायात्। अपहतपाप्मत्वादेर्व्यावहारिकत्वासिद्धेरकथनाच्च। श्रुत्युक्तधर्मविषये प्रातिभासिक उत व्यावहारिक इति विमर्शस्यैव वेदप्रामाण्यवादिनासंभवात्, वेदस्य तत्त्वावेदकत्वेन तत्प्रतिपाद्यधर्माणां तत्त्वतासिद्धेः। यथाकथञ्चित्प्रसक्तावपि किं प्रातिभासिक उत व्यावहारिक उत पारमार्थिक इति विमर्शः कुतो न स्यात्। 'सत्यकामः सत्यसङ्कल्पः सत्याः कामाः' इत्यादिना काम्यमानानां चापहतपाप्मत्वादीनां कामसङ्कल्पादीनां च सत्य शब्दनैव सत्यत्वोक्त्या "सत्यं ज्ञानमनंतं ब्रह्म" इत्यादिना ब्रह्मण इव पारमार्थिकसत्यत्वस्यैव सिद्धेश्च। बाधकाभावेन पारमार्थिकसत्यत्वत्याग व्यावहरिकसत्यत्वस्वीकारयोरयोगात्। बाधकाभावेऽपि पारमार्थिकसत्यत्यागे ब्रह्मणोऽपि पारमार्थिकसत्यत्वत्यागप्रसङ्गात्। "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्याद्या श्रुतिः ब्रह्मगुणानां काल्पनिकत्वं प्रतिषेधति, स्वाभाविकत्वं व्यवस्थापयति इति "आनंदादयः प्रधानस्य" इति सूत्रभाष्ये आनंदादयः प्रधानस्य ब्रह्मणो धर्मास्ते सर्वत्र प्रतिपत्तव्या इत्यादिग्रन्थेन प्रधानस्य ज्ञेयब्रह्मणः आनंदादिधर्मसम्बन्धश्च प्रतिपादित इति शङ्कराचार्याणां श्रुतिस्मृतिसूत्राणां जीवब्रह्मभेदपरत्वस्य 'सगुणब्रह्मपरत्वव्युत्पादनं अभिमतमित्यवगम्य तत्परत्वमेव व्युत्पादितं अस्माभिर्विष्णुतत्त्वरहस्ये इत्यादिग्रन्थेन विष्णुतत्त्वरहस्यविवरणे शाङ्करभाष्यगांभीर्यनिर्णयादौ च त्वयैव ब्रह्मगुणानां पारमार्थिकत्वस्य कथितत्वेन व्यावहारिकत्वापरपर्यायाध्यस्तत्वोक्तयोगात्॥

(रा.) (१६९) यत्तूक्तं "सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यः" इति बृहदारण्यकश्रुत्या 'सत्यस्य' इति षष्ठ्यंतनिर्दिष्टब्रह्मस्वरूप-

व्यतिरिक्तसर्वसत्यापेक्षया 'सत्यः' इति प्रथमांतपदनिर्दिष्टब्रह्मस्वरूपसत्यस्योत्कर्षप्रतीत्या ब्रह्मस्वरूपसत्यापेक्षया धर्मसत्यानामपकर्षावश्यकतयाऽपहतपाप्मत्वादीनां सत्यत्वस्य व्याहारिकसत्यस्वरूपत्वावश्यकत्वात्' इति,

(खं.) तत्तुच्छं, "ज्योतिषां ज्योतिः, प्राणस्य प्राणं, चक्षुषश्चक्षुः, श्रोत्रस्य श्रोत्रं, मनसां यो मनो विदुः, चेतनश्चेतनानां"[1] इत्यादौ [2]ज्योतिषां ज्योतिः ज्योतिष्ट्वप्रदः अवभासक इति, चक्षुषः चक्षुः चक्षुष्ट्वप्रदः[3], प्राणस्य प्राणत्वप्रदः इति यथा बोध्यते, तथा सत्यशब्दवाच्यानां प्राणानां सत्यत्वप्रद इति बोधनात् प्राणादिसत्यतायाः व्यावहारिकत्वापरपर्यायामुख्यतायाः तेनासिद्धेः। अन्यथा परमात्मनि ज्योतिष्ट्वचक्षुष्ट्वादिकं पारमार्थिकत्वापरपर्यायोत्कर्षवत्, ज्योतिरादिषु व्यावहारिकत्वापरपर्यायापकर्षवदिति स्यात्। व्यावहारिकस्यारोपितत्वेन बाध्यत्वेन च सत्यपदार्थानन्तर्भूतत्वात् "सत्यस्य सत्यं प्राणा वै सत्यं" इति वाक्येन प्राणादीनां त्वद्रीत्या व्यावहारिकत्वापरपर्यायापकर्षवत्सत्यत्वबोधनेऽपि ब्रह्मधर्माणामनेन व्यावहारिकत्वासिद्धेश्च, बृहदारण्योक्तप्राणत्वस्य ब्रह्मधर्मेष्वभावात् ॥

(रा.) (१६९) यत्तु, अपकृष्टसत्यत्वमेव हि व्यावहारिकसत्यत्वं, उत्कृष्टसत्यत्वं च पारमार्थिकसत्यत्वं, पारमार्थिकत्वं च कालत्रयाबाध्यत्वं, व्यवहारकालमात्राबाध्यत्वं व्यावहारिकसत्यत्वं। 'सत्यं चानृतं च सत्यमभवत्' इति सत्यतादर्थ्येन प्रतिपादितानृतशब्दितप्रातिभासिकत्वं, प्रतीयमानत्वे सति व्यावहारकालबाध्यत्वमिति व्यवस्थेति जल्पितं,

(खं.) तत्तुच्छं, व्यावहारिकप्रातिभासिकपारमार्थिकसत्तात्रैविध्ये मानाभावेन व्यावहारिकप्रातिभासिकयोः स्वरूपकथनस्य शशविषाणस्व-

1. बृ. ४. ४. ३१. 2. आदित्याज्योतिषामवभासकत्वादित्यादिशांकररीत्या 3. दर्शनशक्तिप्रदः।

रूपकथनतुल्यत्वात् । त्वदभिमतानृतशब्दितप्रातिभासिकत्वस्य 'सत्यं चानृतं च सत्यमभवत्' इति श्रुत्या सत्यतादर्थ्येन प्रतिपादनाभावात् । त्वयैव विष्णुतत्त्वरहस्यविवरणे सत्यानृतादौ परमात्मनः प्रवेशनिमित्तेन तद्धर्मव्यपदेश इति उक्तत्वेन परमात्मप्रवेशयोग्यपदार्थस्यैव अनृतशब्देन वक्तव्यतया शशविषाणायितप्रातिभासिके प्रवेशासंभवेन सत्यशब्दस्य साधुत्वार्थतया तत्प्रतिद्वंद्वितया गृहीतस्य अनृतशब्दस्य साधुभिन्नासाधु वस्तुपरतया व्याख्येयत्वाच्च । प्रातिभासिकतया त्वदङ्गीकृते ब्रह्मज्ञान निवर्त्ये ब्रह्मण्यारोपितक्षणिकत्वादौ व्यावहारकालबाध्यत्वलक्षणस्याभावात्प्रातिभासिकलक्षणस्य त्वद्रीत्या अव्याप्तेश्च। शशविषाणस्य कदाप्यबाध्यत्वेन कालत्रयाबाध्यत्वस्य तत्र सत्त्वेन परमार्थिकलक्षणस्य त्वन्मतरीत्या अतिव्याप्तेश्च । व्यावहारिकत्वेन त्वदभिमतजगतः व्यवहारकाल एव अनुमानागमबाध्यत्वांगीकारेण व्यावहारिकलक्षणस्यांसंभविवाच्च"

(चं.) (३१०) यच्च उपादानं ब्रह्म कार्यकारणयोरभेदात् कार्यगतधर्मैः रूपादिभिः व्यपदिश्यत इति नान्तस्स्थस्य परमात्मत्वे रूपादिकं बाधकमिति, तन्न, स्वर्णे कटकत्वादेरिव कटकादावपि स्वर्णत्वस्य व्यवहारेण ब्रह्मधर्मैः अपहतपाप्मत्वादिभिः कार्य एव व्यपदेशोपपत्तेः तथाच नापहतपाप्मत्वादिभिः अन्तस्स्थस्य परमात्मत्वनिश्चय इति यत्,

(रा.) (१७०) तन्न, कारणधर्मेण कारणतावच्छेदकधर्मभिन्नेन कार्यव्यपदेशस्वीकारे कारणीभूतमृद्गतेन शरावत्वेन कार्यस्य घटस्य शरावो घट इति व्यपदेशापत्तेरिति, यदुक्तं,

(खं.) तत्तुच्छं, कार्यगतधर्मैः कारणं व्यपदिश्यते इति अङ्गीकारेऽपि घटादिगतजलाधारत्वपृथुबुध्नोदराकारत्वादिधर्मैः मृदोपि मृत् पृथुबुध्नोदराकारेत्यादिव्यवहारापत्तेः साम्यात् । कार्यगतैः सर्वैः धर्मैः

कारणं नियमेन व्यपदिश्यते इति नियमानंगीकारेण उक्तापत्तिपरिहारे, कार्यकारणगतैः सर्वैः धर्मैः कार्यं नियमेन व्यपदिश्यत इति नियमस्यास्माभिरनंगीकारेण त्वदुक्तापत्तेरप्यसंभवात्। कार्यगतधर्मव्यपदेशस्य कारणे संभव इत्युक्तौ कारणगतधर्मव्यपदेशस्यापि कार्ये संभव इत्येव चन्द्रिकाकारैरुक्तत्वेन नियमानंगीकारात्॥

(चं.) (३११) मुमुक्षुं प्रति सविशेषनिरूपणं च मोक्षसाधननिर्विशेषब्रह्मज्ञानार्थं। यथोक्तं कल्पतरौ,

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः। इति,

तन्न, "उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद" इति श्रुतसर्वपापनिवृत्तिरूपमुक्तिफलहानस्याश्रुतफलान्तरकल्पनस्य चायोगादिति यदुक्तं,

(रा.) (१७०) तन्न, निर्विशेषज्ञानविरोधिसर्वपापनिवृत्तिफलस्योपासनस्य निर्विशेषज्ञानार्थत्वसम्भवात्, श्रुतहान्यभावाच्च इति यत्,

(खं.) तत्तुच्छं, रूपादिमति इन्द्रियाणां, व्यापकतावच्छेदकवति अनुमानस्य, शक्यतावच्छेदकलक्ष्यतावच्छेदकादिमति आगमस्य प्रवृत्तेः निर्विशेषे ब्रह्मणि प्रमाणप्रवृत्तिप्रयोजकानां रूपादीनामभावात् निर्विशेषज्ञानमेव नोत्पत्तुमर्हति, दूरे तस्य मोक्षकारणत्वं। निर्विशेषज्ञानस्य मोक्षकारणताबोधकप्रमाणानि तु नोपलभ्यंत एव। प्रत्युत सविशेषज्ञानस्य मोक्षजनकत्वबोधकानि "तमेवं विद्वानमृत इह भवति"

"नित्यो नित्यानां चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्।
तमात्मस्थं येनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषां"
"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं।

तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति"
"जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः"
"पृथगात्मानं प्रेरयितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"
यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत ॥

इत्यादीनि श्रुत्यादीनि प्रमाणानि। "तमेवम्" इति श्रुतौ एवं सहस्रशीर्षत्वादिरूपेण विद्वान् अमृतो भवतीति सहस्रशीर्षत्वादिप्रकारकज्ञानस्य, द्वितीये 'तमात्मस्थं' इति काम्यमानपदार्थनिर्मातृत्वचेतनत्वप्रदत्वात्मस्थत्वादिविशिष्टज्ञानस्य, तृतीये रुक्मवर्णत्वकर्तृत्वनियामकत्वचतुर्मुखकारणत्वादिप्रकारकज्ञानस्य, 'चतुर्थे महिमानं पश्यति' इति माहात्म्यप्रकारकज्ञानस्य, पंचमे प्रेरकत्वभिन्नत्वादिगुणविशिष्टज्ञानस्य, षष्ठे क्षराक्षरातीतत्वसर्वात्मत्वसर्वरक्षकत्वेश्वरत्वादिज्ञानस्य मोक्षजनकत्वोक्तेः। विष्णुतत्वरहस्यविवरणादिग्रंथे धर्माणां पारमार्थिकत्वं, ब्रह्मणः सविशेषत्वं, सगुणज्ञानस्यैव मोक्षजनकत्वं "पृथगात्मानं" इत्यादिश्रुत्या बोध्यते इति सूत्रकृन्मतानुसारिश्रुत्युपन्यासप्रकरणे त्वया स्वीकृतत्वाच्च। निर्विशेषज्ञानस्यैवासंभवेन पापस्य तदुत्पत्तिप्रतिबंधकत्वरूपविरोधित्वस्यैवासंभवात्। त्वन्मते ज्ञानस्य अज्ञानमात्रनिवर्तकत्वेन निर्विशेषज्ञानप्रतिबंधकस्य दुरितस्य सविशेषज्ञानकार्यत्वाभावेन अज्ञाननिवृत्तिद्वारा तन्निवृत्तेरयोगाच्च। नित्यकर्मणा दुरितनिवृत्तेः नित्यकर्मणामपीह शास्त्रे निरूपणापत्तेश्च। तस्मात् सविशेषज्ञानस्य निर्विशेषज्ञानार्थत्वोक्तौ श्रुतहानाश्रुतकल्पनयोरपरिहार एव ॥

(चं.) (३११) सविशेषज्ञानं निर्विशेषज्ञानकारणमिति न संभवति, निर्विशेषशब्देन विशेषाभावविशिष्टोक्तौ त्वन्मते तस्य विशिष्टज्ञानत्वेन मोक्षाहेतुत्वात्। तदभावोपलक्षितस्योक्तौ च काकेन गृहसंस्थानविशेषस्येव विशेषाभावेन विशेषस्यैवोपलक्ष्य-

त्वे तस्य विशिष्टग्राहिणा प्रागेव ज्ञातत्वात् अन्यस्योपलक्ष्यस्याभावात्। उपलक्ष्यत्वाकारेण ज्ञानस्य त्वन्मते मोक्षासाधनत्वात्। न च विशेषणाविषयं विशेष्यज्ञानं प्रागसिद्धमिति वाच्यं, विशिष्टज्ञानस्य विशेषणज्ञानाभावार्थत्वायोगात्। तथा च,

विशिष्टब्रह्मधीसाध्या शुद्धधीरित्यसंगतं।
विशिष्टप्रत्यये यस्माद्विशेष्यं भासतेतरां। इति यत्,

(रा.) (१७०) तन्न, भावाद्वैतपक्षे विशेषाभावविशिष्टज्ञानस्य विशिष्टज्ञानत्वेपि मोक्षहेतुत्वाविरोधात्। सर्वाद्वैतपक्षे विशेषत्वावच्छिन्नाभाववत् ब्रह्मेत्याकारकज्ञानजन्यं विशेषतदभावनिष्ठप्रकारत्वानिरूपितब्रह्मनिष्ठविषयतानिरूपकं यत् ज्ञानं निर्विकल्पकाख्यं तस्यैव मोक्षहेतुत्वात्। निर्विशेषत्वं चास्मिन् पक्षे इतरविषयतानिरूपितविषयताशून्यत्वे सति विषयतावत्त्वं। इदमेव विशेषाभावोपलक्षितत्वमिति शब्देन व्यवह्रियते इति यदुक्तं,

(खं.) तत्तुच्छं, भावाद्वैतपक्षस्यैवायोगात्। तथा हि—ब्रह्मव्यतिरेकेण भावस्याभावः अभावस्य तु भावः इति हि भावाद्वैतपक्षः। तस्मिन प्रमाणं "एकमेवाद्वितीयं नेह नानास्ति किंचन इदं सर्वं यदयमात्मा" इत्यादिश्रुतिरिति वक्तव्यं। तत् त्वन्मतरीत्यैवायुक्तं, अद्वितीयपदस्य द्वितीयसामान्याभावार्थकत्वे ब्रह्मातिरिक्तभावस्येव अभावस्यापि तेन निषेधात्। एवं "नेह नानास्ति किंचन" इत्यत्रापि त्वन्मतरीत्या द्वितीयवस्तुसामान्यस्य निषेधेन भावस्येवाभावस्यापि निषेधात्। "इदं सर्वं यदयमात्मा" इत्यस्य अद्वैतिभिः सर्वं आत्मव्यतिरेकेणासदिति अर्थांगीकारेण तत्रापि अभावस्य निषेधात्। न चाद्वितीयपदेन द्वितीयाभावस्य बोधनेन तस्य निषेधे अद्वितीयपदेनैव विरोधप्रसक्तेः ब्रह्मातिरिक्तं द्वितीयमभावमंगीकृत्य भावो निषिध्यत इति वाच्यं, यस्याभावांगीकारे प्रमाणविरोधस्तं परित्यज्य तदितरस्याभावः बोध्यत इत्यंगीकारः कृतः स्यात्।

तथाच विश्वं सत्यं" इति श्रुत्या, घटः सन् इत्यादिप्रत्यक्षेण, "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुत्या च कालादीनां सत्त्वबोधनात् तद्व्यतिरिक्तानां शशविषाणादीनामसत्त्वबोधकं भवतीत्यंगीकार्यत्वेन भावाद्वैतस्याप्यसिद्धेः। अद्वितीयमिति मृद्व्यतिरेकेण मृदो यथान्यत् घटाद्याकारेण परिणामयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयवस्त्वंतरं प्राप्तं प्रतिषिध्यते 'अद्वितीयमिति' इति छांदोग्यशांकरभाष्ये अद्वितीयपदस्य जगन्निर्माणे सहकारिभूतद्वितीयवस्त्वभावपरतया व्याख्यातत्वेन, तेन सामान्यतः द्वितीयवस्त्वभावासिद्धेः। एतादृशश्रुतीनां अन्यार्थत्वस्य जगत्सत्यत्वप्रकरणे उक्तत्वाच्च। अभावस्य पारमार्थिकत्वांगीकारे समसत्ताकयोरेव भावाभावयोर्विरोधात् व्यावहारिकेण भावेन अभावस्य विरोधवार्ताया लोपप्रसङ्गाच्च। वह्निरुष्ण इत्यनुमितेरपि पारमार्थिकौष्ण्याभावविषयकत्वेन वह्निरुष्ण इति व्यावहारिकौष्ण्यग्राहकप्रत्यक्षेण विरोधाभावप्रसङ्गाच्च। सार्वज्ञ्यादीनां मिथ्यापदार्थघटितत्वेन मिथ्यात्वाङ्गीकारेण घटाभावादीनामपि मिथ्याभूतघटादिप्रतियोगिकत्वेन मिथ्यात्वस्य त्वन्मतरीत्या दुर्वारत्वाच्च। अन्यथा सर्वज्ञत्वादीनामपि सत्यत्वापत्तेः। जगतः भेदादेश्च सत्यत्वमङ्गीकुर्वता त्वया भावाद्वैतपक्षस्यानङ्गीकृतत्वाच्च। 'सर्वाद्वैतपक्षे' इत्यादिकथनमप्यसङ्गतमेव, कर्तृत्वादिगुणविशिष्टज्ञानं, तेन विशेषाभाववद्ब्रह्मेति ज्ञानं, तेन विशेषतदभावनिष्ठप्रकारत्वानिरूपितब्रह्मनिष्ठविषयतानिरूपकं निर्विकल्पकाख्यं ज्ञानं, तस्य मोक्षजनकत्वमिति कल्पनायाः अप्रामाणिकत्वात्। भेदादिविशिष्टब्रह्मज्ञानस्य मोक्षजनकत्वमिति त्वदुक्तिविरुद्धत्वाच्च। सर्वाद्वैते प्रमाणाभावस्योक्तत्वाच्च ॥

(चं.) (३१२) किञ्च सविशेषज्ञानं निर्विशेषज्ञानं प्रति न तावद्दृष्टद्वारा हेतुः, तद्विशिष्टज्ञानजन्येनाज्ञानध्वंसेन चित्तवशीकरणेन वा तदभावविशिष्टज्ञानस्य वा तदभावोपलक्षितज्ञानस्य वा तद्विशेषणाज्ञानस्य क्वाप्यदर्शनात्। रूपादियुक्त-

परागभूतसविशेषज्ञानेन तद्विपरीतनिर्विशेषज्ञानायोगाच्चेति यद-वादि,

(रा.) (१७१) तन्न, चित्तवशीकरणस्य विपरीतभावनानिवृत्तिद्वारा विज्ञानहेतुत्वस्य प्रतिबंधकसत्त्वस्थले सर्वत्र क्लृप्ततया तज्जनक-सविशेषध्यानस्य दृष्टविधयैव निर्विशेषज्ञानहेतुत्वाविरोधादिति यत्,

(खं.) तत्तुच्छं, चित्तवशीकरणं नाम इतस्ततः सञ्चरतो मनसः एकविषयकत्वसंपादनं, विपरीतभावना नाम भ्रमजन्यसंस्कारः। स्मृत्यादिना स च निवर्तते, न तूक्तरूपचित्तवशीकरणेनेति चित्तवशीकरणस्य विपरीतभावनानिवृत्तिद्वारा विज्ञानहेतुत्वं न क्लृप्तं। अस्तु वा यथा-कथंचिदन्यत्र, निर्विशेषज्ञानप्रतिबन्धकीभूतविपरीतभावना च ब्रह्म सवि-शेषमित्याकारकज्ञानादिजन्यसंस्काररूपैव। सा च सविशेषज्ञानेन वा तज्जन्यचित्तवशीकरणेन वा दृढैव भवति, न तु निवर्त्यैति सविशेषज्ञान-जन्येन चित्तवशीकरणेन विपरीतभावनानिवृत्तिद्वारा निर्विशेषज्ञानं जायत इत्यस्यायुक्तत्वात् ॥

(चं.) (३१२) नाप्यदृष्टद्वारा सविशेषज्ञानं निर्विशेषज्ञान-हेतुः, विहितक्रियाजन्यत्वाददृष्टस्य त्वन्मते च ज्ञानस्याविधेय-त्वात्। नापि ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा, तस्य नित्यादि कर्मणैव निवृत्तेः। नित्यादिकर्मणामपि इहैव शास्त्रे निरूपणा-पत्तेश्च। त्वन्मते ज्ञानस्याज्ञानमात्रनिवर्तकत्वाच्च। न च व्याव-हारिकं दुरितं व्यावहारिकसविशेषब्रह्माज्ञानकार्यं, येनाज्ञाननि-वृत्त्या तत्कार्यं पापं निवर्तेत। एतेन सविशेषज्ञानसंतानरूपं निदिध्यासनमदृष्टद्वारा, दुरितनिवृत्तिद्वारा वा, चित्तवशीकरण-द्वारा वा निर्विशेषज्ञानार्थमिति निरस्तं, श्रुतहान्याद्यापातादिति चंद्रिकायां,

(रा.) (१७१) "एतेन सविशेषज्ञानं नादृष्टद्वारा निर्विशेषा-परोक्षहेतुः" इत्यादिः "श्रुतहान्यापातात्" इत्यन्तो मध्वचन्द्रिकाग्रंथः परास्तः, अनुक्तोपालम्भत्वादिति यदुक्तं,

(खं.) तत्तुच्छं, "निर्विशेषज्ञानविरोधिसर्वपापनिवृत्तिफलस्योपासनस्य निर्विशेषज्ञानार्थत्वसंभवात्" इति ज्ञानप्रतिबन्धकदुरितनिवृत्तिद्वारा इति पक्षस्य त्वयैव स्वीकृतत्वेन सम्भावितत्वात् सम्भावितपक्षान् विकल्प्य दूषणकरणस्य शास्त्रसम्प्रदायसिद्धत्वेन अनुक्तोपालम्भनत्वोक्तेः शास्त्रसम्प्रदायाज्ञानमूलत्वात् ॥

(चं.) (११३) एतेन सविशेषज्ञानसंतानरूपं निदिध्यासनमदृष्टद्वारा दुरितनिवृतिद्वारा वा चित्तवशीकरणद्वारा वा निर्विशेषज्ञानार्थमिति निरस्तं, श्रुतहान्याद्यापातात्। सविशेषनिदिध्यासनस्यापि निर्विशेषनिदिध्यासनवत्स्वविषयापरोक्षहेतुताया एव युक्तत्वाच्च। दशमस्त्वमसीत्यादाविव शाब्दे ज्ञाने चित्तवशीकरणानपेक्षणाच्च। आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्च निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनादेव सिद्धेः। चित्तवशीकरणाभावे सविशेषनिदिध्यासनस्यैवायोगच्चेत्यत्र,

(रा.) (१७०) आपरोक्ष्यहेतुचित्तैकाग्र्यादेश्च निर्विशेषपरोक्षज्ञानाधीनतन्निदिध्यासनादेव सिद्धेरिति यदुक्तं, तन्न, उपायस्य उपायांतरादूषकत्वात्। अन्यथा "व्रीहिभिर्यजेत" इत्यनेनावगतसाधनभावव्रीहीणामेव पुरोडाशयागसाधनत्वसम्भवे 'यवैर्यजेत' इत्यनेनावगतसाधनभावयवानां पुरोडाशयागसाधनत्वानापत्तेः। यत्तूक्तं, दशमस्त्वमसीत्यादि, तदपि न, दशमस्त्वमसीत्यादौ विपरीतभावनारूपप्रतिबन्धकाभावेन चित्तैकाग्र्यानपेक्षणेऽपि 'तत्त्वमसि' इत्यादौ तादृशप्रतिबंधसत्त्वेन तन्निवर्तकचित्तैकाग्र्यस्य सविशेषध्यानाधीनस्यापेक्षितत्वादिति ॥

(खं.) 'सविशेषज्ञानसन्तानरूपं निदिध्यासनं चित्तवशीकरणद्वारा निर्विशेषज्ञानार्थं' इत्यत्र निर्विशेषज्ञानशब्देन निर्विशेषविषयकशाब्दज्ञानं विवक्षितं, किं वा निर्विशेषविषयकापरोक्षज्ञानं। नाद्यः, दशमस्त्वमसीत्यादाविव शाब्दे ज्ञाने चित्तवशीकरणानपेक्षणात्। न द्वितीयः, निर्विशेषापरोक्षज्ञानस्य निर्विशेषनिदिध्यासनं विनाऽसिद्धेः। निर्विशेषापरोक्षहेतुभूतचित्तैकाग्र्यादेश्च सविशेषविषयकनिदिध्यासनादिव अवश्यापेक्षितनिर्विशेषविषयकनिदिध्यासनादेव सिद्धेः। चित्तैकाग्र्यमन्तरा सविशेषध्यानस्याप्यसम्भवेन पूर्वं विद्यमानस्य चित्तैकाग्र्यस्य सविशेषनिदिध्यासनकार्यत्वानुपपत्तेश्च। सविशेषध्यानस्य तदर्थं शास्त्रे सविशेषनिरूपणस्य चानावश्यकत्वादिति चन्द्रिकायां दूषणमुक्तं। व्रीहिसाध्ये यागे यवानां अनावश्यकत्वात्, यवसाध्ये व्रीहीणामनावश्यकत्वात् परस्परनिरपेक्षतया तत्र एकेन अन्यस्यासाधनत्वानापत्तावपि, सविशेषनिदिध्यासनेन चित्तैकाग्र्यसम्पादनपक्षेऽपि चित्तैकाग्र्यहेतुभूतनिर्विशेषनिदिध्यासनस्यावश्यकत्वेन तेनैव निर्विशेषापरोक्षहेतुभूतचित्तैकाग्र्यसम्भवेन सविशेषध्यानस्य तदर्थं शास्त्रे सविशेषनिरूपणस्य चानावश्यकत्वात् अन्यथासिद्धस्य उपायत्वाभावाच्च। तीर्णसरितो दशपुरुषाः नद्याः परे तीरे तिष्ठन्तः सन्तः दशापि वयं नदीपारं गता न वा इति सन्देहेन गणनमारेभिरे। तद्वेलायां स्वात्मानं परित्यज्य तैस्तैः 'अयमेकः: अयं द्वितीयः' इत्येवं प्रकारेण 'अयं नवमः' इत्यन्तां गणनां कृत्वा दशमः नद्यां मग्न इति चिन्ताकरणस्यावसरे मार्गस्थ आगत्य दशमस्त्वमसीति उक्तवान्। तदुक्त्या प्रत्येकं स्वस्य दशमत्वं ज्ञातं इति हि गाथा। तत्रापि दशमाभावज्ञानजन्यसंस्कारात्मकविपरीतभावनारूपप्रतिबन्धकस्य सत्त्वात् प्रतिबन्धकाभावोक्तेरयुक्तत्वाच्च। तत्त्वमसीतिवाक्येन अद्वैतिरीत्या जायमाननिर्विशेषज्ञानस्य प्रतिबन्धिकायाः विपरीतभावनायाः सविशेषनिदिध्यासनेन वा तज्जन्यचित्तैकाग्र्येण दृढतायां एव प्राप्तेः निवृत्त्यसम्भवादित्युक्तत्वाच्च ॥

(चं.) (३१३) नापि सविशेषध्यानं निर्विशेषध्यानार्थमिति द्वितीयः, ज्ञानविशेषो ध्यानमिति अन्यत्रोक्तत्वात्। इह 'य एवं-

वेद' इति ज्ञानार्थविदधानुश्रवणाच्च। भगवति रूपं तात्त्विकमित्यन्यत्रोक्तत्वाच्च। 'हिरण्मयः पुरुषो दृश्यते' इत्यपरोक्षज्ञान विषयत्वोक्तेश्च। न हि योषिति अग्नित्वं दृश्यत इत्युच्यत इति यत्,

(रा.) (१७१) तन्न, तात्त्विकं भगवतो रूपमन्यत्रोक्तत्वादिः त्यस्य भवद्वाक्यस्यासङ्गतत्वात्। प्रसिद्धश्रुतिस्मृत्यादिषु भगवतस्तात्त्विक रूपमित्याकारकवाक्यस्यादर्शनात्। "अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यत्र सर्वमतेऽपि वर्तमानक्षणे तद्रूपदर्शनस्य अस्माकं वा भवत वा अभावेन दृशिधातोर्लक्षणया शास्त्रजन्यज्ञानपरतया व्यावहारिकस्यापि हिरण्यश्मश्रुत्वादेः शास्त्रजन्यज्ञानविषयत्वाविरोधादिति यदुदितं,

(खं.) तत्तुच्छं, चन्द्रिकावाक्यार्थाज्ञानविजृंभितत्वात्। तथा हि–चन्द्रिकायां "इह "य एवं वेद" इति ज्ञानार्थविदधातुश्रवणाच्च" इति पूर्ववाक्येन हिरण्मयपुरुषविषयकवेदनस्य ज्ञानत्वोक्तिरयुक्ता, भगवद्रूपस्यातात्त्विकत्वेन अतात्त्विकभगवद्रूपविषयकज्ञानस्यासम्भवात्, "योषितमग्निं ध्यायीत" इत्यादौ अविद्यमानाग्नित्वादिप्रकारकध्यानस्य दर्शनेन अतात्त्विकभगवद्रूपविषयकस्य ध्यानत्वमेव वक्तव्यमिति उद्गतिना शङ्कयेतेति 'भगवती रूपं तात्त्विकमिति अन्यत्र न्यायामृते उक्तत्वात् रूपस्य तात्त्विकत्वेन तादृशरूपविषयकस्य ज्ञानत्वसम्भवात्'इति चन्द्रिकाकारैरुक्तं! एवं तदाशयमनवबुध्य 'भगवति रूपं तात्त्विकं' इति वा 'भगवतस्तात्त्विक रूपं' इति वा आनुपूर्वीविशिष्टप्रमाणवाक्योदाहरणं कृतमिति भ्रांत्येत्थमुक्तमिति। विष्णुतत्त्वरहस्यादिग्रन्थे "स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिना भगवतो रूपं तात्त्विकमिति सिद्ध्यतीति त्वयैवाङ्गीकृतत्वेन तद्विषयकप्रमाणदर्शनादर्शनविचारस्य तवानुपयुक्तत्वाच्च। भगवतो रूपं तात्त्विकमिति अस्माभिरपि विश्वरूपादिसत्यत्वविचारे व्यवस्थापितत्वाच्च। "हिरण्मयः पुरुषो दृश्यते.... निवृत्तचक्षुर्भिः समाहितचेतोभिः ब्रह्मचर्यादिसाधनसापेक्षैः इति छांदोग्यशांकरभाष्ये स्पष्टं हिरण्मयपुरुष

स्य अपरोक्षज्ञानविषयत्वोक्तेः 'सर्वमतेपि' इत्यादिजल्पनस्य शांकरभाष्या-परिशीलननिमित्तत्वाच्च' "पश्यामि देवान् तव देव देहे" इत्यादिषु तत्कालीनापरोक्षज्ञानाभिप्रायेण वर्तमानार्थकप्रत्ययप्रयोगदर्शनेन शास्त्र-सम्प्रदायाज्ञानमूलत्वाच्च ।।

(चं.) (३१४) किंच योषिदादेरग्नित्वाद्यभावेऽपि तथा ध्यानवन्निर्विशेषब्रम्हण एव हिरण्यश्मश्रुत्वादिना ध्यानसंभवेन सविशेषब्रम्यणः साधकानुग्रहार्थं ऐच्छिकरूपपरिग्रहोक्तिरयुक्ता। तस्मान्न सविशेषनिरूपणं निर्विशेषज्ञानार्थं । अन्यथा वैपरीत्यं स्यात्। 'सत्यं ज्ञानं' इत्यादिसद्ब्रम्हनिरूपणमपि "असद्वा इदमग्र आसीत्" इत्यादिश्रुतिसिद्धासद्ब्रम्हज्ञानार्थं स्यात् । एवञ्च,

असद्रूपं परं ब्रम्ह साक्षात्कर्तुमनीश्वराः ।
ये मन्दास्तेऽनुकंप्यन्ते सद्ब्रम्हप्रतिपादनैः।।
निर्विशेषं परं धर्ममनुष्ठातुमनीश्वराः ।
ये मन्दास्तेऽनुकंप्यन्ते सविशेषनिरूपणैः।।"

इति स्यात् । शक्यं हि ब्रम्हकांडे लक्षणया निर्विशेषब्रम्हेव कर्म-कांडेऽप्यग्निहोत्रादिसविशेषधर्मविलक्षणः कश्चिन्निर्विशेषो धर्मः प्रतिपाद्यते इति वक्तुमिति यदभिहितं,

(रा.) (१७२) तन्न,

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि ।।"

इत्यदाहृतप्रसिद्धमोक्षधर्मवचनरीत्या मायापरिणामरूपस्य,

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ।।

इत्यादिगीतावचनैरैच्छिकत्वेन निरूपितस्य शरीरस्य मायोपाधिरहिते निर्विशेषे ब्रह्मण्यध्यसनायोगेन सगुणमायोपहितब्रह्मण्येव तस्यावश्यं वाच्यत्वात्। न ह्यौचित्यं विनाध्यासः संभवति। अन्यथा शुक्ताविव पाषाणेपि रजताध्यासप्रसङ्गात्। मायोपहिते ब्रह्मणि अध्यासं विनैव शरीरवत्त्वलक्षणरूपसंभवे निर्विशेषे रूपवत्त्वाध्यासकल्पनानुपपत्तेश्चेति यदुदितं,

(खं.) तत्तुच्छं, "माया ह्येषा मया सृष्टा" इति वाक्येन,

एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते।
इच्छन् मुहूर्तान्नश्येयं ईशोऽहं जगतां गुरुः॥
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।"

इति पूर्ववाक्यसहितेन 'घटादिवत् परमात्मा रूपवानिति दृश्यते, इति त्वया न विज्ञेयं; दर्शनदानेच्छाभावे नश्येयं अदृश्यो भवामि भक्ति बिना अहं न दृष्टिविषयः ; अहं तथा करणे ईशः; मां पश्यसीति यत्, एषा माया मायया[1] इच्छया मया सृष्टा' इति ईश्वरदर्शनस्य ईश्वरेच्छाधीनत्वमेव बोध्यते, नतु ईश्वररूपस्य अविद्याकल्पितत्वरूपं मायिकत्वमिति, एतदध्यायारम्भ एव

एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः।

2

इति श्लोके विश्वरूपादीनां सत्यत्वबोधनात्। विष्णुतत्त्वरहस्यविवरणे "माया ह्येवा मया सृष्टा" इति मोक्षधर्मे नारदं प्रति भगवद्वचने ज्ञानमयत्वस्य प्रतिपादनात्। "माया ह्येषा इति मायाशब्दः ज्ञानवचनः, माया वयुनं ज्ञानमिति नैघंटुकवचनप्रामाण्यात्। नतु मायाशब्दः सत्त्वरजस्तमः साम्यावस्थामूलप्रकृतिवचनः" इत्यादिना ईश्वररूपस्य ज्ञानरूपत्वस्य

---

[1] सुपां सुलुगिति तृतीयार्थे प्रथमा विभक्तिव्यत्ययो वा।
[2]. विशेषस्तु विश्वरूपसत्यत्वविचारे द्रष्टव्यः।

सत्त्वरजस्तमोगुणात्मकमायामयत्वाभावस्य च ध्वस्ताविद्यानां मुक्तानामपि तादृशशरीरवत्त्वस्य चाङ्गीकाराच्च। "यदायदा हि" इति श्लोके ईश्वररूपस्य मायिकत्वानुक्तेश्च। घटवति भूतले घटाध्यासस्यासम्भवेन यथा घटरहिते घटाध्यासः, तथा मायिकशरीरवति सविशेषे मायिकरूपाध्यासासम्भवात् निर्विशेष एव ब्रह्मण्यध्यासस्य वक्तव्यत्वात्। चन्द्रिकायां 'निर्विशेषब्रह्मण एव हिरण्यश्मश्रुत्वादिना ध्यानसंभवेन' इति उक्तं, न तु 'निर्विशेषे ब्रह्मणि हिरण्यश्मश्रुत्वादीनां अध्याससंभवेन' इतीति अन्यथाऽनूद्य दूषणकरणस्यानुचितत्वाच्च। ब्रह्मणि जगदध्यासे यादृशं औचित्यं भवता कल्प्यते तादृशौचित्यस्य अत्रापि निराबाधत्वात्। वस्तुतः अद्वैतिमते ब्रह्मणि कस्याप्यध्यासस्य औचित्यं नास्तीति अध्यासवादनिरासे उक्तत्वाच्च। अद्वैतिमते ब्रह्मातिरिक्तस्य अज्ञानतत्प्रयुक्तान्यतरत्वावश्यकत्वेन अज्ञानभिन्नस्य शरीरस्य अध्यस्ततायाः आवश्यकत्वेन, 'अध्यासं विना शरीरवत्त्वलक्षणरूपसंभवे निर्विशेषे रूपवत्त्वाध्यासकल्पनानुपपत्तेश्च' इत्यस्य अद्वैतमताज्ञानोन्मादान्यतरमूलत्वात्।

न्यायामृ. (४७९) "बृहंतो ह्यस्मिन् गुणाः, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, सत्यकामः सत्यसङ्कल्पः" इत्यादि श्रुतीनां

ब्रह्मेशानादिभिर्देवैः समेतैर्यग्दुणांशकः।
नावसाययितुं शक्यो व्याचक्षाणैश्च सर्वदा।
मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे।
तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशिः।
परःपराणां...........

इत्यादिस्मृतीनां, "ॐ अन्तस्तद्धर्मोपदेशात् ॐ, ॐ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॐ, ॐ अदृश्यत्वादिगुणको धर्मोक्ते ॐ, ॐ सर्वधर्मोपपत्तेश्च ॐ': इत्यादीनां निर्णायकसूत्राणां, 'ब्रह्म धर्मिसमानसत्ताकधर्मवत्पदार्थत्वात्' इत्याद्यनुमानानां च ब्रह्मणः सधर्मकत्वसाधकानां सत्वात्, सविशेषमेवब्रह्म, न निर्विशेषमिति यदन्यत्रोक्तं,

(रा.) (१७२) तन्न, भवदुक्तश्रुतिस्मृत्योः श्रुतिस्मृतिकोशेऽदर्शनात्। व्यावहारिकसगुणब्रह्मविषयत्वेन तयोर्निर्विशेषब्रह्म नास्तीत्यदर्शनेन च निर्विशेषब्रह्मनिराकरणासंभवाच्च। अनुमानस्य "केवलो निर्गुणः, न च काचन भिदास्ति, मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति, एकधैवानुद्रष्टव्यं, यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा, द्वैतिनोतथ्यदर्शिनः, ॐ अरूपवदेवहि तत्प्रधानत्वात् ॐ" इत्यादिश्रुति-भागवत–विष्णुपुराण-ब्रह्मसूत्रविरोधेन नरकपालशुचित्वानुमानवदागमबाधिततया परमार्थधर्मासाधकत्वादिति यदुक्तं,

(खं.) तत्तुच्छं, "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिः ब्रह्मगुणानाँ काल्पनिकत्वं प्रतिषेधति, स्वाभाविकत्वं च व्यवस्थापयतीत्यादिग्रन्थेन ब्रह्मगुणानां पारमार्थिकत्वं श्रुत्यादिबलेन उपपाद्य निर्विशेषब्रह्मणः त्वया निरकरणात्, निर्विशेषब्रह्मनिराकरणासम्भावोक्तेः स्वोक्तिविरुद्धत्वात्। प्रमेयांगीकारे प्रमाणसदसत्त्वविचारस्य निष्प्रयोजनत्वाच्च। अद्वैतसिद्ध्यादिग्रन्थेष्वपि श्रुतिस्मृतीरङ्गीकृत्य सगुणप्रकरणस्थितब्रह्मानन्तशब्दार्थविषयकत्वेन लक्षणवाक्यस्थितब्रह्मानंतशब्दार्थनिर्वचनपरत्वायोगादिति सगुणब्रह्मपरतया योजितत्वाच्च। "अथ कस्मादुच्यते परं ब्रह्म यस्मात्परमपरं परायणं बृहत् बृहत्याबृंहयति तस्मादुच्यते परं ब्रह्मेति सर्वाणि बृंहयतीति ब्रह्मा बृंहति बृंहयति च" इति समानार्थिकायाः यत्किञ्चिद्भिन्नपूर्वीकायाः श्रुतेः उपलभ्यमानत्वाच्च।

बृहत्त्वाद्बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितं।

इति विष्णुपुराणे ब्रह्मशब्दनिर्वचनाच्च। "केवलो निर्गुणश्च" इति श्रुतिः "गुणी सर्वविद्य" इति पूर्वोत्तरवाक्ययोः परमात्मनः स्पष्टं गुणवत्त्वोक्तेः, पूर्वोत्तरेषु अनेकेषु वाक्येषु स्वस्मिन्नपि अनेकेषां साक्षित्वादिधर्माणां उक्तेश्च, न धर्मसामान्याभावबोधिका, किंतु सत्त्वरजस्तमोगुणराहित्य-

बोधिका, एतन्निर्गुणपदस्यैव शङ्करेण सत्त्वरजस्तमोगुणशून्यत्वपरतया व्याख्यातत्वाच्च। "निर्गुणं गुणभोक्तृ च" इति गीताव्याख्यानावसरे शङ्करभाष्ये 'निर्गुणं सत्त्वरजस्तमांसि गुणाः तैः वर्जितं" इति सत्त्वरजस्तमोगुणराहित्यपरतया निर्गुणपदस्य व्याख्यातत्वाच्च। विष्णुतत्त्वरहस्य विवरणे "केवलो निर्गुणश्च" इति श्रुतेः गुणत्वावच्छिन्नप्रतियोगिताककाल्पनिकाभावबोधकत्वमेव, नतु पारमार्थिकत्वविशिष्टगुणाभावः तथा प्रतिपाद्यते "गुणी सर्वविद्यः" इत्यादिगुणवत्त्वबोधकश्रुतिविरोधात्। न च निर्गुणश्रुतिबलेन "गुणी सर्वविद्यः" इति श्रुतेः काल्पनिकगुणप्रतिपादकत्वं स्यादिति विनिगमनाविरहः शङ्क्यः "स्वाभाविकी ज्ञानबलक्रिया च" इति गुणानां स्वाभाविकत्वकथनेन तेषां काल्पनिकत्वासंभवस्यैव विनिगमकत्वात्। नहि ब्रह्मणि गुणाभावस्य स्वाभाविकत्वं बोधयच्छ्रुतिवाक्यमुपलभ्यते, येन गुणाभावस्य काल्पनिकत्वे विरोधः स्यात्। तस्मात् कृत्स्नं श्रुतिस्मृतिसूत्रात्मकं संप्रतिपन्नं शास्त्रं ब्रह्मणः सगुणत्वे जीवब्रह्मभेदे च विश्रान्तमिति श्रीमद्भगवद्बादरायणाचार्याभिप्राय इति सर्वं समंजसं इति त्वयैव ब्रह्मणः सगुणत्वमेव नतु निर्गुणत्वापरपर्यायवाच्यनिर्विशेषत्वमिति अङ्गीकृतत्वे न स्वोक्तविरुद्धत्वाच्च। "नात्र काचन भिदास्ति, (नृसिंहोत्तरतापनीये ८)

यदेवेह तदमुत्र यदमुत्र तदन्विह।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। (काठक २-१०) इति श्रुती अपि एतल्लोकपरलोकस्थितभगवद्रूपाणां भेदनिषेधिके, नतु गुणनिषेधिके इति एतयोः निर्गुणत्वविषये उदाहरणमयुक्तमेव। एकधैवानुद्रष्टव्यं" (बृ. ४-४-२०) इति श्रुतिरपि एकधेति एकप्रकारेण द्रष्टव्यत्वबोधिका सती ब्रह्मणि प्रकाररूपधर्मं ज्ञापयत्येव, न तु निषेधति। "यत्र हि द्वैतमिव भवति" बृ. (४-५-१५) इति वाक्यं "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" (बृः ३-९-२८) इति वाक्येन बोध्यमानतर्के व्याप्तिदर्शकं नतु गुणनिषेधकमिति। "ननु द्वैतेनोपमीयमानत्वाद्वैतस्य पारमार्थिकत्वमिति न, "वाचारम्भणं विकारो नामधेयं" इति

श्रुत्यन्तरात् "एकमेवाद्वितीयं, आत्मैवेदं सर्वं" इतिच" वाक्येन शङ्करेणास्य वाक्यस्य द्वैतपारमार्थिकत्वसाथकत्वमेवेत्याशंक्य श्रुत्यन्तरेणैव द्वैतमि.थ्यात्वसिद्धिकथनान्नास्य वाक्यस्यापि द्वैतमिथ्यात्वप्रतिपादनद्वारा गुणमिथ्यात्वपरत्वं शङ्करव्याख्यानरीत्यापीति तदुदाहरणमप्यसङ्गतमेव। "तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा" इति भागवतवाक्यमपि "जन्माद्यस्य" इति आरम्भे जगत ईश्वरसृज्यत्वोक्तया सत्यत्वस्य सिद्धत्वेन

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।

इति शाङ्करबृहदारण्यकभाष्ये 'अमृषा' इति पदं छित्वा अमृषा सत्यमिति वृक्षादीनां सत्यत्वस्योक्ततया च अत्रापि 'अमृषा' इति पदच्छेदेन त्रिसर्गः अमृषा सत्यमिति अर्थस्य स्वीकार्यत्वेन न गुणादीनां मिथ्यात्वबोधकं, प्रत्युत सत्यत्वबोधकं, "भित्वा मृषाश्रुः" इति दशमे मृषाशब्दस्य निष्प्रयोजने प्रयोगग अत्र मृषा इति पदच्छेदेपि त्रिसर्गः परमात्मविषये निष्प्रयोजनः इत्यर्थकत्वस्यापि सम्भवाच्च। अन्यथा यत्रेति पदवैयर्थ्यापत्तेः।

तस्यात्मपरदेहेषु सतोप्येकमयं हि सः।
विज्ञानं परमार्थो हि द्वैतिनोतथ्यदर्शिनः॥

इति वाक्यमपि पूर्वार्धे आत्मदेहे परदेहे विद्यमानस्य नियामकपरमात्मनः ऐक्यस्योक्तत्वेन नियामकपरमात्मरूपाणां भेददर्शिन एव निन्दाबोधकं, न तु जीवपरमात्मनोर्भेदज्ञानिनः निन्दायाः गुणनिषेधस्य वा बोधकमिति। "ॐ अरूपवदेव हि तत्प्रधानत्वात्" इति सूत्रं प्राकृतरूपादिराहित्यमेव वक्ति, न तु ज्ञानानन्दाद्यात्मकरूपराहित्यं, "आनंदरूपममृतं, यद्वेकमव्यक्तमनन्तरूपं" इत्याद्यनेकश्रुतिस्मृत्यादिषु भगवतः ज्ञानानन्दाद्यात्मकरूपवत्त्वोक्तेः। त्वयापि विष्णुतत्त्वरहस्यविवरणे ज्ञानात्मकस्य शरीरस्य तस्य काल्पनिकत्वाभावस्य च स्वीकारात्। तस्माद्ब्रह्मणः सविशेषत्वे त्वदुदाहृतश्रुति–भागवत–विष्णुपुराण–ब्रह्मसूत्रविरोधाभावेन ब्रह्मणः स-

विशेषतत्रबोधकश्रुतिस्मृत्यादिभिः तदनुकूलानुमानैश्च परमात्मनः पारमार्थिकधर्मसिद्धेर्निष्प्रत्यूहत्वमिति ॥

न्यायामृ-- (४९१) ननु निर्गुणवाक्येन निषेद्धुं सगुणवाक्यस्या, नुवादकत्वेनैकवाक्यत्वसंभवे वाक्यभेदेन गुणप्रापकता न युक्तेति चेन्न- सत्यकामत्वादीनामन्यतोप्राप्तेः। श्रुतिप्राप्तस्य च श्रुत्या निषेधेऽहिंसा- वाक्यमग्निषोमीयहिंसायाः, अग्रहणवाक्यं च षोडशिग्रहणस्य, "असद्वै" इत्यादिवाक्यं च ब्रह्मसत्त्वस्य, भेदवाक्यं चैक्यस्य निषेधकं स्यात् इति यदुक्तं,

(रा.) (१७३) तन्न, गुणनिषेधश्रुतेः पारमार्थिकब्रह्मविषयत्वेन गुणबोधकश्रुतेः व्यावहारिकमायोपाधिकब्रह्मविषयत्वेन गुणतन्निषेधशास्त्रयोः हिंसातन्निषेधशास्त्रयोरिवैकविषयत्वाभावेन हिंसाविधितन्निषेध- न्यायस्य प्रकृत आपादनायोगात्। ब्रह्मणो द्वैविध्यं च

द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ।

इत्यादिविष्णुपुराणवचनैः पौराणिकैरप्यंगीकृतं ।

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।

इति कठवल्लीश्रुतिः सर्वसंहर्तृसगुणब्रह्मणस्तदधिष्ठानभूतनिर्विशेषब्रह्मणो 'यत्र, तत्र' इति शब्दोक्तस्य तदीयदुर्विज्ञेयत्वस्य प्रतिपादिका सती ब्रह्मणो व्यावहारिकपारमार्थिकद्वैविध्ये मानमित्यवगन्तव्यं इति यत्,

(खं.) तत्तुच्छं, पूर्वोत्तरवाक्यार्थाज्ञानमूलत्वात्। तथा हि-- सगुणवाक्यनिर्गुणवाक्ययोः अनुवादकत्वनिषेधकत्वेनैकवाक्यत्वसम्भवे

वाक्यभेदेन गुणप्रापकता न युक्तेति मायिना शङ्किते, प्राप्तमेवानूद्य निषेद्धव्यं, सत्यकामत्वादीनामन्यतः प्राप्त्यभावात् श्रुत्यैव प्राप्तिर्वक्तव्या, श्रुत्या प्राप्तस्य श्रुत्या निषेधो न युक्तः, श्रुतिप्राप्तस्य श्रुत्या निषेधे अहिंसावाक्यं अग्निषोमीयहिंसायाः निषेधकं स्यादित्यादि दूषणमुक्तं। यदि भवता सगुणवाक्यस्य व्यावहारिकमायोपाधिकब्रह्मविषयत्वं निर्गुणवाक्यस्य पारमार्थिकब्रह्मविषयत्वं स्वीक्रियते, तर्हि उभयोर्भिन्नविषयत्वेन भाष्यभिमता एकवाक्यताघटना भग्ना स्यादिति। भिन्नविषयत्वमङ्गीकृत्य तादृशगुणानां निषेधानङ्गीकारे श्रुतिप्राप्तानां अनिषिद्धानां पारमार्थिकत्वापत्तेः। ब्रह्मद्वैविध्ये प्रमाणाभावात्, त्वयैव ब्रह्मणः मायिकत्वनिषेधाच्च, "द्वे रूपे ब्रह्मणस्तस्य" इति त्वदुदाहृतं वाक्यं "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च" इति बृहदारण्यकवाक्यसमानमिति तस्येवास्यापि अर्थो वर्णनीयः, 'मूर्तं पृथिव्यप्तेजांसि अमूर्तं वाय्वन्तरिक्षे ब्रह्मणः रूपे रूप्येते इति रूपे ज्ञापके' इति मूर्तामूर्तशब्दबोध्यानां पंचमहाभूतानां ब्रह्मज्ञापकत्वमुक्तं शाङ्करभाष्ये, न तु सगुणनिर्गुणद्विविधब्रह्मविषयत्वमिति, अस्यापि वाक्यस्य पंचमहाभूतानां परब्रह्मज्ञापकत्वार्थकतया ब्रह्मणो द्वैविध्ये उदाहरणं शाङ्करभाष्याज्ञानविजृंभितं, 'द्वे रूपे' इति श्रवणमात्रजनितभ्रांतिमूलं चेति तेन ब्रह्मणो द्वैविध्यासिद्धिः। "सद्भाव एवं भवतो मयोक्तः" इति त्वदुदाहृत श्लोके, तत्पूर्वतने

"ज्ञानं च शुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्।
एक सदैकः परमः परेशः स वासुदेवो न यतोऽन्यदस्ति"

इत्यस्मिश्च श्लोके च ब्रह्मणो द्वैविध्यप्रसक्तेरेवाभावात्तदुदाहरणं व्यर्थमेव॥

"यस्य" इति काठकवाक्यं तु 'यस्य' इत्यादिनोक्तस्य सर्वसंहर्तृत्वादिगुणविशिष्टस्यैव 'यत्र' इति शब्देन ग्राह्यत्वात्, शाङ्करभाष्यव्याख्यानकर्तृभिरपि यत्र स्वे महिम्नि स विश्वोपसंहर्ता वर्तत इति 'यस्य यत्र' इति पदोक्तयोरेकत्वकथनाच्च न ब्रह्मद्वैविध्ये मानमिति ॥

न्यायामृ— (४९०) किञ्च तद्विरोधेपि श्रुतेर्नातात्त्विकविषयता युक्ता। उक्तं हि,

को हि मीमांसको ब्रूयात् विरोधे शास्त्रयोर्मिथः।
एकं प्रमाणमितरत्त्वप्रमाणं भवेदिति। इति इति यत्,

(रा.) (४९१) तन्न, वेदोपबृंहणामूर्धन्यतया भवदभिमतश्रीविष्णुपुराणगतेन "सद्भाव एवं भवतो मयोक्तः" इति अनुपदश्लोकेन विरुद्धार्थकभवदभिमतश्रुत्योः व्यावहारिकपारमार्थिकविषयतया व्यवस्थाकथनेन "को हि मीमांसकः" इति भवदुक्तेः भवदभिमतपुराणवचनविरुद्धत्वात्। "सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यः" इत्यादिव्यावहारिकपारमार्थिकसत्यद्वयबोधकसर्वाभिमतप्रमाणभावश्रुतिविरुद्धत्वाच्चेति यत्,

(खं.) तत्तुच्छं, विष्णुपुराणस्य व्यावहारिकपारमार्थिकविषयतया श्रुत्योर्व्यवस्थापकत्वाभावस्यानुपदमेवोक्तत्वात्। "सत्यस्य सत्यं" इति श्रुतेः 'चक्षुषश्चक्षुः चेतनानां चेतनः ज्योतिषां ज्योतिः' इत्यादौ यथा ज्योतिष्ट्वादिप्रद इत्यर्थः तथा प्राणानां सत्यत्वप्रद इत्यर्थकत्वेन व्यावहारिकपारमार्थिकविषयकत्वबोधकत्वाभावस्य पूर्वमेवोक्तत्वेन व्यावहारिकपारमार्थिकवस्तुद्वये प्रमाणत्वाभावात्। श्रुतेः व्यावहारिकवस्तुविषयकत्वे व्यावहारिकस्व आरोपितत्वे च श्रुतेर्बाधितार्थविषयकत्वरूपाप्रामाण्यस्य प्राप्तेः॥

(रा.) (१७४) यत्तु "हिरण्मयः पुरुषो दृश्यते" इति रूपस्य वर्तमानत्वनिर्देशादनारोपितत्वमिति, तन्न, लडर्थवर्तमानत्वस्य धात्वर्थान्वयित्वेन हिरण्यश्मश्रुत्वादिना रूपेणान्वयित्वायोगात्। अन्वयित्वेपि वा तद्रूपस्य व्यावहारिकत्वेन घटो दृश्यते इत्यत्र घटस्येव वर्तमानत्वान्वयित्वोपपत्तेः। आरोपितत्वं हि अधिष्ठानतत्त्वसाक्षात्कारध्वंसप्रतियोगित्वयोग्याज्ञानतत्प्रयुक्तान्यतरत्वं। तच्च न वर्तमानत्वेन विरुध्यत इति यदुदितं,

(खं.) तत्तुच्छं, "....  "हिणमयः पुरुषो दृश्यते" इति अपरोक्ष-ज्ञानविषयत्वोक्तेश्च" इति वाक्यस्यांतस्स्थत्वाधिकरणे दृश्यमानत्वात् त्वदुदितवाक्यस्यादर्शनेनानुक्तोपालम्भत्वात्। आरोपितस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वदतां मायिनां मते वर्तमानकाले सत्त्वग्रहणायोगाच्च। अज्ञानं सत्यं मिथ्या वा, सत्यत्वेपि ब्रह्मातिरिक्तं ब्रह्मस्वरूपं वा। ब्रह्मातिरिक्तत्वे अद्वैतहानिः। ध्वंसप्रतियोगित्वादिविरुद्धधर्माधिकरणत्वेन ब्रह्मस्वरूपत्वासम्भवः। मिथ्यात्वे जगत इव अज्ञानकल्पितत्वस्यावश्यं वक्तव्यतया अज्ञानेपि अज्ञानप्रयुक्तत्वस्य सत्त्वात् अज्ञानप्रयुक्तत्वं अरोपितत्वमित्येतावन्मात्रेण निर्वाहात् अज्ञानतत्प्रयुक्तान्यतरत्वोक्तिर्व्यर्था। अधिष्ठानतत्त्वसाक्षात्कारध्वंसप्रतियोगित्वायोग्यत्वविशेषणमपि व्यर्थमेव, प्रयोजनाभावात्॥

(चं.) (३१४) किंच--

आद्यसूत्रे धर्मशब्दात् द्वितीये भेदशब्दतः।
निर्धर्मकत्वयैक्यं च निरस्तं परवस्तुनः॥
धर्मो भेदश्च मिथ्या चेत् श्रुतिसूत्राप्रमाणता।
व्याख्याव्याजेन चोक्ता स्यात्त्वया सौगतसौहृदात्॥

इति यत्,

(रा.) तन्न, गौडब्रह्मानन्देन लघुचन्द्रिकायां मिथ्यात्वविचारे 'ब्रह्मभिन्नत्वावच्छेदेन विनाशित्वरूपमिथ्यात्वपर्यवसिताविनाश्यवृत्तिधर्मवत्त्वमेव साध्यते' इत्यादिनाऽनित्यत्वस्य मिथ्यात्वरूपत्वोक्त्या त्वदीयैर्मदीयैश्च सर्वैरप्यनित्यत्वबोधकवाक्यस्याप्रामाण्यानङ्गीकारात्। संसारावस्थायां जीवेश्वरयोर्भेदस्यौपाधिकस्याद्वैतिभिरङ्गीकारात्, मुक्तिदशायामपि मुक्तस्य निर्विशेषचिदैक्येप्येतदधिकरणप्रतिपादितसगुणेश्वराद्भेदाङ्गीकारात्, आपेक्षिकमोक्षदशायां जीवेश्वरयोर्भेदस्याङ्गीकृतत्वात्, यादृशेन ब्रह्मणा सगुणेन जीवस्य भेदो भवद्भिः स्वीकृतः तादृशेन ब्रह्मणा

ब्रह्ममुक्तोभयावस्थस्यापि जीवस्य भेदस्वीकारात्। एतावांस्तु विशेषः, भवद्भिस्तु स भेदो व्यावहारिक इति नोच्यते, अद्वैतिभिस्तु व्यावहारिक इति उच्यते। तस्मात् 'अन्तस्तद्धर्मोपदेशात्, भेदव्यपदेशाच्चान्यः' इति सूत्रद्वयस्य तद्विषयश्रुतेश्चानित्यव्यावहारिकशरीरभेदविषयत्वाङ्गीकारणं प्रति सौगतसौहृदवत्त्वकथनस्य स्वपरसिद्धान्ताज्ञानविजृम्भितत्वमेवेति यदुक्तं,

(खं.) तत्तुच्छं,

शास्त्राणां भेद एव श्रुतिशिखरगिरामागमानां च निष्ठा।
साकं सर्वैः प्रमाणैः श्रुतिनिकरमहाभारतादिप्रबन्धैः।
तत्रैव व्याससूत्राण्यकुटिलविधया भान्ति तात्पर्यवन्ति।
प्रत्नैराचार्यरत्नैरपि परिजगृहे शङ्करार्यैः स चापि।

इत्यादिना जीवब्रह्मणोर्मुक्तिदशायामपि भेदस्य, तत्पारमार्थिकतायाः, ब्रह्मणः सगुणत्वस्य, निर्विशेषत्वाभावस्य च स्वीकृतत्वेन "मुक्तस्य निर्विशेषचिदैक्ये" इत्युक्तेः स्वोक्तिविरुद्धत्वात्। चन्द्रिकाकाराद्युक्तदूषणगणाद्भीतैः चन्द्रिकाकृदपेक्षया अर्वाचीनैः स्वसिद्धान्तं परित्यज्य अनित्यत्वपर्यवसायिमिथ्यात्वकथनेपि प्राचीनैः शङ्कराचार्यादिभिः असत्त्वपर्यवसन्नात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्यैव तत्तद्ग्रंथे बहुस्थलेषूपपादितत्वेन ब्रह्मानन्देनापि बहुस्थलेषु अत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वस्यैव कथनेन तेषां सौगतसौहृदकथनस्य युक्तत्वात्। सौगतोक्तविषयान् परित्यज्य श्रुत्यादिप्रमाणसिद्धविषयाङ्गीकारे तु वेदान्तिसौहृदमनुमतमेवास्माकमिति ॥

जीवब्रह्मणोर्भेदः तद्गतधर्माश्च सत्या वा मिथ्या वा। सत्याश्चेन्न निवर्तेरन्, ज्ञानेन अज्ञानतत्कल्पिततान्यतरस्यैव निवृत्त्यङ्गीकारात्। तथा च मुक्तावपि जीवब्रह्मणोर्भेदस्तद्धर्माश्च तदवस्थाः स्युरिति अद्वैतमतभङ्गापत्तिः। मिथ्या चेत् अतत्त्वभूतधर्मभेदप्रतिपादकत्वेन श्रुतिसूत्राप्रामाण्यापरिहारात्, "एष नित्यो महिमा ब्राह्मणस्य" इति मन्त्रे ब्रह्मधर्माणां स्पष्टं नित्यत्वप्रतिपादनाच्च, विरुद्धधर्माणां नित्यत्वे भेदस्यापि

नित्यतया प्राप्तत्वाच्च, श्रुतिसूत्रप्रतिपाद्यानां धर्माणां भेदानां च कल्पितत्वे वा अनित्यत्वे वा कल्पितभेदस्य वा कल्पितधर्माणां वा तन्निष्ठानित्यतायाः अतत्त्वत्वेन अतत्त्वभूतानित्यत्वप्रतिपादकतया अप्रामाण्यापरिहारेण सौगतसौहृदस्यापरिहारात् ॥

(रा.) प्रत्युत मध्वमते ब्रह्मणि जीवभेदस्य निरूपयितुमशक्यत्वात्तन्मतप्रविष्टा एव प्रच्छन्नसौगता इति वक्तुं शक्यमिति यदुक्तं,

(खं.) तत्तुच्छं, बौद्धाङ्गीकृतप्रमेयाणां भंग्यंतरेणाङ्गीकार एव प्रच्छन्नबौद्धत्वप्रापकः, न तु निरूपयितुमशक्ययत्किञ्चित्पदार्थाङ्गीकरणं। अतः निरूपयितुमशक्यजीवब्रह्मभेदाङ्गीकारमात्रेण प्रच्छन्नबौद्धत्वाप्राप्तेः ब्रह्मणि जीवभेदस्य निरूपयितुं शक्यत्वाच्च, अद्वैतिमत एव सर्वस्य केनापि प्रकारेण निर्वक्तुमशक्यत्वरूपानिर्वचनीयत्वस्याङ्गीकृतत्वेन त्वदुक्तप्रच्छन्नबौद्धत्वप्राप्तिरूपदूषणपिशाचस्त्वामेवास्कन्दति ॥

(रा.) तथा हि–किं ब्रह्मणि मध्वमते जडजीवभेदो ब्रह्मणः पृथग्भूतो धर्मः उत ब्रह्मात्यन्ताभिन्नतया ब्रह्मस्वरूपः। नाद्यः, मध्वाभिमतस्य "एवं धर्मान् पृथक् पश्यन्" इति श्रुत्यर्थस्य विरोधप्रसङ्गात्। न द्वितीयः, सप्रतियोगिकस्य भेदस्य निष्प्रतियोगिकब्रह्मरूपत्वाभावात्, भवद्भिरेव मिथ्यात्वघटकाभावस्याधिष्ठानब्रह्मरूपत्ववादिनं प्रति निष्प्रतियोगिकस्य ब्रह्मणः सप्रतियोगिकाभावरूपत्वासम्भवस्य न्यायामृतग्रन्थे उक्तत्वादिति यदुक्तं,

(खं.) तत्तुच्छं, ब्रह्मनिष्ठस्य जडजीवभेदस्य ब्रह्मरूपत्वाङ्गीकारात्, सप्रतियोगिकस्य भेदस्य निष्प्रतियोगिकब्रह्मणा निर्विशेषाभिन्नत्वासम्भवेपि सविशेषाभेदस्य सम्भवात् अभिन्नयोरपि सप्रतियोगिकत्वनिष्प्रतियोगिकत्वयोर्विशेषबलेनोपपत्तेः, न्यायामृते अद्वैतमते ब्रह्मणः सविशेषत्वानंगीकारात् निष्प्रतियोगिकब्रह्मणः सप्रतियोगिकाभावरूपत्वासम्भवोक्तेः समंजसत्वात् ॥

(रा.) न च ब्रह्मण एव ब्रह्मत्वभेदत्वाभ्यां औपाधिकभेदं स्वीकृत्य निष्प्रतियोगिकत्वसप्रतियोगिकत्वोपपत्तिः संपादयितुं शक्या, मध्वमते "एवं धर्मान्" इति श्रुत्यर्थरीत्या ब्रह्मत्वभेदत्वयोरपि ब्रह्मान्यन्ताभिन्नत्वावश्यकतयौपाधिकभेदोपपादकब्रह्मत्वभेदत्वाख्यपरस्परभिन्नधर्मद्वयस्यैव शशशृङ्गायमानत्वादिति यदुदितं,

(खं.) तत्तुच्छं, अनुक्तोपालम्भनत्वात् ।।

(रा.) यत्तु, विशेषबलात्सर्वानुपपत्तिपरिहारास्तु विशेषरूपधर्मस्य ब्रह्मभेदाभेदविकल्पाभ्यां पूर्वमेव परास्तः । तस्मान्मध्वमते जडजीवभेदस्य ब्रह्मण्यसिद्धया ब्रह्मणो जडजीवस्वरूपत्वापत्त्या सर्वसङ्करप्रसङ्गेन सौगतमतप्रवेशः सम्पादितः स्वेनैवेत्यलमिति,

(खं.) तत्तुच्छं, विशेषस्य ब्रह्माभिन्नत्वपक्षमङ्गीकृत्य तत्पक्षोक्तदोषाणां परिहृतत्वेन विशेषबलेन प्रामाणिकस्यार्थस्योपपत्तेः । सर्वसङ्करस्य सौगतमतप्रवेशसम्पादकस्याभावाच्च । तादृशविशेषस्य त्वया मधुसुदनसरस्वत्यादिभिरद्वैतिभिरपि स्वीकारेण अभेदेऽप्याधाराधेयभावादीनां उपपादितत्वाच्च । जीवैक्यस्यापि ब्रह्मभिन्नत्वे सत्यत्वे अद्वैतभङ्गः मिथ्यात्वे भेदसिद्धिः, ऐक्यबोधकतया त्वयाङ्गीकृतानां आगमानामप्रामाण्यापत्तिः, सप्रतियोगिकस्य जीवैक्यस्य न निष्प्रतियोगिकनिर्विशेषब्रह्मैक्यमिति, अद्वैतिमत एव ऐक्यस्य निरूपयितुमशक्यत्वात् । न ह्यस्माकं मत इव अद्वैतिमते ब्रह्म सविशेषं, येन विशेषबलात् निर्वाहः स्यादिति, अलं स्वव्याहतबालजनमोहकप्रक्रियानिरासप्रपञ्चेन ।।

ॐ अंतस्तद्धर्मोपदेशात् ।। सिद्धान्ते अधिकरणस्वरूपं त्वित्थम् । अनन्तरसङ्गतिस्तु, आनन्दमयधर्मस्यादृश्यत्वस्य अन्तस्थे श्रवणात् अन्तस्थस्य चाविष्णुत्वादानन्दमयोऽपि न विष्णुरिति पूर्वसिद्धान्ताक्षेपेणेह पूर्वपक्षोत्थानादाक्षेपिकी ।। तैत्तिरीयाः समामनन्ति "अन्तः प्रविष्टं कर्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं। सहैव सन्तं न विजानन्ति देवाः इन्द्रस्या-

त्मानं शतधा चरन्तं" इत्यादि। अत्र श्रूयमाणः अन्तस्थः किमिन्द्रादि, किं वा विष्णुरिति चिन्ता। तदर्थं किमिन्द्रादिश्रुत्यनुसारेण समुद्रशायित्वादिलिङ्गं नेयमुत विरीतमिति। तदर्थं किं श्रुतिर्निरवकाशा लिङ्गं तु सावकाशमुत विपरीतमिति। तथा लिङ्गस्य निरवकाशत्वेपि किं श्रुतित्वप्रयुक्तप्राबल्यं बलवत् किं निरवकाशत्वप्रयुक्तप्राबल्यं बलवदिति। पूर्वपक्षस्तु-- अयमन्तस्थः इन्द्राद्यन्यतमः, "इन्द्रो राजा, त्वष्टारं रूपाणि विकुर्वन्तं, ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठां दिव आत्मानं सवितारं बृहस्पतिं" इतीन्द्रादिश्रुतेः। न च समुद्रशायित्वलिङ्गाद्विष्णुरिति युक्तं, श्रुतितो लिङ्गस्य दुर्बलत्वात्। प्रमाणद्वयबलात् अन्तस्थेन्द्रस्य विष्णुनाऽभेदोपपत्तेश्चेति प्राप्ते, सिद्धान्तस्तु--

अन्तस्थो विष्णुरेव, समुद्रशायित्वब्रह्माण्डवीर्यत्वादिलिंगात्।
लिंगादिभ्यो बलवती श्रुतिर्यद्यपि च स्वतः।
अवकाशोज्झितैर्लिंगैः सावकाशा तु बाध्यते ॥

यद्यपि "ऐन्द्रचा गार्हपत्यमुपतिष्ठते" इत्यादौ श्रुत्या लिंगबाधेन श्रुतेरुत्सर्गतो बलवत्त्वं, तथापि यथा "श्येनेनाभिचरन् यजेत" इत्यादौ श्येनशब्दोऽन्यत्र रूढोऽपि "यथा वा श्येनो निपत्यादत्ते" इति वाक्यशेषोक्तस्य श्येनसादृश्यस्य श्येनेऽनुपपत्त्या यागपरः, तथा समुद्रान्तस्थत्वादीनामन्यत्रासम्भवादिन्द्रादिशब्दा विष्णुपरा एव।

लोके श्रुतौ स्मृतौ चैव विष्णुलिंगतया स्थितम्।
समुद्रान्तरवस्थानपूर्वकं कथमान्यगम् ॥

एवं च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन निरवकाशलिंगेन वैदिकतया सर्वथा बाधायोग्येन सावकाशश्रुतीनां लोकेप्रसिद्धसूर्यादिपरत्वत्यागेन श्रुतिस्मृत्यादिप्रसिद्धविष्णुपरत्वोपपत्तेः। "इंद्रं मित्रं वरुणमग्निमाहुः" इत्यादिश्रुत्या इंद्रादिशब्दानां विष्णावेव विद्वद्रूढत्वेन, इंद्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यादेः विष्णावेवानन्याधीनत्व-

निरवकाशत्वाभ्यां मुख्यतः संभवेन महायोगस्यापि सत्वेन चेंद्रादिश्रुते, विष्णावेव मुख्यत्वाच्च। न च श्रुतिलिंगयोः स्वारस्याय अंतस्थेन विष्णुना इंद्रादेरभेदोस्त्विति वाच्यं, "इंद्रस्यात्मा निहितः पंचहोता वायोरात्मानं-अंतरादित्ये मनसा चरिंतं" इत्यादौ अंतस्थस्य इंद्रादिना भेदव्यपदेशात् अंतस्थो विष्णुः इंद्रादिभ्योऽन्य इति। विशेषस्तु चंद्रिकातोऽवसेयः॥ एतदुपरि,

(रा.) तन्न, समुद्रशायित्वादिनिरवकाशविष्ण्वसाधारणधर्मवत् "सप्त युञ्जन्ति रथमेकचक्रं" इत्याद्युक्तसप्ताश्वत्वादिरूपसूर्यासाधारण-धर्मस्यात्र दर्शनेनान्तः प्रविष्टस्य सूर्यरूपत्वस्यैव न्याय्यत्वात्। न च विनि-गमनाविरहः, विष्णोर्लिङ्गमात्रमस्ति, सूर्यस्य तु सवित्रादिश्रुतिसहकृतं लिङ्गमिति विशेषादिति यत्,

(खं.) तत्तुच्छं, "इंद्रस्यात्मानं, अन्तः, समुद्रे मनसा चरन्तं, ब्रह्मान्वविन्दद्दशहोतारमर्णे, सर्वे वेदा यत्रैकं भवन्ति, अन्तःप्रविष्टः शास्ता जनानां ब्रह्मा.........तपसान्वविन्दत्, आत्मानं कवयो निचिक्यु:, वायोरात्मानं, यस्यांडकोशं शुष्ममाहुः, सुवर्णं कोशं रजसा परीवृतं, .... तामुकलां विचक्षते, अन्तरादित्ये मनसा चरन्तं, देवानां हृदयं ब्रह्मान्व-विन्दत्" इत्यादिवाक्येषु प्रतिपादितैः इन्द्रस्वामित्व–समुद्रान्तस्स्वेच्छाचा-रित्व–चतुर्मुखककर्तृकतपःकरणकापरोक्षज्ञानविषयत्व – सर्ववेदप्रतिपाद्य-त्व–जनशासकत्व–वायुस्वामित्व-ब्रह्माण्डकोशवीर्यकत्वादित्यान्तःस्वेच्छा-चारित्व–देवहृदयप्राप्तृत्वादिभिः अनेकैः निरवकाशैः विष्णुलिंगैः सूर्यांत-र्गतविष्णुनिष्ठतया सम्भवतः सावकाशस्य सप्ताश्वत्वादिसूर्यलिंगस्य बाधेन सवितृश्रुतेः विष्णौ सवितृत्वादिगुणयोगेन विष्णुसहस्रनामादिषु प्रयोगेन, "यो देवानां नामधाः" इति देवबोधकानां शब्दानां विष्णुनिष्ठ-त्वकथनेन, च "सर्वे वेदाः सर्वे घोषाः" इति सर्वशब्दवाच्यत्वकथनेन,

च "सर्वे वेदाः सर्वे घोषाः" इति सर्वशब्दवाच्यत्वकथनेन, "इन्द्रं मित्रं वरुणमग्निमाहुः" इति श्रुत्या च सूर्यशब्दपर्यायमित्रशब्दवाच्यत्वकथनेन, वैदिकप्रसिद्धरूढ्या च सावकाशत्वात् विष्णुरेवान्तस्थ इति निर्णयोपपत्तेः॥

(रा.) विष्णुलिंगस्यापि विष्णुवाचकयज्ञश्रुतिसाहित्यमस्तीति न च शंक्यं, यज्ञशब्दस्य "यज्ञेन दानेन तपसाऽनाशकेन" इत्यादिश्रुतौ लोके च वैदिकक्रियाविशेष एव प्रयोगप्राचुर्येण रूढत्वनिश्चयात् विष्णौ प्रयोग-बाहुल्याभावेन तत्र तस्य रूढ्यसंभवादिति यदुक्तं,

(खं.) तत्तुच्छं, तत्त्वप्रकाशिका-चन्द्रिकादौ यज्ञश्रुतिसाहित्यस्या-नुक्तेः। "यज्ञेन यज्ञमयजन्त, यज्ञो वै विष्णुः" इत्यादिश्रुतिषु

यज्ञार्थात्कर्मणोन्यत्र लोकेयं कर्मबन्धनः।

इति गीतायां "यज्ञो यज्ञपतिः" इति विष्णुसहस्रनामसु च यज्ञशब्दस्य विष्णौ प्रायोगेण विष्णौ रूढेरबाधाच्च। अन्यथा ब्रह्मशब्दस्य वेदे लोके च प्रायोगेण ब्रह्मणि रूढिर्न स्यात्॥

(रा.) "यज्ञो वै" इति वैशब्दोपबन्धेन प्रथमश्रुतत्वेन च यज्ञस्य उद्देश्यत्वप्रतीत्या यज्ञस्य विधेयविष्णुशब्दवाच्यत्वावगमेपि विष्णोर्यज्ञ-शब्दवाच्यत्वस्य तादृशश्रुत्याऽनवगमात्। अन्यथा पर्वतो वह्निमानि-त्युक्तौ विधेयवह्निमत्त्वावच्छिन्नस्य पर्वतस्य पर्वतशब्दवाच्यत्वापत्त्या वह्निमतो महानसस्यापि पर्वतशब्दवाच्यत्वाप्त्तेरिति यदुक्तं,

(खं.) तत्तुच्छं, "अत एव वेदगतसर्वभागापेक्षयोत्कृष्टे पुरुषसूक्ते "सहस्रशीर्षा पुरुषः" इति सहस्रशीर्षत्वादिदिव्यमङ्गलविग्रहविशिष्टं पुरुषमुपक्रम्य "तस्माद्विराळजायत विराजो अधि पुरुषः" इत्यादिना विराट्पुरुषादिकृत्स्नजगत्कारणत्वमुपवर्ण्य "उतामृतत्वस्येशानः इति तस्यै-व मोक्षेशितृत्वमभिधाय "यज्ञेन यज्ञमयजन्त देवाः" इत्यन्ते "यज्ञो वै विष्णुः" इत्यादिश्रुतिसिद्धविष्णुरूढिकेन यज्ञपदेन जगत्कारणत्वादिविशि-ष्टतया प्रतिपादितस्य विष्णुत्वकथनात्" इति वाक्येन "यज्ञो वै विष्णुः" इति श्रुत्या यज्ञशब्दस्य विष्णौ रूढिसिद्धेः त्वयैव विष्णुतत्त्वरहस्यविवरण ग्रन्थे कथितत्वेन 'विष्णोर्यज्ञशब्दवाच्यत्वस्य तादृशश्रुत्यानवगमात्' इति

त्वदुक्तेः स्वव्याहतत्वात्। कस्याश्चित् वह्निमद्व्यक्तेः पर्वतशब्दवाच्यतायाः महानसे पर्वतशब्दवाच्यत्वापादनं प्रत्यप्रयोजकत्वाच्च ।।

(रा.) तर्हि "यज्ञेन यज्ञमयजन्त देवाः" इत्यत्र तृतीयांतयज्ञपदेन क्रियाविशेषाभिधानवत् द्वितीयान्तयज्ञपदेन कस्याभिधानं भवतीति न च शङ्क्यं यज्ञाराध्यत्वेन यज्ञसंबंधाल्लक्षणया द्वितीयांतयज्ञपदेन विष्णोरभिधानात्, क्वचित्कप्रयोगमात्रेण यज्ञशब्दस्य विष्णौ रूढ्यङ्गीकारे गङ्गायां घोषः' इत्यत्रापि क्वाचित्कप्रयोगसत्त्वात् गङ्गाशब्दस्य घोषे रूढ्यापत्तेरिति यदुक्तं,

(खं.) तत्तुच्छं, विष्णौ बहुप्रयोगस्य दर्शितत्वात्। विष्णोः सर्वशब्दवाच्यत्वस्य श्रुतिस्मृत्यादिना उक्तत्वाच्च। 'गङ्गायां घोषः' इत्यत्र क्वाचित्कप्रयोगसत्त्वात् गङ्गाशब्दस्य घोषे रूढ्यापत्तेरित्युक्तिरुन्मादमूलैव, घोषे गङ्गाशब्दप्रयोगस्य कुत्राप्यदृष्टत्वात् ।।

(रा.) न च विष्णुलिंगस्य श्रुतिसाहित्याभावेऽपि बहुत्वात् सूर्यलिंगानेक्षया प्राबल्यमिति शंक्यं, सूर्यलिंगस्यापि सप्ताश्वत्वैकचक्ररथवत्त्वादिरूपवत्त्वेन बहुत्वात् प्रविष्टश्रुतिसाहित्येन च विष्णुलिंगापेक्षया प्रबलत्वावश्यकत्वात् इति यदुक्तम्,

(खं.) तत्तुच्छं, सूर्यलिङ्गापेक्षया विष्णुलिङ्गानां बहुत्वस्य दर्शितत्वात्। प्रविष्टत्वश्रुतेः "तत्सृष्ट्वा तदेवानुप्राविशत्, यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यो वायौ" इत्यादिश्रुतिषु अन्तःप्रविष्टत्वस्य विष्णुलिङ्गत्वेन सूर्यप्रापकत्वस्यैवाभावात्, प्राबल्यसंपादकत्वस्य दूरनिरस्तत्वात्। "अन्तरादित्ये मनसा चरन्तं" इति अन्तःस्थस्यादित्यस्थितत्वोक्त्याऽऽधाराधेयभावस्योत्सर्गतः भेदव्याप्तस्य श्रुतत्वेनान्तस्थस्यादित्यत्वासंभवाच्च।।

(रा.) "स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नि" इत्यादाविवाभेदेप्याधाराधेयभावोपपत्त्याऽऽधाराधेयभावस्य भेदैकान्त्याभावात्।

तस्य भेदैकान्त्येऽपि मध्वमते "अन्योन्तर आत्मा प्राणमयः, अन्योन्तर आत्मा मनोमयः" इत्यादौ साक्षाद्भेदबोधकान्यशब्दसत्त्वेप्यन्नमयप्राणमयादीनामभेदस्वीकारेण आदित्यादित्यान्तःप्रविष्टयोर्भेदे गमकशब्दमात्रेणाभेदसिद्धिकथनस्यानुचितत्वादिति यदुक्तम्,

(खं.) तत्तुच्छम्, "तमात्मस्थं येनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इत्याद्या अभेदनिन्दायामभ्यासविशिष्टा जीवब्रह्मणोराधाराधेयभावलक्षणभेददर्शनशून्यानद्वैतिनः शाश्वतसुखाख्यमोक्षशून्यत्वेन निन्दति। आधाराधेयभावश्च भेदरूपो धर्म, "भेदेनैनमधीयते" इति सूत्रप्रामाण्यात् अभेदे आधाराधेयभावस्यासम्भावितत्वात्' इति विष्णुतत्त्वरहस्यविवरणे त्वयैवाधाराधेयभावेऽभेदो न सम्भवतीत्युक्तत्वेन स्वोक्तिविरुद्धत्वात्। "क्षीरोदमध्ये भगवान् कूर्मरूपी स्वयं हरिः। मंदराद्रेरधिष्ठानं....... रूपेणान्येन देवानां मध्ये...... दैत्यमध्येऽपरेण च...... शैलं बृहद्रूपेण......तथा परेण,......" इत्यादिना विष्णुपुराणे अभिन्नभगवद्रूपेष्वेव अन्यपरादिशब्दानां दृश्यमानत्वेन तत्रत्यतच्छब्दानां विशेषपरतयेवात्रान्नमयादीनां पञ्चानामपि विष्णुत्वस्य प्रमाणसिद्धतया अत्रत्यानामन्यशब्दानां विशेषाद्यर्थकतया योजनीयत्वात्। विस्तरस्तु पूर्वं कृतो द्रष्टव्यः॥

(चं.) पादान्त्यप्राणाधिकरणन्यायेन च सूर्यवरुणादिलिङ्गानामपि तदन्तर्गतभगवत्येव मुख्यत्वमिति यत्,

(रा.) तन्न, यत्र प्रकरणोपपदादिभिः प्रबलप्रमाणान्तरैः प्रकरणस्य विष्णुपरत्वं सिद्धं, तादृशप्रकरणस्थान्यलिंगस्य तदन्तर्यामिविष्णुनिष्ठत्वं पादान्त्याधिकरणे भवद्भाष्यादौ स्थापितम्। अत्र प्रकरणस्य विष्णुनिष्ठत्वस्याद्याप्यसिद्धतया अस्मदुक्तप्रमाणैश्च सूर्यनिष्ठत्वस्यैव सिद्धया एतत्प्रकरणस्थसूर्यलिंगस्य पादान्त्याधिकरणन्यायविषयत्वासम्भवात् इति यदुक्तम्

(खं.) तत्तुच्छं, अन्यत्र निरवकाशैर्बहुभिर्लिगैरन्तस्थस्य विष्णुत्वसिद्धेरुक्तत्वात्, यत्किञ्चिल्लिगस्यान्तर्यामिविष्णुनिष्ठताया अगत्या वक्तव्यत्वात् । अन्तःस्थस्य सूर्यगतत्वोक्त्या सूर्यरूपत्वासम्भवस्योक्तत्वाच्च ।

(चं.) किंच "इंद्रं मित्रं वरुणमग्निमाहुः" इत्यादिश्रुत्यैंद्रादिशब्दानां विष्णावेव विद्वद्रूढेः सत्त्वेनेंद्रादिशब्दप्रवृत्तिनिमित्तस्य परमैश्वर्यादेर्विष्णावेवानन्याधीनत्वनिरधिकत्वाभ्यां मुख्यतः संभवेन महायोगस्यापि सत्त्वेनेंद्रसवित्रादिश्रुतिर्विष्णावेव मुख्येति यत्,

(रा.) तन्न, तथासति सवित्रादिपूर्वपक्षस्यैवानुत्थानापत्तेः, विद्वद्रूढेश्चाज्ञरूढ्यपेक्षा प्रबलतया विद्वद्रूढ्या सवित्रादिशब्दैर्विष्णूपस्थितौ दुर्बलाज्ञरूढितः सवित्रादिशब्दै सूर्यादेरनुपस्थित्या सूर्यादिपूर्वपक्षस्यैवासङ्गतत्वादिति यदुक्तम्,

(खं.) तत्तुच्छम्, सिद्धान्तहेतत्वाच्छादनेनैव सर्वाधिकरणेषु सर्वैः पूर्वपक्षयितव्यत्वात् । अन्यथा पूर्वपक्षमात्रानुदयप्रसंगात् ।।

(रा.) तर्हि सिद्धान्तप्रतिपादकसूत्रे पूर्वपक्षनिरासकतया विद्वद्रूढेरेव वक्तव्यत्वापत्तेः । न च सूत्रे विद्वद्रूढिर्हेतुतया निर्दिष्टा दृश्यते, किंतु 'धर्मोपदेशात्' इति धर्मा एव हेतुतया निर्दिष्टाः प्रतीयन्त इति यदुक्तम्,

(खं.) तत्तुच्छम्, निरवकाशलिङ्गैः अन्तःस्थस्य विष्णुत्वं साधयित्वा सूर्यादिप्रापकानां सवित्रादिशब्दानां विष्णौ विद्वद्रूढिसत्त्वेन सावकाशताया उक्तत्वात् । विद्वद्रूढ्या सवित्रादिशब्दा अन्तस्थस्य विष्णुत्वे न हेतवः, किन्तु अन्तस्थस्य विष्णुत्वपक्षे न बाधका इत्येव सूत्रकृतोऽभिप्रेतम् । एवञ्च सूत्रे सवित्रादिशब्दानां विष्णौ विद्वद्रूढेर्निर्देशस्यानावश्यकत्वात् । नहि बाधकशङ्कानिरासकाः त्वदीयव्याख्यानरीत्यापि सर्वेषु सूत्रेषु दृश्यन्ते। 'अथातो ब्रह्मजिज्ञासा' इत्यादिसूत्रे जगतः सत्यत्वे विषयप्रयोजनानुपपत्तिरूपशङ्कानिरासकाध्यासादीनां सूत्रेऽकथनात् ।।

(रा.) किंच विद्वद्रूढिरज्ञरूढिरिति रूढिद्वैविध्यकथनमयुक्तं, प्रमाणादर्शनात् इति यत्,

(खं.) तत्तुच्छम्, शब्दस्य रूढिज्ञापकं प्रमाणं बहुलप्रयोगः। तस्य वैदिकत्वे तज्ज्ञाप्यरूढिः विद्वद्रूढिः लौकिकत्वे तज्ज्ञाप्या रूढिः अज्ञरूढिः। प्रकृते इन्द्रादिशब्दानां "इन्द्रं मित्रं वरुणमग्निमाहुः" इत्यादिवाक्येषु 'आहुः' इति विद्वत्प्रयोगस्य प्रमाणीकरणादस्य रूढेर्विद्वद्रूढिरिति व्यावहारोपपत्तिरित्यलम् ॥

(रा.) यत्तु– "तत् त्वमसि, अहं ब्रह्मास्मि" इत्यादिनिर्देशात् ब्रह्मशब्दस्यैव जीवे विद्वद्रूढ्यापत्तेः भवदभिमतविद्वत्प्रयोगबाहुल्यरूपविद्वद्रूढेः 'तत् त्वमसि' इति नवकृत्वोऽभ्यस्ते सम्यक् सम्भवादिति,

(खं.) तत्तुच्छं, 'इन्द्रं मित्रं वरुणं यमाहुः' इत्यादिश्रुतौ आहुरित्यादिपदेन वाच्यत्वस्योक्तत्वात्। तस्य विद्वद्रूढिज्ञापकत्वेऽपि 'तत्त्वमसि' इत्यादौ वाच्यत्वबोधकपदाभावात् अनया श्रुत्या जीवस्य ब्रह्मपदवाच्यत्वासिद्धेः। "तत्त्वमसि" इति श्रुतौ जीवब्रह्मपदयोरेवाभावेन 'अहं ब्रह्मास्मि' इत्यत्र जीवपदाभावेन ब्रह्मपदस्य जीवे रूढ्यापादनस्यात्यंतमसंगतत्वाच्च ॥

(रा.) यत्तु,–न चोक्तवाक्ये सामानाधिकरण्यनिर्देशबलेन जीवशब्दस्य अहंत्वमादेः ब्रह्मणि विद्वद्रूढिरिति वैपरीत्यं शङ्क्यम्, अस्मस्मिपदबलेन त्वमहंपदार्थजीवस्यैव विशेष्यत्वप्रतीत्या तदनुसारेण तद्ब्रह्मादिपदानां विशेषणवाचकानां विशेष्याभेदार्थं विशेष्यपरतया नेयत्वेन तद्ब्रह्मादिपदानामिव विद्वद्रूढ्या जीवत्वादेरावश्यकत्वादिति,

(खं.) तत्तुच्छम्, अनुक्तोपालम्भनत्वात्।

(रा.) यत्तु– एवं महायोगोऽप्यसिद्ध एव, योगे महत्त्वबोधकप्रमाणस्य कुत्राप्यदर्शनादिति,

(खं.) तत्तुच्छम्,

कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम्।
योगानां परमां सिद्धिं परमं ते पदं विदुः ॥

इति पञ्चरात्रान्तर्गतजितन्तेस्तोत्रस्यैव प्रमाणत्वात् ॥

(रा.) यत्तु– तदधीनत्वन्यायोऽपि न शक्तिग्राहकः,

यदधीनो गुणो यत्र तद्गुणी सोऽभिधीयते ।

इति भवद्भाष्योदाहृतवचनस्यानुपलब्धिपराहतत्वात् । शिष्यत्वगुणस्याचार्यनिरूपितत्वेन आचार्ये शिष्यशब्दरूढ्यापत्तेः। गुरुः शिष्य इति समानाधिकरणनिर्देशापत्तेश्चेति,

(खं.) तत्तुच्छम्, अल्पज्ञकर्तृकदर्शनाभावस्य वस्त्वसत्त्वासाधकत्वात् । राजा जयीति भृत्यगतजयस्य राजाधीनतया राज्ञि जयिशब्दस्य प्रयोगदर्शनेन तत्प्रयोगस्यामुख्यत्वाभिमानाभावेन च तच्छब्दप्रवृत्तिनिमित्तस्वामित्वस्यापि प्रवृत्तिनिमित्ताधिकरणत्वस्यैव वाच्यत्वप्रयोजकत्वात् । शिष्यत्वगुणस्याचार्यनिरूपितत्वेऽपि आचार्याधीनत्वाभावेन आचार्ये शिष्यशब्दरूढ्यापादनस्यात्यन्तमसङ्गतत्वाच्च ॥

(चं.) यथा 'श्येनेनाभिचरन्यजेत' इत्यादौ श्येनशब्दोऽन्यत्र रूढोऽपि 'यथा वै श्येनो निपत्यादत्ते' इति वाक्यशेषोक्तस्य श्येनसादृश्यस्य श्येनेऽनुपपत्त्या यागपरः, तथा समुद्रान्तस्थत्वादीनामन्यत्रासम्भवात् इन्द्रादिशब्दा विष्णुपरा एवेति यत्,

(रा.) तन्न, "सप्त युञ्जन्ति रथमेकचक्रं" इति वाक्यशेषात् सवितृसहितेन्द्रादिशब्दानां सूर्यनामत्वस्यैव न्याय्यत्वादित्यलमतिप्रसंगेनेति यत्,

(खं.) तत्तुच्छम्, सप्ताश्वत्वादिलिंगस्य सवितृश्रुतेश्च विष्णौ सावकाशतया सूर्यान्तस्थत्वस्य निरवकाशानां विष्णुलिंगानां च बाधकतया उक्तत्वेन अन्तस्थस्य सूर्यत्वाभावात्, इन्द्रादिशब्दानां सूर्यनामत्वायोगादित्यलमतिप्रसंगस्योत्तरदानेनेति ॥

इति अद्वैतखण्डनपूर्वक चन्द्रिकामण्डने

अन्तस्थत्वाधिकरणं समाप्तम् ॥

॥ श्रीः ॥

॥ अथ आकाशाधिकरणम् ॥

## ॐ आकाशस्तल्लिंगात् ॐ



(चं.) अत्राद्वैतिनस्त्वाहुः– "आकाश इति होवाच" इत्याकाशनिरूढप्रथमानुपसंजातविरोध्याकाशपदानुरोधेन बहून्यपि चरमाणि सर्वकारणत्वज्यायस्त्वानन्तत्वादीनि भूताकाशे कथंचिद्योज्यानि इति प्राप्ते, यद्यप्याकाशपदं 'सर्वाणि' इत्यादितः प्रथमं, तथापि परिहारवाक्यस्थाकाशपदादपि प्रथमानुपसंजातविरोधिप्रश्नानुसारेण चरमस्योत्तरस्य नेयत्वात् 'अस्य लोकस्य का गतिः' इति प्रश्नस्य च दृश्यमानसर्वप्रपञ्चविषयत्वात्सर्वलोकगतिरेवाकाशपदेन प्रतिवक्तव्या। न च लोकान्तर्गतो भूताकाशः सर्वलोकगतिः। किं च सर्वलोककारणत्वादिबह्वनुग्रहार्थमेकमाकाशदं जघन्यवृत्त्या ब्रह्मपरं, 'त्यजेदेकं कुलस्यार्थे' इति न्यायात्। तस्मात् सोपाधिकं ब्रह्मैवाकाशपदेनोपास्यत्वेनोपक्षिप्तं इति सिद्धान्त इति। अत्र ब्रूमः—प्रथमानुसारेण चरमास्वारस्ये पूर्वाधिकरणेपि प्रथमहिरण्यश्मश्रुत्वाद्यनुसारेण चरमं पापातीतत्वं जीवे कथं चिन्नेयं स्यात्। इहापि प्रश्नस्यानुरोध्यत्वे प्राथम्यमेव हेतुः, प्रश्नोत्तरयोरेकविषयत्वस्योत्तरानुसारेण प्रश्नव्याख्यानेपि सिद्धेः। किं च—

प्रकृतां पृथिवीं वक्ति प्रश्नस्थं सर्वनाम यत्।<br>
तस्मात्तदनुरोधी चेत्समाधिश्च तथा भवेत्॥

तथा हि--"असौ लोकः" इत्यादिना दाल्भ्योक्तं स्वर्गलोकस्य सामाश्रयत्वं शालावत्यः "अप्रतिष्ठितं वै किल" इत्यादिना दूषयित्वा "अयं लोकः" इत्यादिना पृथिवीलोकः सामाश्रय इत्यूचे। प्रवाहणस्तु तं "अन्तवद्वै किल" इत्यादिनाऽदूषयत्। तर्ह्यस्य लोकस्य का गतिरिति शालावत्येन प्रकृतपृथिवीलोकगतिरेव पृष्टा, न सर्वगतिः, अस्येति सर्वनाम्नः "प्रास्मा अग्नि" इत्यादाविव प्रकृतपरत्वात्। तथा च प्रश्नानुसारेणोत्तरव्याख्याने "सर्वाणि ह वै" इत्यत्र सर्वशब्दः पृथिवीमात्रपरः स्यात्। न च पृथिवीकारणस्यापां प्रसिद्धत्वेन प्रश्नवैय्यर्थ्यं, सर्वलोककारणस्यापि वाक्यान्तरतः प्रसिद्धेः, लोकतस्त्वपां पृथिवीकारणत्वस्याप्यप्रसिद्धेः। न च पृथिवीमात्र कारणप्रश्ने आप इति वक्तव्यत्वात्प्रतिवचने आकाशपदं 'सर्वाणि' इति सर्वपदं 'आकाशादेव' इत्यवधारणं चायुक्तम्। तस्मात्प्रश्नोपि सर्वलोकगतिविषय इति वाच्यम्। भामत्यां "प्रश्नोत्तरानुरोधेनोत्तरव्याख्यानम्" इत्युक्तत्वेनोत्तरानुसारेण प्रश्नव्याख्यानेऽन्योन्याश्रयादिति यदुक्तं,

(रा.) तन्न, हिरण्यश्मश्रुत्वादेर्जीवब्रह्मसाधारणतया जीवासाधारणधर्मत्वाभावेनोपक्रमगतेनापि तेन जीव इति निर्णयासम्भवात्। सर्वपापोदितत्वस्य ब्रह्मासाधारणधर्मस्य हिरण्यश्मश्रुत्वादिवशेन जीवे नयनासम्भवादिति यत्,

(खं.) तत्तुच्छम्,

मर्यादाधाररूपाणि संसारिणि परे न तु।
तस्मादुपास्यः संसारी कर्मानधिकृतो रविः॥

इति भामत्यां 'रूपवत्त्वश्रवणात् आधारश्रवणाच्च 'चक्षुरन्तस्थः संसारी' इति भाष्ये च हिरण्यश्मश्रुत्वादेर्जीवासाधारण्यमङ्गीकृत्य पूर्वपक्षकरणात्,

तस्य ब्रह्मसाधारणत्वे पूर्वपक्षस्यैवायोगात् । 'हिरण्यश्मश्रुत्वादेर्जीवब्रह्मसाधारणतया जीवासाधारणधर्मत्वाभावेन' इति त्वदुक्तेः स्वभाष्यभामत्यादिग्रन्थानवलोकननिमित्तत्वात् । सर्वपाप्मोदितत्वस्य अद्वैतिमतरीत्या भाविविवक्षया वा, सर्वशब्दस्य सङ्कोचेन यत्किञ्चित्पापोदितत्वविवक्षया वा, "सर्वपाप्मविरहश्चादित्यपुरुषे सम्भवति, शास्त्रस्य मनुष्याधिकारितया देवतायाः पुण्यपापयोरनधिकारात्" इति भामतीरीत्या वा जीवे नयनसम्भवात् असम्भवोक्तेः भामत्याद्यज्ञानमूलत्वाच्च ॥

(चं.) यच्चोक्तं "त्यजेदेकं कुलस्यार्थे" इति न्यायेन सर्वलोककारणत्वादिबह्वनुग्रहार्थं एकं आकाशपदं जघन्यवृत्त्या ब्रह्मपरमिति, तन्न, आकाशश्रुतेः प्रधानत्वात् अप्रधानानेकलिङ्गबाधस्यापि "आत्मार्थे पृथिवीं त्यजेत्" इति न्यायसिद्धत्वादिति यदुक्तं,

(रा.) तन्न, सर्वलोकगतित्वलिङ्गस्य प्रश्नस्थत्वनिमित्तकप्राबल्यसत्त्वेन नैमित्तिकप्राबल्यस्य स्वाभाविकश्रुतिप्राबल्यापेक्षया 'नित्यात् प्रबलं नैमित्तिकं' इति न्यायेन प्रबलतया सर्वलोकगतित्वरूपसर्वकारणत्वस्यैव 'आत्मार्थे' इति न्यायघटकात्मस्थानीयत्वात् । अत एव यादृशलिङ्गस्य नैमित्तिकत्वप्रयुक्तप्राबल्यं नास्ति, तादृशस्यैव "श्रुतिलिङ्गवाक्यप्रकरण" इति सूत्रे पूर्वतंत्रे श्रुतितो दौर्बल्यमुक्तमित्यवधेयमिति यत्परेणोक्तं,

(खं.) तत्तुच्छम्, सर्वलोकगतित्वलिङ्गे प्रश्नस्थत्वस्यैवाभावात् । तथा हि– "अमुष्य लोकस्य का गतिः" इति प्रश्ने "अयं लोक इति होवाच" इति पृथिवी लोकस्य गतित्वोक्तौ "अस्य लोकस्य का गतिः" इति पृथिवीलोकस्य गतिप्रश्ने "आकाश इति होवाच" इति वाक्यस्य प्रवृत्तत्वात् पृथिवीलोकगतित्वमेव प्रश्नस्थं, न तु सर्वलोकगतित्वमिति तस्य प्रश्नस्थत्वनिमित्तकप्राबल्यस्य च दूरोत्सारितत्वात् । सर्वलोकगतित्वस्य प्रश्नस्थत्वनिमित्तकप्राबल्योक्तौ आकाशपदस्योत्तरस्थत्वनिमित्तक-

प्राबल्यस्यापि वक्तुं शक्यत्वाच्च । न हि प्रश्नस्थत्वमेव प्राबल्यप्रयोजक न तूत्तरस्थत्वमित्यत्र किंचिन्नियामकं पश्याम इति, आकाशश्रुतेरेव 'आत्मार्थे' इति न्यायघटकात्मस्थानीयत्वं, न तु सर्वलोकगतित्वरूपकार-णत्वस्येति ॥

(चं.) किं च–

कारणे कार्यगा यद्वत्तथा कार्येपि हेतुगाः ।
व्यपदेष्टुं हि शक्यन्ते धर्मा ऐक्याविशेषतः ॥१॥

पूर्वाधिकरणे त्वत्पक्षे कार्यगतस्य हिरण्यश्मश्रुत्वादेः कारणे व्यपदेश इवेह कारणब्रह्मधर्माणां सर्वकारणत्वादीनां भूताकाशे व्यपदेशोस्तु, तयोरभेदा-विशेषादिति यत्,

(रा.) तन्न, कारणधर्मस्य कार्ये सत्त्वाङ्गीकारे मृद्रूपकारणगत-शरावत्वादेः मृत्कार्यघटादावपि प्रसक्त्या मृद् घट इतिवत् शरावो घट इति प्रत्ययापत्तेरिति पूर्वाधिकरण एवोक्तत्वादिति यत्परोक्तं,

(खं.) तत्तुच्छम्, कार्यगतधर्मैः कारणं व्यपदिश्यत इत्यङ्गीकारेपि घटादिगतजलाधारत्वपृथुबुध्नोदराकारत्वादिधर्मैः मृदोपि मृत् पृथुबुध्नो-दराकारा इत्यादिव्यवहारापत्तेः साम्यात् । कार्यगतैः सर्वैः धर्मैः कारणं नियमेन व्यपदिश्यत इति नियमानङ्गीकारेणोक्तापत्त्यसम्भवे कारणगतैः सर्वैः धर्मैः कार्यं नियमेन व्यपदिश्यत इति नियमस्यास्माभिरप्यनङ्गीका-रेण त्वदुक्तापत्तेरप्यसम्भवात् इति पूर्वाधिकरण एवास्माभिरप्युक्तत्वात्। शरावत्वदीनां मृद्रूपकारणगतत्वाभावाच्च ॥

(चं.) किं च––

विशिष्टविषयत्वं चेदनन्तत्वाद्यसम्भवः ।
विशुद्धविषयत्वं चेज्जजायस्त्वादेरसम्भवः ॥

न हि सोपाधिके परिच्छिन्ने ब्रह्मणि अनन्तत्वादिकम्। नापि निर्विशेषे ज्यायस्त्वादिकम्.....यद्यपि वस्तुतो निर्विशेषे आरोपितो विशेषो न विरुद्धः, तथापि त्वदुक्तः सविशेषनिर्विशेषविद्ययोरधिकारिभेदः फलभेदो विद्याभेदेन पापभेदश्च न स्यात्। एवमुत्तराधिकरणविषयवाक्येष्वपि सगुणनिर्गुणोभयलिंगयुक्तेषु दोष ऊह्यः। किं च सूत्रोक्तं लिङ्गं न तावद्ब्रह्मणि तत्त्वतोऽस्ति।

यदि चारोपितं लिङ्गं तत्साध्या ब्रह्मतापि हि।
आरोपिता स्यादेवं च पूर्वपक्षः स्थिरो भवेत्॥

तस्मान्मतान्तरमयुक्तमिति चन्द्रिकोपरि,

(रा.) यत्तु– एतेन 'तद्ब्रह्म सविशेषं' इत्यादिः 'पादभेदश्च न स्यात्' इत्यन्तः चन्द्रिकाग्रन्थः परास्तः, बाष्यभामत्योः "आकाश इति होवाच" इत्याकाशपदस्योपहितब्रह्मपरत्वोक्तया सविशेषनिर्विशेषत्वविकल्पस्यैवानवकाशात्। सविशेषे मायोपहितब्रह्मणि अनन्तशब्दितविनाशशून्यत्वरूपानन्तत्वस्य द्रव्यत्वव्यापकसंयोगप्रतियोगित्वरूपज्यायस्त्वस्य च मुख्यतः सम्भवाविरोधात्। धर्माणां सविशेषमात्रगतत्वेन निर्विशेषावृत्तितया विद्याभेदफलभेदाधिकारिभेदपादभेदानां सम्यगुपपत्तेरिति परोक्तं,

(खं.) तत्तुच्छं, शाङ्करकभाष्ये भामत्यां वा आकाशपदमुपहितब्रह्मपरमित्यनुक्तेः। निर्विशेषब्रह्मपरतया त्वदभिमतेऽधिकरणेऽपि अनेकधर्माणां कथनेन अस्मिन्नधिकरणे ज्यायस्त्वादीनां कथनमात्रेण उपहितब्रह्मपरत्वानिर्णयात्। मायानाशप्रयुक्तनाशवति मायोपाधिकब्रह्मणि विनाशशून्यत्वरूपानन्तत्वस्यायोगात्। सविशेषे ज्यायस्त्वाद्यसम्भवस्यानाशङ्कितत्वेन निर्विशेषे तदसम्भवस्योक्तत्वेन च 'सविशेषे द्रव्यत्वव्यापकसंयोगप्रतियोगित्वरूपज्यायस्त्वस्य च मुख्यतः सम्भवाविरोधात्' इत्युक्तेः

आम्रप्रश्ने कोविदारकथनस्येवायुक्तत्वाच्च । निर्विशेषे ब्रह्मणि निर्विशेषत्वसर्वभ्रमाधिष्ठानत्वादिधर्माणामवश्यमद्वैतिभिरङ्गीकार्यत्वाच्च । विष्णुतत्त्वरहस्यादिग्रन्थे ब्रह्मणः सगुणत्वमेव न निर्विशेषत्वमिति श्रुतिसूत्राणां शाङ्करभाष्यस्यापि अभिप्राय इति त्वयैव वर्णितत्वेन सविशेष निर्विशेषविषयतया विद्यादिभेदकथनानुपपत्तेः । तस्मात्मतान्तरमयुक्तमिति ॥

ॐ आकाशस्तल्लिङ्गात् ॐ । अत्राधिभूतगताकाशादिमग्नां समन्वय उच्यते। भूतेषु आकाशस्य प्राधान्यात्सूत्रे तस्य मुखतः कीर्तनं, अन्येषां तूपलक्षणम् । अनन्तरसङ्गतिस्तु--अधिकाशङ्कां कृत्वा पूर्वन्याय एवातिदिश्यते इति आतिदेशिकी । "अस्य लोकस्य का गतिरित्याकाश इति होवाच । सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एषोनन्तः" इत्यत्राकाशः किं भूताकाशः किं वा ब्रह्मेति चिन्ता । तदर्थं किमाकाशश्रुतिप्रसिद्ध्यनुसारेण परोवरीयस्त्वादिलिङ्गं बाध्यं किं वा विपरीतमिति। तदर्थं प्रसिद्धिबाधे श्रुतेः किं मुख्यत्वहानिरुत नेति। तदर्थमाकाशशब्दप्रवृत्तिनिमित्तं ब्रह्मणि किं नास्ति उत अस्तीति। तदर्थं जडस्वभावः किमीश्वरानधीन उत तदधीन इति । यद्यधीनस्तदा तदधीनत्वन्यायेन ब्रह्मणि मुख्यत्वमन्यथा तु नेति। पूर्वपक्षस्तु--अयमाकाशः भूताकाश एव आकाशशब्दस्य तत्र रूढत्वात् । न च वाच्यं योगवृत्त्या आकाशशब्दो विष्णौ सावकाश इति, बाधकं विनाऽमुख्यार्थाङ्गीकारायोगात् । नापि आकाशशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वेन तत्रैवाकाशशब्दो मुख्य इति युक्तं,

चेष्टा हि चेतनानां या सा भवेत्तत्प्रसादतः ।
अचेतनस्वभावस्तु विवरादिः कथं ततः ॥

इत्याकाशस्याचेतनत्वेन, तद्गतप्रवृत्तिनिमित्तस्य स्वभावत्वेन चान्याधीनत्वायोगात्, चेतनस्य चेष्टादावन्याधीनत्वं सम्भवतीति । यद्यप्यवकाशो

ष्यसौ रूढः तथापि पृथिवीलोकगतित्वोपपादकतयोक्तकारणत्वस्य "आकाशाद्वायुः" इत्यादौ भूताकाश एव श्रवणात् स एवात्र ग्रहीतुं युक्तः, नावकाशरूपाकाशः। अतो "यदेष आकाश आनन्दो न स्यात्" इत्यत्रापि स एव प्रतिपाद्यते। अतः आनन्दमयोपि स एवेति। सिद्धान्तस्तु— अयमाकाशः विष्णुरेव, तस्मिन् निरवकाशानां बहूनां परोवरीयस्त्वे द्गीथत्वानन्तत्वादीनां श्रवणात्। श्रुत्या पूर्वपक्षिते कथं लिङ्गेन निर्णयो लिङ्गस्य श्रुतिनो दौर्बल्यादिति न शंक्यं, "नामानि सर्वाणि यमाविशन्ति, यो देवानां नामधाः, सर्वे वेदाः सर्वे घोषाः" इत्यादिश्रुत्या विष्णौ आकाशश्रुतेः सावकाशत्वात्। आकाशशब्दप्रवृत्तिनिमित्तविवरत्वस्य भगवदधीनत्वेन योगवृत्त्यापि विष्णौ आकाशशब्दस्य विद्यमानत्वेन सावकाशत्वादिति। एतदुपरि,

(रा.) तत्र, रूढ्यनुग्रहरूपपूर्वपक्षहेतोर्निरवकाशलिङ्गबाध्यत्वरूसिद्धान्तहेतोश्च भौतिकमात्रविषयत्वे नियामकाभावादिति यत्परेणोक्तं,

(खं.) तत्तुच्छं, त्वदुक्तभाशंक्य चंद्रिकायां समाधानस्योक्तत्वात्। तथा हि— "यद्यपि भूतेतरवाचिनामप्येतन्न्यायविषयाण मनेन समन्वयः सिध्यति, तथापि सजातीये भूतशब्दे प्रथमं बुद्ध्यवतारात् आधिदैविकेन्द्रादिशब्देष्वाध्यात्मिकप्राणादिशब्देषु च स्वभावप्रवृत्तिनिमित्तकत्वाभावेनेतरत्रैतन्न्यायाप्रवृत्तेश्च टीकायामाधिभौतिकोपलक्षकतोक्तिः" इति वाक्येन आधिदैविकादिव्यावृत्त्यर्थमेवाधिभौतिकोपलक्षकतोक्तिर्न तु एतन्न्यायविषयाणां अन्येषामसमन्वेतव्यत्वाभिप्रायेणेति ॥

(रा.) न चाधिदैविकेन्द्रादिनामसमन्वयानन्तरं बुद्धिस्थत्वादाधिभौतिकनिरूपणमिति युक्तं, तर्हि तन्न्यायेनैवास्य गतार्थत्वं दुर्वारं, तत्र पि निरवकाशलिङ्गबलादेव भवद्भिः श्रुत्यन्यथाकरणादिति यत्परेणोक्तं,

(खं.) तत्तुच्छं, बुद्धिस्थत्वादाधिभौतिकनिरूपणमित्यस्माभिरनुक्तत्वात्। पूर्ववत् निरवकाशलिङ्गबलेन श्रुत्यन्यथाकरणेपि गतार्थता-

शङ्कायाः अभावात्, अधिकाशङ्कया पूर्वपक्षप्रवृत्तेः, तादृशपूर्वपक्षकरणे पूर्वन्यायस्यैव वक्तव्यत्वात्।

कृत्वा त्वभ्यधिकाशङ्कां पूर्वमेवातिदिश्यते।
तत्रातिदेशिकी प्रोक्ता ......,.. ।।

इति आतिदेशिकसङ्गतिलक्षणाज्ञाननिबन्धनत्वात्त्वत्कृतशङ्कायाः।।

(रा.) न च पूर्वन्यायातिदेश एवायमिति मध्वचंद्रिकोक्तं युक्तं अस्याधिकरणस्यातिदेशिकत्वे "अत एव प्राण" इतिवत् 'अत एवाकाशः इति वा 'आकाशश्च' इति वा 'तथाऽऽकाशः' इति वा सूत्रनिर्देशापत्तेरिति यत्परेणोदितं,

(खं.) तत्तुच्छं, "कृत्वा त्वभ्यधिकाशङ्कां" इति आतिदेशिकीलक्षणस्य कथितत्वात् पूर्वन्यायकथनेनैवातिदेशिकसंगतेः सम्भवेन त्वदुक्तरीत्या सूत्रविन्यासः कर्तव्य इत्यत्र नियामकाभावात् ।।

(रा.) किं चाव्यवहितपूर्वाधिकरणेनोत्तराधिकरणस्य संगतिर्वक्तव्या तथैव पूर्वतन्त्रे दर्शनात्। इह तथानुक्त्वा एकान्तरितेनानन्दमयाधिकरणेनास्य संगत्युक्तिरयुक्तेति यत्,

(खं) तत्तुच्छम्, चन्द्रिकाग्रन्थादर्शनमूलत्वादेतच्छङ्कायाः। अनन्तरसंगतिस्त्वभ्यधिकां शङ्कां कृत्वा पूर्वन्याय एवातिदिश्यत इति आतिदेशिकी" इति अव्यवहितपूर्वाधिकरणेन संगतेरुक्तत्वात्। अव्यवहितपूर्वाधिकरणेनैव संगतिर्वक्तव्येति नियमाभावाच्च। पूर्वतन्त्रव्याख्यानकृता तया प्रदर्शनस्य नियामकत्वासम्भवात्। कम्पनाधिकरणे वेदान्तकल्पतरौ "अस्यानुप्रसक्तेनापशूद्रविचारेण न संगतिरिति व्यवहितेनोच्यते" इति व्यवहिताधिकरणेन संगतेरुक्तत्वाच्च ।।

(रा.) किं च "नामानि सर्वाणि यमाविशन्ति" इति श्रुत्या सर्वनाम्नां विष्णुपरत्वोक्तिरयुक्ता, तादृशश्रुतेरिदानीं केनाप्यनधीतत्वात्। तादृशकोशादर्शनाच्च तस्याः सन्दिग्धश्रुतित्वप्रामाण्यकत्वादिति यदुक्तं,

(खं.) तत्तुच्छम्, "नामानि" इति श्रुतेः श्रुतित्वप्रामाण्ययोर्विषये संदिहानस्य को वाभिप्रायः, ईश्वरस्य सर्वशब्दबोध्यत्वमस्तीति उत नास्तीति। सर्वशब्दबोध्यत्वांगीकारे कृतं श्रुतिस्वरूपसदसद्भावविचारेण। शंकरभाष्ये शाबरभाष्यादौ च अनधीतानां श्रुतिकोशेष्वदृष्टानां श्रुतिनामुपलम्भेन तत्समानयोगक्षेमत्वादस्याः। ऐतेरेये "एव इमे लोकमभ्यार्चत् तं यच्छन्नं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इत्याचक्षते" इत्यादिना एकैकशब्दस्य परमात्मति योगरूढिमुक्त्वा "ता वा एताः सर्वाः ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात्" इति सर्वशब्दानां, "यो देवानां नामधाः" इति ऋग्वेदे देवबोधकशब्दानां, बृहदारण्ये ऐतरेयेऽन्यभागे च विद्युदहरहमिन्द्राद्यनेकशब्दानां, "सर्वे वेदा यत्पदमामनन्ति" इति वेदे "वेदैश्च सर्वै रहमेववेद्यः" इति गीतायां परमात्मपरत्वस्य कथितत्वाच्च। ईश्वरस्य सर्वशब्दवाच्यवानंगीकारायोगेन द्वितीयपक्षस्यायुक्तत्वाच्च ॥

इत्यद्वैतखण्डनपूर्वकचन्द्रिकामण्डने आकाशाधिकरणं

सम्पूर्णम्

: श्री :

।। अथ प्राणाधिकरणम् ।।

## ॐ अत एव प्राणः ॐ



(चं.) अद्वैतिनः, "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' इत्युपक्रम्य श्रूयते, "कतमा सा देवता प्राण इति होवाच। सर्वाणि हवा इमानि भूतानि प्राण ।वाभिसंविशन्ति प्राणमभ्युज्जिहते" इति। तत्र प्राणशब्दः प्रसिद्धप्राणपर इति प्राप्ते, ब्रह्मपर एवायं, सर्वभूतसंवेशनादिब्रह्मलिंगादिति सिद्धान्तः। न चैवं पूर्वेणैतद्गतार्थमिति शङ्क्यं, "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः" इत्यादिश्रुतेः स्वापकाले प्रसिद्धप्राणे सर्वभूतसारेन्द्रियलयाद्युक्तिद्वारा सर्वभूतलयादिपरायाः प्रत्यक्षरूपमानांतरसंवादित्वेन प्रबलत्वात्, ब्रह्मणि भूतलयादिबोधिकायाश्च "यतो वा इमानि" इत्यादिश्रुतेस्तदननुगृहीतत्वेन दुर्बलत्वात्। पस्ताववाक्यमपि प्रबलानुसारेण प्रसिद्धप्राणे सर्वभूतलयादिपरं, न तु ब्रह्मणि सर्वभूतलयादिपरं। यद्वाप्रबलस्वापवाक्यानुसारेण प्रस्तावबाक्यमपि प्रसिद्धे प्राणे इन्द्रियमात्रलयादिपरम्, "आकाशाद्वायुः" इत्यादिवाक्ये तु न मानान्तरानुगृहीतमिति तदनुसारेण "सर्वाणि हवा इमानि भूतान्याकाशादेव" इति वाक्यं न वाय्वादिनात्रकारणभूताकाशपरमिति पूर्वस्मादधिकाशङ्कायां. पुंवाक्ये मानांतरानुग्रहतदभावाभ्यां प्राबल्यदौर्बल्ये स्तः अपुंवाक्येऽनाशङ्कितदोषे न ताभ्यां ते स्त इति तन्निरासार्थत्वादस्येत्याहुः। तदुक्तं भामत्यां—

पुंवाक्यस्य बलीयस्त्वं मानान्तरसमागमात् ।
अपौरुषेये वाक्ये तत्सङ्गतिः किं करिष्यति ॥

इति। तन्न, पूर्वपक्षे प्राणस्य जडवायुत्वे प्रश्ने "कतमा सा देवता" इति, प्रतिवचने च "सैषा देवता" इति देवताशब्दायोगात्, तदभिमानिचेतनत्वे च "वायुविकारस्य पंचवृत्तेः प्राणस्योपादानं युक्तं" इत्यादित्वत्पूर्वपक्षभाष्यविरोधादिति यदुक्तं,

(रा.) तन्न, "हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्यादिश्रुतिषु अचेतने देवताशब्दस्यास्यामेवोपनिषदि असकृदुक्तत्वेन न चेतनैकान्तमिति मन्यमानपुरुषरीत्या पञ्चवृत्तिवायुरत्र प्राणशब्देन ग्राह्य इति मत्वा पूर्वपक्षकरणादिति, यत् परेणोक्तं,

(खं.) तत्तुच्छं, "तत्तेज ऐक्षेत, ता आप ऐक्षन्त" इत्यत्रेक्षणकर्तृत्वनिर्देशात् "तेजआदिशब्देन तदभिमानिदेवतैव व्यपदिश्यते" इति अभिमान्यधिकरणशाङ्करभाष्याच्च अचेतने देवताशब्दप्रयोगासिद्धेः देवताशब्दस्य चेतनैकान्तत्वाभावशङ्काया एवायोगेन, भामत्यां "अपि चोद्गीथप्रतिहारयोः सामभक्त्योर्ब्रह्मणोन्ये आदित्यश्चान्नं च देवते अभिहिते कार्यकारणसङ्घातरूपे । तत्साहचर्यात्प्राणोऽपि कार्यकारणसङ्घातरूप एव देवता भवितुमर्हति" इति प्राणशब्दस्य देवतापरतायाः सम्भवकथनेन च तथामन्यमानपुरुषरीत्या पञ्चवृत्तिवायुरत्र प्राणशब्देन ग्राह्य इति पूर्वपक्षकरणायोगात् ॥

(चं.) स्वापवाक्ये मानांतरसंवादस्यैवाभावेन तं स्वीकृत्य पूर्वोत्तरपक्षोक्त्ययोगाच्च। तथा हि--

न हि स्वापे पृथिव्यादे रक्षाणां वा विनाशधीः ।
प्रत्यक्षादनुमानाद्वा देवतायां जडेऽथवा ॥ १ ॥

न तावत्स्वापकाले जडे देवतायां वा महाभूतानां लयादौ मानांतरसंवादः, तेषां स्वापकालेऽप्यलीनानामेवानुभवात्। दृष्टिसृष्टिमते च तदा वायुविकारादेरप्यभावेन तत्र भूतलयायोगात्। नापि स्वापकाले जडे वा देवतायां चेन्द्रियाणां लये प्रत्यक्षसंवादः, तेषा मतींद्रियत्वात्। नापि स्वापकाले वायुवृत्तेरलोपादिंद्रियवृत्तीनां च लोपात्तत्र तेषां लयोऽनुमीयत इत्यनुमानसंवादोऽस्तीति वाच्यं, त्वया जन्मादिसूत्रे ब्रह्मण उपादानत्वेऽपि श्रुतिसंवाद्यनुमानानामुक्तत्वात्। यस्मिन् सव्यापारे सति यन्निर्व्यापारं तत्तत्र लीयत इति व्याप्त्यभावाच्च।

पूर्वेद्युर्येन दृष्टं तेनैव चक्षुषा पश्यामीत्यादिप्रत्यभिज्ञाविरोधाच्च। "यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते एवं हवै तत्सर्वं परे आत्मनि संप्रतिष्ठत" इति प्रक्रम्य "चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च" इत्यादिना चक्षुरादीनामनाशस्यैव श्रवणाच्च। भूतानामिंद्रियाणां च स्वापकाले लयस्य प्रत्यक्षादिप्रमाणांतरसिद्धतोक्तिरयुक्तेति यदभिहितं,

(रा.) तन्न, सुप्तोत्थितस्य एतावन्तं कालं किमपि भूतं नादर्शं नाश्रौषमिति प्रत्यवमर्शरूपप्रमाणेन सुप्तिकाले भूतादर्शनादेः सिद्धतया तददर्शनस्य निमित्तं वाच्यम्। तत्किं विषयस्य भूतस्य लीनतया तदभाव उत भूतदर्शनजनकस्येन्द्रियस्य लीनतया तदभावो वेति विमर्शे निनिगमकाभावात् भूतेन्द्रियोभयलयस्य च प्राणवृत्तिमात्रप्रधाने स्वापकाले प्रमाणान्तरवेद्यत्वोक्त्यविरोधात्। यस्मिन् गङ्गाप्रवाहे पूर्वद्युर्मया स्नानं कृतं तस्मिन्नेवाहं स्नास्यामीत्यादौ पूर्वपूर्वप्रवाहविनाशेऽपि तत्तज्जातीयोत्तरोत्तरचक्षुः प्रवाहाभिप्रायेण चक्षुरैक्यव्यपदेशोपपत्त्या चक्षुर्लयोक्त्यविरोधात्। वयसां संचरणकाले सव्यापारपक्षद्वयविशिष्टत्वावस्था या दृश्यते तादृशावस्थाया वासोवृक्षकोटरावस्थानकाले विनाशवच्चक्षु-

द्रष्टव्यादीनामपि सूक्ष्मरूपेण ब्रह्मण्यवस्थानेऽपि स्थूलावस्थानाशस्य स्वापकालानुभूतस्यैव "यथा सोम्य वयांसि" इति श्रुत्युक्त्या तथा चक्षुरादिलयाभावाप्रतीतेरिति यदुक्तं,

(खं.) तत्तुच्छम्, अद्वैतमतानुवादकाले सर्वभूतसारेन्द्रियलया-द्युक्तिद्वारा सर्वभूतलयादिपरायाः प्रत्यक्षरूपमानांतरसंवादित्वेन प्रबल-त्वादिति त्वया संवादितया प्रत्यक्षस्योक्तत्वेन सुप्तोत्थितस्येत्यारभ्य 'प्रमाणांतरवेद्यत्वोक्त्यविरोधात्,' इत्यन्तेन वाक्येन प्रत्यक्षस्य प्रमाण-तयानुपन्यासात् । न चेदं वाक्यं इतरप्रमाणसंवादित्वज्ञापकमिति वाच्यं, त्वदीयवाक्यसूचितेतरप्रमाणस्याप्यासम्भवात् । तथाहि त्व-दीयवाक्येन प्रतीयमानं प्रमाणं अर्थापत्तिर्वा अनुमानरूपं वा । नाद्यः, सुप्तिकाले भूतादर्शनस्य सिद्धत्वेऽपि लोके पदार्थादर्शनस्य विषयाभावेन वा विषयस्य विद्यमानत्वेऽपि इन्द्रियाभावेन वा विषयेन्द्रियोरुभयोः सतोरपि सन्निकर्षाभावेन वा प्रतिबन्धेन वा दृष्टत्वेन तद्वदेव भूतादर्शन-स्यापि भूतनाशेन वा भूतस्य विद्यमानत्वेऽपीन्द्रियनाशेन वा भूतेन्द्रिययो-रुभयोर्विद्यमानत्वेऽपि सन्निकर्षाभावादिना वा संभवेन भूतेन्द्रिययोरुभयो-र्नाशं विनाऽनुपपत्त्यभावेन तयोर्नाशकत्वकल्पकत्वासम्भवात्। न च विनि-गमकाभावादुभयलयसिद्धिरिति वाच्यं, दिवाऽभुञ्जानत्वे सति पीनत्वस्य विनिगमकाभावात् योगार्द्धरात्रभोजनोभयसाधकत्वप्रसंगात् । न द्वितीयः, स्वापकालः इन्द्रियभूतोभयलयवान् भूतदर्शनाभाववत्त्वात् इति हि अनु-मानं वक्तव्यम् ॥

एतादृशानुमाने यः कालः यद्दर्शनाभाववान् स तद्दर्शनप्रयोज-केन्द्रियोभयलयवानिति सामान्यव्याप्तिर्वा यः कालः भूतदर्शनाभाववान् स भूतेन्द्रियोभयलयवानिति विशेषव्याप्तिर्वा वक्तव्या । नाद्यः, घटसत्ता-कालीनचक्षूरहितपुरुषसंबंधिघटदर्शनाभाववत्कालस्य घटलयाधिकरण-त्वाभावेन घटनाशकालीनचक्षुष्मत्पुरुषकर्तृकघटदर्शनाभाववतः कालस्य घटतद्दर्शनप्रयोजकेन्द्रियोभयलयाधिकरणत्वाभावेन च व्यभिचारात् । न

द्वितीयः, साध्यसाधनाधिकरणस्थलस्यैवाभावेन व्याप्तिग्रहाभावात् । इन्द्रियभूतोभयलयाभाववति इन्द्रियभूतान्यतराधिकरणकाले भूतदर्शनस्याभावेन व्यभिचारितया यः इन्द्रियभूतोभयलयाभाववान् स भूतदर्शनाभाववानिति व्यतिरेकव्याप्तेरप्यसंभवात् ॥

तुष्यत्विति न्यायेन स्वापकाले भूतेन्द्रिययोर्लयसिद्धयङ्गीकारेऽपि प्रसिद्धप्राणे लयासिद्ध्या "यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः" इति श्रुतेः मानांतरणंवादित्वाप्राप्तया बलवत्त्वासिद्धेः । प्रतिदिनमिंद्रियणामुत्पत्तिविनाशाङ्गीकारे पूर्वेद्युर्येन चक्षुषा दृष्टं तेनैव चक्षुषा पश्यामि इत्यादिप्रत्यभिज्ञाविरोधोक्तौ चक्षुरैक्यव्यपदेशोपपत्त्येति व्यपदेशोपपत्तिकथनस्यासंमतत्वात् । यस्मिन् गङ्गाप्रवाहे पूर्वेद्युर्मया स्नानं कृतं तस्मिन्नेवाहं स्नास्यामीति व्यपदेशस्य प्रत्यक्षविरोधेन सादृश्यार्थकतया योजनेऽपि पूर्वेद्युर्येन चक्षुषा दृष्टमित्यादिव्यपदेशस्य प्रत्यक्षविरोधाभावेन सादृश्यार्थकतया योजनाऽसंभवाच्च । अन्यथा पूर्वोत्तरवस्तुनोरैक्यग्राहकप्रत्यभिज्ञादेरपि सादृश्यादिविषयकत्वस्य वक्तुं शक्यत्वेन प्रत्यभिज्ञाऽदिना क्षणिकत्वादिनिराकरणं न स्यात् । कस्मिन् सर्वे प्रतिष्ठिता भवन्तीति प्रथममन्त्रोक्तप्रश्नस्योत्तरभूतेन "स यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठंते एवं हवैतत्सर्वं परे आत्मनि संप्रतिष्ठते" इति वाक्येन यथा पक्षिणः स्वावासस्थानभूतं वृक्षं संप्रतिष्ठंते एवं खल्वेतत्सर्वं पृथिव्यादितत्वजातं परे परमात्मनि विष्णौ संप्रतिष्ठते तदाधारं सत् वर्तते इति सर्वेषामीश्वराधारतया स्थितिं विधाय उत्तरवाक्ये "पृथिवि च पृथिविमात्रा च चक्षुश्च द्रष्टव्यं च" इत्यादिना सर्वपदार्थस्य विवरणादिति । अस्यां श्रुतौ पक्षिणां वा इन्द्रियाणां वा लयस्याकथनात् । प्रत्युत 'संप्रतिष्ठते' इति स्थितेरेव कथनात् । सव्यापारपक्षद्वयविशिष्टत्वावस्था दृश्यते तादृशावस्थया वासोवृक्षकोटरावस्थानकालेऽभावमात्रेण पक्षिणां नाशाङ्गीकारे संचरणकालेऽपि निर्व्यापारपक्षद्वयविशिष्टावस्थाया अभावेन पक्षिणां नाशाङ्गीकारप्रसंगस्य भोजनकाले भाषणकाले च भोजनाद्यभावविशिष्टावस्थाया अभावेन पुरुषो नष्ट

इति व्यवहारस्य चापत्तेः। चक्षुरादीनामेतादृग्लयस्य सर्वदा सत्त्वेन "यदा वै पुरुषः स्वपिति" इति कालविशेषकथनस्यायुक्तत्वापत्तेश्च। "परे आत्मनि सम्प्रतिष्ठते" इत्युक्त्या प्राणे इंद्रियलयकथनस्यायुक्तत्वाच्च ॥

(चं.) किं चाकाशाद्वाय्वाद्युत्पत्तिरपि मानांतरसंवादिनी, आकाशात्पवनस्य पवनाच्च फूत्काराद्दहनस्य दहनाच्चोष्मतः स्वेदस्य वृष्टितश्च पार्थिवपदार्थनामुत्पत्तेर्दर्शनात् इति नाकाशवाक्यात्प्राणवाक्येऽधिकाशंकेति यदुक्तं,

(रा.) तन्न, यथा संचिकाधारितवस्त्रं प्रति संचिकाया आधारत्वमात्रं न तु वस्त्रं प्रति जनकत्वं, तथाकाशावस्थितपवनं प्रति आकाशस्य प्रत्यक्षादिनाऽऽधारत्वमात्रावगमेऽपि आकाशस्य तज्जनकत्वानवगमेनाऽऽकाशवाक्यस्य मानांतरानुगृहीतत्वासंभवादिति यत्परेणोक्तं,

(खं.) तत्तुच्छं, च्छान्दोग्ये "तत्तेज ऐक्षत बहुस्यां प्रजायेयेति, तदपोऽसृजत तस्माद्यत्र क्व च शोचिति स्वेदते वा पुरुषः तेजस एव तद्ध्यापो जायन्ते" इति "अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति अद्भ्य एव तद्ध्यन्नाद्यं जायते" इति च अन्नादीनां तेज आदिकार्यत्वे लोकानुभवस्य दर्शितत्वेन अवकाशाभावे पवनोत्पत्तेरननुभवेन आकाशस्य पवनं प्रति आधारत्वमात्रकल्पने नियामकाभावान्मानांतरानुगृहीतत्वासंभवात् ॥

(चं.) "कतमा देवतोद्गीथमन्वायत्ता आदित्य इति होवाच" इत्यादिना उद्गीथादावादित्यादेरब्रह्मण एव देवतात्वेनोक्तत्वात्तत्सन्निहिते प्रस्तावेऽब्रह्मण एव देवतात्वमित्यधिकाशङ्केत्यद्वैत्युक्तमयुक्तं, पूर्वाधिकरणेपि "अपां कागतिरिति असौ लोक इति होवाच" इत्यादिकेनाब्रह्मण एव गतित्वेनोक्ततया

तत्सन्निधानात् "अस्य लोकस्य का गतिः" इति वाक्येप्याकाश-स्याब्रह्मत्वं युक्तमिति साम्यादिति यदुक्तं,

(रा.) तन्न, "अन्तवद्वै किल ते दाल्भ्य साम" इत्यादिना अन्तवद्गतिरूपलोकानां निंदापूर्वकं "अस्य लोकस्य कागतिराकाश इति होवाच" इति प्रश्नप्रतिवचनयोः प्रवृत्तत्वेन निंदिताब्रह्मगतिसन्निधानस्या-काश वाक्यगताकाशाब्रह्मत्वाप्रयोजकत्वात्। प्रत्युतांतवत्त्वशून्यं ब्रह्मैवा-काश इत्यर्थं प्रत्येव प्रयोजकत्वाच्च आकाशप्राणवाक्ययोस्तौल्याभावा-दिति यत्,

(खं.) तत्तुच्छम्, अन्तरिक्षलोकस्य "अप्रतिष्ठितं वै किल" इति निन्दापूर्वकं उक्तस्यापि पृथिवीलोकस्य अब्रह्मत्वमिव तन्निन्दापूर्वकमुक्त-स्याप्याकाशस्याब्रह्मत्वसंभवात्। पूर्वनिन्दाया उत्तरस्य ब्रह्मत्वं प्रत्यप्र-योजकत्वात्। अन्यथा पृथिवीलोकस्य ब्रह्मत्वापत्तेः। पूर्वनिन्दापूर्वकमुक्त-स्यापि अन्तवत्त्वेन तादृशाकाशस्याप्यंतवत्त्वे भाधकाभावेनाकाशप्राण-वाक्ययोः साम्यानपायात् ॥

ॐ अत एव प्राणः ॐ अत्राध्यात्मिकप्राणादिशब्दसमन्वय उच्यते "तद्वै त्वं प्राणोऽभवः महान्भोगः प्रजापतेः भुजः करिष्यमाणः" इति विषयवाक्यम्। अत्रापि प्राणशब्दप्रवृत्तिनिमित्तं जीवनादिहेतुत्वमन्वयव्य-तिरेकाभ्यां प्राणशब्दार्थत्वेन प्रसिद्धस्य वायोरेवेति स एव प्राणशब्दवाच्यो न तु विष्णुरित्याद्यधिकाशङ्कानिरासेन पूर्वन्याय एवातिदिश्यत इत्याति-देशिकीसङ्गतिः। भूताकाशस्य त्ववकाशहेतुत्वेऽन्वयव्यतिरेकौ न स्तः, परिच्छिन्नस्य तस्याभावेऽपि क्वचिदवकाशदर्शनात्। अत्र प्राणः मुख्य-वायुरुत ब्रह्मेति चिंता। तदर्थं किं प्राणश्रुतिप्रसिद्ध्यनुसारेण श्रीपति-त्वादिलिंगं बाध्यं किं वा विपरीतमिति। तदर्थं प्रसिद्धिबाधे श्रुतेर्मुख्य-त्वहानिरुत नेति। तदर्थं प्राणशब्दप्रवृत्तिनिमित्तं जीवनहेतुत्वं किं ब्रह्मणि नास्ति उतास्तीति? तदर्थं किं जीवनं मुख्यप्राणान्वयव्यतिरेकानुविधायि उतेश्वरान्वयव्यतिरेकानुविधायीति। पूर्वपक्षस्तु— "तद्वैत्वं प्राणः" इत्य-

त्रोक्तः प्राणः मुख्यवायुरेव, न विष्णुः। प्राणशब्दप्रवृत्तिनिमित्तस्य जीवनहेतुत्वस्य वायावेवसम्भवात्। सर्वगते ब्रह्मणि जीवनान्वयतिरेकाभावेनासम्भवादिति।

सिद्धान्तस्तु— वायुवृत्तिर्यथा मुख्यप्राणदेहस्तथैव स विष्णोर्देहः। ततस्तस्यैवान्वयव्यतिरेकिता। "तद्वैत्वं प्राणः" इत्यत्रोक्तप्राणः विष्णुरेव। श्रीलक्ष्मीपतित्वादिलिङ्गात्। प्राणश्रुतेः "प्राणस्य प्राणः" इत्यादौ ब्रह्मणि प्रयोगेन प्राणशब्दप्रवृत्तिनिमित्तस्य जीवनहेतुत्वस्याधिकरणतया, स्वामितया वा विष्णोस्सम्भवेन च सावकाशत्वात्। श्रीलक्ष्मीपतित्वादिलिङ्गस्य निरवकाशत्वात्। निरवकाशलिङ्गेन सावकाशायाश्श्रुतेः बाधादिति, चन्द्रिकाभिप्रायोपरि,

(रा.) तन्न, "तद्वैत्वं प्राणोऽभवः" इत्यत्रास्मिन् वाक्ये भवदुक्तलक्ष्मीपतित्वरूपविष्णवसाधारणलिङ्गादर्शनात्। पूर्ववाक्ये लक्ष्मीपतित्वलिङ्गसद्भावेपि तादृशवाक्ये तु "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यस्ति। भवद्भिश्च "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति पूर्ववाक्यं पाठितम्, तच्चासङ्गतमेव। तैत्तिरीयशाखायां तया पाठाभावेऽपि वाजसनेयशाखायां "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति पाठो दृश्यत इति न शंक्यम्। तादृशवाजिसनेयशाखावाक्यस्य भवदुदाहृत "तद्वैत्वं प्राणोऽभवः" इति तैत्तिरीयवाक्यस्थप्राणशब्दार्थनिर्णायकत्वासम्भवादिति, यदुक्तम्,

(खं.) तत्तुच्छं, न हि विष्णुत्वसाधनस्यान्यथानुपपत्त्या श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति शाखान्तरस्थपाठो गृहीतः। लक्ष्मीपतित्वलिङ्गमात्रेण प्राणस्य विष्णुत्वसिद्धेः। किंतु शाखान्तरस्थवाक्यानामप्यत्रोदाहर्तव्यत्वसूचनार्थम्। तच्छाखासमाख्यया ह्रीशब्दस्य श्र्यर्थकत्वसूचनार्थं चेति॥

इत्यद्वैतखण्डनपूर्वकं चन्द्रिकामण्डने
प्राणाधिकरणम्

॥ श्रीः ॥

॥ अथ ज्योतिरधिकरणम् ॥

## ॐ ज्योतिश्चरणाभिधानात् ॐ

अद्वैतिनः "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु" इति वाक्ये ज्योतिःपदं भूतज्योतिःपरमेव। तत्र तस्य रूढत्वात् पूर्वाधिकरणवत् स्ववाक्ये ब्रह्मलिंगादर्शनाच्चेति पूर्वपक्षः॥

सिद्धान्तस्तु ज्योतिरिह ब्रह्म ग्राह्यं कुतः चरणाभिधानात् पादाभिधानादित्यर्थः। पूर्वस्मिन् हि वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टं। "तावानस्य महिमा ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" अनेन मन्त्रेण तत्र यच्चतुष्पदो ब्रह्मणस्त्रिपादमृतं द्युसंबन्धिरूपं निर्दिष्टं तदेवेह द्युसंबन्धान्निर्दिष्टमिति प्रत्यभिज्ञायते। तत्परित्यज्य प्राकृतं ज्योतिः कल्पयतः प्रकृतहानाप्रकृतप्रक्रिये प्रसज्येयातामिति यदाहुः॥

(चं.) तन्न, चरणाभिधानादित्यस्य पादाभिधानादित्यर्थकत्वे लाघवार्थं श्रुत्यनुगमार्थं च पादाभिधानादिति सूत्रं स्यात्। किंच,

पौनरुक्त्यं परमते ज्योतिर्भूतादिसूत्रयोः।
पादोपदेशादन्या हि नैवास्ति चरणाभिधा॥

'पादोस्य सर्वा भूतानि' इति पूर्ववाक्यस्थपादाभिधानादन्यस्य ज्योतिर्वाक्ये पादाभिधानस्याभावात्तस्य च भूतादिसूत्रेणैवोक्तत्वाच्चरणाभिधानादित्यस्य पौनरुक्त्यम्। अथ चरणाभिधानादित्यनेन 'पादोस्य सर्वा भूतानि' इति मन्त्रवाक्यस्थं सर्वभूतानामेकपादत्वं अमृतस्य त्रिपात्त्वं चोच्यते। भूतादिपादेत्यनेन

तु सैषा चतुष्पदेतिब्राह्मणवाक्यस्थं भूतपृथिवीशरीरहृदयानां पादत्वमुच्यते। ब्राह्मणवाक्ये हि इदं सर्वं भूतमिति भूतं, येयं पृथिवीति पृथिवीं, यदिदमस्मिन्पुरुषे शरीरमिति शरीरं, यदिदमस्मिन्नन्तःपुरुषे हृदयमिति हृदयं चोक्त्वा, सैषा चतुष्पदा षड्विधा गायत्रीति भूतादीनां चतुर्णां पादत्वं व्यपदिश्यते। ततो न पौनरुक्त्यमिति चेन्न। चरणाभिधानादित्यनेन पादोऽस्य सर्वा भूतानि त्रिपादस्येति मन्त्रस्थपादाभिधानद्वयस्येव ततोऽधिकार्यस्य ब्राह्मणस्थपादाभिधानस्यापि वक्तुं शक्यत्वेन भूतादिसूत्रवैय्यर्थ्यादिति यदुतं,

(रा.) तन्न, ब्रह्मपरज्योतिःशब्दसमानाधिकरणयदितिसर्वनामपदपरामर्शयोग्यस्यैव त्रिपाद्ब्रह्मणश्चरणशब्देन ग्रहीतव्यतया भूतपृथिव्यादीनां बहूनामुक्तैकवचनांतयदितिसर्वनामशब्दग्रहणायोग्यतया च चरणशब्देन सौत्रेण तद्ग्रहणायोगात् तद्ग्रहणार्थं 'भूतादिपाद' इति पृथक् सूत्रस्यावश्यकत्वादिति यदुक्तं,

(खं.) तत्तुच्छं, 'त्रिपादस्यामृतं दिवि' इति उक्तत्रिपाद्ब्रह्मणब्रह्मपरज्योतिः शब्दसमानाधिकरणयदितिसर्वनामपदपरामर्शयोग्यत्वमिव 'सैषा चतुष्पदा षड्विधा गायत्री' इति उक्तभूतादिचतुष्पद्ब्रह्मणोऽपि तादृशयदितिसर्वनामपदपरामर्शयोग्यत्वेन सौत्रेण चरणशब्देन तस्यापि गृहीतुं शक्यत्वेन भूतादिपादेति सूत्रस्यावश्यकत्वाप्राप्तेः। अङ्गीकृत्येदमुदितं। चरणाभिधानादित्यनेन यत्पदेन परामर्शयोग्यस्यैव ग्रहणमित्यत्र नियामकाभावात्। चरणपदेन भूतादिपदानां त्वदीयभाष्यरीत्या ब्रह्मत्वेन त्रिपाद्ब्रह्मणः चरणशब्देन ग्रहीतव्यतयोक्तेर्भाष्योक्तपदार्थज्ञानमूलकत्वात्। तथार्थग्रहणे तस्य हेतुत्वायोगाच्च ॥

ॐ ज्योतिश्चरणाभिधानात् ॐ। सिद्धान्ते सूत्रार्थस्तु ज्योतिश्चरणाभिधानादित्यादिचतु सूत्र्या ऐकाधिकरण्यमङ्गीकृत्य,

'विमेकर्णा पतयतो विचक्षुर्वीदं ज्योतिर्हृदय आहितं यत्' इति।

'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति।

अग्निसूक्तच्छान्दोग्यवाक्यद्वयं विषयंकृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्याविति।

ज्योतिः सूत्रस्याग्निसूक्तस्थं वाक्यं विषयं कृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्यौ। त्रिसूत्र्याः छान्दोग्यवाक्यं विषयं कृत्वा पूर्वपक्षसिद्धान्तौ वक्तव्याविति पक्षद्वयं॥ अत्र ज्योतिरादिशब्दाः उदाहरणम्॥ प्राणाधिकरणन्यायागोचरत्वप्रदर्शनेन पूर्वपक्षोत्थानात्प्रत्युदाहरणरूपाऽनन्तरसङ्गतिः। अत्र ज्योतिः किमग्निः किं वा विष्णुरिति चिन्ता। तदर्थं किं ज्योतिः श्रुतिप्रसिद्ध्यनुसारेण कर्णादिविदूरत्वलिङ्गं बाध्यं उत विपरीतमिति तदर्थं श्रुत्यनुग्राहकं सूक्तं निरवकाशमुत सावकाशमिति। पूर्वपक्षस्तु–इदं ज्योतिरग्निरेव ज्योतिश्श्रुतेः अग्निसूक्तस्थत्वाच्च, इति।

सिद्धान्तस्तु––कर्णादीनां विदूरत्वं विष्णोरन्यत्र नैव हि।
अग्नेस्तु श्रुतिसूक्तादिसावकाशं परात्मनि॥ १॥

अग्निसूक्तस्थं ज्योतिर्विष्णुरेव कर्णादिविचारणाभिधानात्। इयदिति परिच्छेदानर्हवैभववत्स्वरूपकर्णादिविदूरत्वस्य विष्णोरन्यत्र क्वाप्यसम्भवादिति चन्द्रिकोक्तमनूद्य,

(रा.) तन्न, सङ्गतिस्तावदयुक्ता। अत्राग्निसूक्ते ज्योतिषो हृदयाहितत्वमुक्तं, आनन्दमयस्य च गुहाऽऽहितत्वमुक्तम्। तयोश्च भेदात्। हृदयाहितत्वेन गुहाऽऽहितत्वस्याप्रत्यभिज्ञानात्। छान्दोग्यवाक्ये सुतरां तदभावाच्च। "यदिदमन्तःपुरुषे ज्योतिः" इति जाठरज्योतिरैक्योपदेशेन तदभावस्यैव ज्ञापनाच्च। योयमन्तर्हृदय' इति गायत्र्यां श्रवणेऽपि पूर्वपक्षे गायत्रीज्योतिषोर्भिन्नत्वेन ज्योतिर्द्वारा तदाक्षेपायोगाच्च। आनन्दमयाधिकरणस्यात्यन्तव्यवहितत्वेन तेनास्य सङ्गतिकथनस्यानुपयुक्तत्वाच्च इति यदभिहितं,

(खं.) तत्तुच्छम्, त्वदीयतैत्तिरीयशाङ्करभाष्ये हार्दमेव तु परमं व्योमेति न्याय्यं विज्ञानांगत्वेनोपासनांगत्वेन व्योम्नो विवक्षितत्वात्... "योयमन्तर्हृदय" इति श्रुत्यन्तरात्प्रसिद्धं हार्दस्य व्योम्नः परमत्वं तस्मिन् हार्दे व्योम्नि या बुद्धिर्गुहा तस्यां निहितं ब्रह्म इति गुहानिहितत्वं हृदयगुहानिहितत्वरूपमिति स्पष्टोक्तेः। आनन्दमयस्योक्तं गुहानिहितत्वं अग्निसूक्ते ज्योतिष उक्तम्। हृदयाहितत्वं चैकरूपमिति हृदयाहितत्वेन गुहानिहितत्वस्य प्रत्यभिज्ञानात्। "यं यमन्तहृदय" इति छान्दोग्यवाक्येऽपि ज्योतिःप्रकरणे हृदयाहितत्वश्रवणात् छान्दोग्यवाक्ये सुतरां तदभावाच्चेत्यस्य छान्दोग्यग्रन्थानवलोकननिमित्तत्व त्। "यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति वाक्ये जाठरज्यो तिरैक्योपदेशकपदाभावेन जाठरज्योतिरैक्योपदेशेन तदभावस्यैव ज्ञापनादित्युक्तेरयुक्तत्वाच्च। गायत्रीज्योतिषोः पूर्वपक्षे भिन्नत्वानाशङ्कनाच्च। चन्द्रिकायां प्राणाधिकरणेन प्रत्युदाहरणरूपसङ्गतिकथनेनानन्दमयाधिकरणेन सङ्गतेरकथनात् अत्यन्तव्यवहितानन्दमयाधिकरणसंगत्युक्तेरयुक्तत्वं तेः चन्द्रिकाऽदर्शनमूलत्वात्। शाङ्करभाष्यरीत्या कम्पनाधिकरणं पूर्वाधिकरणेन संगत्यभावस्य कल्पतरावुक्तत्वेन अद्वैतिभिरप्यव्यवहितपूर्वाधिकरणेन संगतिर्वक्तव्येति नियमस्यांगीकरणासम्भवाच्च ॥

(रा.) यत्तु, ऐकाधिकरण्येनाग्निसूक्तस्थवाक्योदाहरणमप्ययुक्तं। तत्र छन्दोभिधानभूतादिपादव्यपदेशोपदेशभेदानामसत्त्वेन "छन्दोभिधानात्" इत्यादिसूत्राणामप्रवृत्तेरिति यदुदितं,

(खं.) तत्तुच्छम्, "ज्योतिहृदय आहितं यत्" इति अग्निसूक्तस्थस्यैव ज्योतिषः छान्दोग्येऽपि ज्योतिःश्रुत्या "योयमन्तहृदय" इति हृदयनिहितत्वधर्मेण च शाखान्तराधिकरणन्यायेन प्रत्यभिज्ञायमानत्वेनैकत्वात्। तथाच "छन्दोऽभिधानात्" इत्यस्यायमर्थः। अग्निसूक्तस्थ ज्योतिर्न विष्णुः, अस्यैव ज्योतिषः छान्दोग्ये गायत्रीत्वाभिधानादिति चन्द्रिकायामेव त्वदीयशङ्काया निराकृतत्वात् ॥

(रा.) न च दिवःपविश्वोत्तीर्णप्रदेशवृत्तित्वेन श्रुतस्य छान्दोग्योक्तज्योतिषः हृदयाहितत्वेन श्रुताग्निसूक्तस्थज्योतिषः ऐक्यासम्भवात्। अग्निसूक्ते कर्णादिविदूरत्वश्रवणेन छान्दोग्ये तद्विरुद्धस्य "तदेतद्दृष्टं च श्रुतं च" इति कर्णादिगोचरत्वेन श्रुतस्य भेदावश्यंभावेन मासाग्निहोत्रनैत्यमिकाग्निहोत्रयोरिव ज्योतिषोर्नामैक्यस्य वस्त्वैक्याप्रयोजकत्वाच्च। अग्निसूक्तस्थज्योतिषः छान्दोग्यज्योतिषा ऐक्यं च न सम्भवातिती वाच्यं,

(खं.) "तद्दूरे तद्वंतिके" इत्युक्तदूरस्थसमीपस्थत्वयोरिव सर्वव्यापिवस्तुनः दिवःपरविश्वोत्तीर्णप्रदेशवृत्तित्वस्य हृदयाहितत्वस्य च संभवाभिप्रायेण वा तदाच्छादनेन वा तयोरैक्यमिति पूर्वपक्षकरणसम्भवात्। नहि पूर्वपक्षिणा उक्तं सर्वं युक्तियुक्तमित्यावयोर्मतम्। तथात्वे सिद्धान्तस्यैवानुत्थानप्रसंगात्। अद्वैतिना सिद्धान्तेऽपि दिवःपरत्वद्युस्थत्वयोः "उपदेशभेदात्" इति सूत्र अविरुद्धतया नीतत्वेन तद्वदेव कर्णादिविदूरत्वदृष्टतयोः आकारभेदेन अविरुद्धतया पूर्वपक्षिणा वक्तुं शक्यत्वेन त्वदुक्तशङ्कायाः एव निर्दलत्वात्॥

(रा.) यत्तु, निश्चिते ज्योतिषोरैक्ये आकारभेदनिश्चयः, आकारभेदे च तदैक्यनिश्चय इत्यन्योन्याश्रय इति यदुक्तं,

(खं.) तत्तुच्छं, इतरलिंगेन उभयोः विष्णुपरत्वे निश्चिते विरुद्धत्वेन भासमानयोर्धर्मयोः आकारभेदेनाविरुद्धतायाः नीतत्वेन परस्परज्ञप्त्यधीनज्ञप्तिकत्वरूपान्योन्याश्रयानवकाशात्॥

(रा.) यत्तु, न च "तेजो वै ब्रह्मवर्चसं" इति गायत्र्यां तेजोरूपताश्रवणात् तेजःशब्दाग्निशब्दयोरनतिभिन्नार्थतया अग्नौ गायत्रीपदस्य प्रयोगो न विरुद्ध इति द्वयोरेकार्थतेति शंक्यं, ब्रह्मवर्चसलक्षणतेजोहेतौ गायत्र्यां तेजःशब्दस्य 'आयुर्घृतं' इतिवद्गौणव्यपदेशेपि तस्य तेजसोग्निरूपत्वाभावात्। अन्यथा 'यजमानः प्रस्तरः' इति निर्देशात् 'सूक्तवाक्येन प्रस्तरं प्रहरति' इत्युक्तप्रहरणं यजमानस्य स्यादिति यदुक्तं,

(खं.) तत्तुच्छं, अग्नौ गायत्रीपदस्य गायत्र्यां अग्निपदस्य प्रयोगो न विरुद्ध इति पूर्वपक्षिणा उक्तत्वमात्रेण तस्य गौणव्यपदेशत्वकथनम्। अन्यथा "यजमानः प्रस्तरः इति निर्देशेन यजमानस्य प्रहरणापादनमित्यादीनां अत्यन्तासंबद्धत्वात् ॥

(रा.) यत्तु, ऐकाधिकरण्ये छान्दोग्यवाक्योदाहरणमप्ययुक्तम्। तत्र विचरणाभिधानरूपहेत्वभावात्। छान्दोग्योक्तज्योतिषः अग्निसूक्तस्थज्योतिषश्चानुपदमैक्यस्य निराकृतत्वादिति यदभिहितं,

(खं.) तत्तुच्छम्, पूर्वन्यायेनैव परिहृतत्वात् ॥

(रा.) किंच सूत्रे चरणशब्दस्य विचारणार्थत्ववत् ब्राह्मणार्थवत्वत् क्लिष्टमिति,

(खं.) इदं वाक्यं अन्वयायोग्यार्थप्रतिपादकत्वादुपेक्ष्यमेवेति ॥

इति अद्वैतखण्डनपूर्वकचन्द्रिकामण्डने ज्योतिरधिकरणं

— सम्पूर्णम् —

॥ श्रीः ॥

॥ अथ अन्तिमप्राणाधिकरणम् ॥

## ओं प्राणस्तथानुगमात् ओं

(चं.) प्रतर्दनं प्रति इन्द्रेण प्रयुक्तं "प्राणोस्मि प्रज्ञात्मा" इति वाक्यमुदाहृत्य "मामेव विजानीहि" इति इन्द्रलिङ्गात्, "इदं शरीरं परिगृह्योत्थापयति" इति वायुलिङ्गात्, "अक्तारं विद्यात्" इति जीवलिङ्गाच्चेन्द्रादिरेव प्राण इति प्राप्ते "यं त्वं मनुष्याय हिततमं" इति हिततमत्वादिब्रह्मलिङ्गात् ब्रह्मैव प्राण इति सिद्धान्तः इत्याहुः। तन्न, न तावत्परमपुरुषार्थसाधनत्वं हिततमत्वं त्वन्मते ज्ञानादेवाज्ञाननिवृत्या ब्रह्मणि तस्याभावात्। परमपुरुषार्थत्वं हिततमत्वं चेत् सर्वोपप्लवरहितं मोक्षदशानुगतं शुद्धचैतन्यं हिततमं वाच्यम्। तस्य हिततमत्वं च न विशिष्टं प्रति तस्य मोक्षदशायामभावात्। नापि शुद्धं प्रति तस्याखण्डत्वेनास्येदं हितमिति विभामायोगात्॥

किंच हितत्वं विना न हिततमत्वं। न चाखण्डे हितत्वसामान्यं हिततमत्वविशेषश्च युक्तं। तस्मान्न हिततमत्वं ब्रह्मलिङ्गं, नापि "तं मामायुरमृतमित्युपास्व" इत्युक्तममृतत्वोपासनकर्मत्वं च ब्रह्मलिङ्गं अविद्यमानतदुपासनकर्मत्वस्य इन्द्रादावपि सम्भवात्। नापि "स यो मां वेद न स्तेयेन न भ्रूणहत्यया" इत्युक्तः स्वज्ञानेन सर्वकर्मालेपो ब्रह्मलिङ्गं। शुद्धे "एष ह्येव साधु कर्म कारयति एष लोकाधिपतिः" इत्यादेरयोगात्। विशिष्टज्ञानेन च त्वन्मते सर्वकर्मालेपाभावात्। एवं लिङ्गान्तरं दूष्यम्।

इदं चाधिकरणं जीवत्वनिषेधेन ब्रह्मत्वविधानात् तदभेदप्रतिकूलमिति यदभिहितं,

(रा.) तन्न, त्रैवर्णिकं प्रति सोमयागसाध्यस्वर्गस्य भोग्यत्वेपि स्वर्गभोगदशायां त्रैवर्णिकत्वाभावेपि विशेषांशमादाय स्वर्गस्य त्रैवर्णिकनिरूपितभोग्यत्ववदन्तःकरणविशिष्टचैतन्यस्य मोक्षदशायां विशेषणाभावेपि चैतन्यरूपविशेषांशसत्वेन तमादाय विशिष्टचैतन्यनिरूपितहिततमत्वस्य शुद्धे सम्भवाविरोधात्, यज्ज्ञानान्मोक्षस्तत्वं हिततमपुरुषार्थत्वमित्युक्तौ भवत्कल्पितविकल्पदोषस्यानवकाशाच्चेति, यदुक्तं,

(खं.) तत्तुच्छम्, 'सोमेन यजेत' इति वेदेन सोमयागस्य स्वर्गसाधनत्वे बोधितेपि त्रिवर्णात्मकैतद्देहावच्छेदेन न भोगभोक्तृत्वमुच्यते। किं तु देहान्तरावच्छेदेनेति। स्वर्गभोगदशायां त्रैवर्णिकत्वाभावेपि बाधकाभावेन विशेषांशमादाय स्वर्गस्य त्रैवर्णिकनिरूपितभोग्यत्वकथनस्यानावश्यकत्वात्। अत्र तु "यं त्वं मनुष्याय हिततमं मन्यसे" इति मनुष्यरूपविशिष्टचैतन्यनिरूपितहिततमत्वस्य ब्रह्मणि कथनात्, विशिष्टचैतन्यस्य मोक्षदशायामभावेन निर्विशेषे शुद्धे विशिष्टचैतन्यरूपमनुष्यनिरूपितहिततमत्वस्यायोगात्, यज्ज्ञानान्मोक्षः तत्त्वं हिततमपुरुषार्थत्वमित्युक्त्या मोक्षजनकज्ञानविषयत्वं हिततमत्वमित्युक्तं स्यात्। तस्य च हिततमशब्दार्थत्वाभावात्, अज्ञेयस्य ब्रह्मणः ज्ञानविषयत्वासंभवाच्च ॥

(चं.) "जीवमुख्यप्राणलिङ्गादिति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इति सूत्रस्य जीवमुख्यप्राणलिङ्गानुग्रहार्थम्। किंचिज्जीववाक्यं किंचिद्ब्रह्मवाक्यं किंचित्प्राणवाक्यमित्यङ्गीकर्तव्यतया न सर्वं ब्रह्मवाक्यमिति चेन्न, उपासात्रैविध्यप्रसङ्गादन्यत्र 'प्राणस्य प्राणं' इत्यत्र ब्रह्मलिङ्गैः प्राणशब्दस्य ब्रह्मपरताया आश्रितत्वात्। इहापि हिततमत्वादिब्रह्मलिङ्गयोगादिति तद्व्या-

ख्यानमयुक्तं। "अपीतौ तद्वत्प्रसङ्गात्"[1] इत्यादिवत्प्रसङ्गपदाभावात्, 'मामेव विजानीहि' इति इन्द्रलिङ्गस्यापि सत्त्वेन चातुर्विध्या-दिति वक्तव्यत्वाच्च । पूर्ववादिनं प्रतीष्टापत्तेश्च । ननूपक्रमोप-संहारैकरूप्यादेकवाक्यतावगता । अत एव भामत्यां भाष्यमुल्ल-ङ्घ्य त्रिविधोपासनापरत्वेन वाक्यभेदेन पूर्वपक्षं प्रापय्य तदेक-वाक्यताप्रतीतेर्ब्रह्ममात्रपरत्वमिति सिद्धान्तितमिति चेदुच्यते,

'बुद्ध्यादिपरमत्रैव सा प्रज्ञेत्यादिकं यथा ।
मामुपास्वेत्यादिवाक्यं तथास्त्विन्द्रादिगोचरम् ॥'

अत्रैव ब्रह्मपरवाक्यसमुदाये "यथा यो वै प्राणः सा प्रज्ञा या प्रज्ञा सप्राण; स ह ह्येतावस्मिन्शरीरे वसतः सहोत्क्रामतः" इत्येकदेशो ज्ञानक्रियाशक्त्याश्रयबुद्धिप्राणपरः। सिद्धान्तेऽपि प्रज्ञाप्राणशब्द-योरुत्क्रमणादिलिङ्गैर्बुद्धिवायुपरत्वात्, तथा पूर्वपक्षेऽपि इन्द्रादि-लिङ्गस्वारस्यार्थं तत्तद्वाक्यमिंद्रादिपरमस्तु । आश्रितत्वादित्यत्र च प्रकृतत्रैविध्यस्यैवान्वयसम्भवे ब्रह्मपरताया इत्यध्याहारो न युक्तः । तद्योगादिति च सर्वनाम्नः सन्निकृष्टत्रैविध्यपरत्वसम्भ-वेऽपि विप्रकृष्टब्रह्मलिङ्गपरत्वमयुक्तम् । तद्योगादित्यस्यानुगमा-त्यनेन पुनरुक्तिश्चेति यदुक्तं,

(रा.) तन्न, उपासात्रैविध्यादित्यस्य 'प्राणोऽस्मि प्रज्ञात्मा' इत्या-दिविषयवाक्यस्थोपासनस्य त्रित्वादित्यर्थपरत्वं, 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व' इत्युपक्रमस्थप्राण एव प्रज्ञात्मेत्युपसंहारैकरूप्यावग-तैकार्थविषयत्वावगमितैकवाक्यापन्नानां तन्मध्यगतजीवप्राणलिङ्गवाक्या-नां प्रत्येकं प्रत्येकं, तत्तदुपासनाविधानेन उपासनात्रयपरत्वे वाक्यभेदाप-

[1]. ब्रह्मसूत्रम्—२–१.

त्तैरेकवाक्यत्वयनिर्वाहार्थं त्रैविध्यादित्यस्य त्रैविध्यप्रसङ्गादित्यर्थकत्वस्याकामेनापि स्वीकर्तव्यत्वात्। अन्यथा उपक्रमोपसंहारावगमितैकवाक्यस्थतेऽपि मध्ये विधानभेदाङ्गीकारे उपांशुयाजाधिकरणविरोधापत्तेः। आश्रितत्वादित्यत्र प्रकृतत्रैविध्यस्यैवान्वयसम्भव इत्यसत्, त्रैविध्यप्रसङ्गादित्यर्थतायाः प्रसाधितत्वेत त्रैविध्यस्यैवाप्रकृतत्वात्। अत एव तद्योगादिति सर्वनाम्नः सन्निकृष्टत्रैविध्यपरत्वसम्भव इत्यप्यसदेव, पर्वतो वह्निमान् धूमादिति प्रतिज्ञादिसिद्धस्य तस्माद्वह्निमानिति निगमनेप्यपौनरुक्त्यवदनुगमादित्युक्तस्य तद्योगादिति निगमनेप्यपौनरुक्त्यादिति, यदभिहितं,

(खं.) तत्तुच्छम्, चन्द्रिकायां त्वदुक्तमाशङ्क्य निराकृतमपि स्वयं यत्त्वित्यादिना चन्द्रिकानुवादावसरेऽननूद्य तदुपरि दूषणपरतया चन्द्रिकाकारैराशङ्कितस्यैव तन्नेत्यादिना कथितस्य चन्द्रिकाकारैरेव दूषितत्वात्। परव्यामोहनाय रामसुब्बगूहिते चन्द्रिकाप्रदर्शिते शङ्कासमाधाने मया प्रदृश्येते। तथाहि– "ननूपक्रमोपसंहारैकरूप्यादेकवाक्यतावगता। अत एव भामत्यां भाष्यमुल्लङ्घ्य त्रिविधोपासनापरत्वेन वाक्यभेदेन पूर्वपक्षं प्रापय्य तदेकवाक्यताप्रतीतेर्ब्रह्ममात्रपरत्वमिति सिद्धान्तितमिति चेत्" इति वाक्येन चन्द्रिकाकारैः प्रदर्शितायाः रामसुब्बेनानुदितायाः शङ्कायाः,

बुध्यादिपरमत्रैव सा प्रज्ञेत्यादिकं यथा।<br>
मामुपास्वेत्यादिवाक्यं तथास्त्विन्द्रादिगोचरम्॥

इत्यादिवाक्येन ब्रह्मपरवाक्यसमुदाये "यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः स ह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इत्येकदेशः। यथा सिद्धान्तेपि ज्ञानक्रियाशक्त्याश्रयबुद्धिप्राणपरः तथा पूर्वपक्षेपि इन्द्रादिलिङ्गस्वारस्यार्थं तत्तद्वाक्यमिन्द्रादिपरमस्त्विति रामसुब्बोक्तदोषाभासस्य परिहृतत्वात्। तथाच तत्तलिङ्गयुक्तानां वाक्यानां इन्द्रादिपरत्वे बाधकाभावात्, त्रैविध्यप्रसङ्गस्य पूर्ववादिनं प्रतीष्टत्वाच्चेत्युक्तचन्द्रिकोक्तदोषस्यापरिहाराच्च। त्रैविध्यप्रसङ्गादित्यर्थबोधकपदाभावात्। उपासायाः

त्रैविध्याङ्गीकारेण अवान्तरवाक्यभेदेपि महावाक्यभेदाभावेन उपांशुयाजाधिकरणविरोधाभावाच्च । बुद्धिप्राणपरत्वं वदतः तव मतेपि वाक्यभेदापत्या प्राप्तोपांशुयाजाधिकरणविरोधस्यापरिहारत्वाच्च । एकवाक्यत्वमङ्गीकृत्यापि वृत्तिकाररीत्या शङ्करादिभिः त्रैविध्यादित्यस्य यथा श्रुतत्रैविध्यपरतया एतेन व्याख्याततत्वाच्च ॥

(रा.) आश्रितत्वादित्यत्र प्रकृतत्रैविध्यस्यैवाप्रकृतत्वादिति निरस्तं,

(खं.) त्रैविध्यादित्यस्य त्रैविध्यप्रसङ्गादित्यर्थकरणे साधकाभावात् । अत एव तद्योगादिति सर्वनाम्नः सन्निकृष्टत्रैविध्यपरत्वमिति चन्द्रिकोक्तं साधु ॥

(रा.) यत्तु, पर्वतो वह्निमान् धूमादिति प्रतिज्ञादिसिद्धस्य तस्माद्वह्निमानिति निगमनेप्यपौनरुक्त्यवदनुगमादित्युक्तस्य तद्योगादिति निगमनेप्यपौनरुक्त्यादिति यदुक्तं,

(खं.) तत्तुच्छम्, अस्य सूत्रस्य निगमनरूपत्वाभावात् 'व्यवहारे भट्टनयः' इति स्वीकर्त्रद्वैतिभिः प्रतिज्ञाहेतूदाहरणरूपाणां उदाहरणोपनयनिगमनरूपाणां वा त्रयाणामेवावयवानामङ्गीकारेण प्रतिज्ञाहेतुनिगमनरूपावयवत्रयानंगीकारेण त्वदुक्तसमाधानस्यापसिद्धान्तसम्पादकत्वाच्च ॥

ॐ प्राणस्तथानुगमात् ॐ॥ सिद्धान्ते सूत्रार्थस्तु--अत्र श्रुतिलिङ्गबाहुल्येन गायत्र्यधिकरणसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरसंगतिः। ऐतरेयके "ता वा एताः शीर्षं च्छ्रियःश्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः" इत्यारभ्य बहुस्थलेषु श्रुतः प्राणो विषयः । अत्र प्राणः किं मुख्यवाय्वादिः किं वा विष्णुरिति चिन्ता। तदर्थं किं वाय्वादिश्रुत्याद्यनुसारेण विष्णुश्रुत्यादि नेयं उत विपरीतमिति। तदर्थं वाय्वादिश्रुत्यादिकं निरवकाशम् । विष्णुश्रुत्यादिकं तु सावकाशमुत विपरीतमिति ।

पूर्वपक्षस्तु- अयं प्राणः विष्णोरन्यः इन्द्रादिरेव, इन्द्रियैः सहाभिधानादिति ।

सिद्धान्तस्तु– 'ते देवाः प्राणयन्त' इति देवोपदेश्यत्वं 'तंभूतिरिति देवा उपासां चक्रिरे' इति भूतित्वेन देवोपास्यत्वं 'सर्वे वेदा' इति सर्ववेदप्रतिपाद्यत्वं 'प्राणो ह्येष तपति' इति सूर्यमण्डलस्थत्वं 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इति सर्वान्तर्यामित्वं 'अथ देहरथ' इति देहरथत्वमित्यादिविष्णुलिङ्गानां प्राणे अभ्यासात् अयमपि प्राणो विष्णुरेव नेन्द्रादिः

विष्णुमेवानयन् देवा विष्णुं भूतिमुपासते ।
स एव सर्वदेवोक्तस्तद्रथो देह उच्यते ।।

इति स्मृत्या "सर्वे वेदा यत्पदमामनन्ति, य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादिश्रुतिभिः, "वेदैश्च सर्वैरहमेव वेद्यः, ध्येयः सदा सवितृमण्डलमध्यवर्ती" इत्यादिस्मृतिभिश्च तेषां विष्णुनिष्ठत्वावगमात् ब्रह्मशब्दानुगमाच्च ।।

बहुत्वाच्छ्रुतिसाहित्यादवकाशोज्झितत्वतः ।
बलवाद्भिर्विष्णुलिङ्गैः प्राणलिङ्गादि नीयते ।। इति ।

(रा.) तन्न, अनुगमादिति सौत्रहेतोः बाहुल्यनिरवकाशत्वरूपार्थे स्वरसतो वृत्यभावादावृत्तेरभ्यासादिति वा वक्तव्येऽनुगमादित्युक्तेरसाङ्गत्यापाताच्च । न च 'तद्वैत्वं प्राणः' इत्यत्र श्रुतानामत्राप्यनुगमादिति हेत्वर्थ इति वाच्यम्। तदधिकरणे प्रधानहेतुत्वेनोक्तस्य लक्ष्मीपतित्वस्यात्राश्रवणेन तदनुगमासम्भवात् । अनुगमादित्यस्यैव तत्रत्यहेत्वनुगमार्थत्वे तथाशब्दवैयर्थ्यापाताच्च । 'विष्णुमेवानयन् देवाः इत्युदाहरणमयुक्तम्। तद्वाक्यस्येदानीमुपलभ्यमानकोशेषु काप्यनुलम्भात् इति यदुदितम्,

(खं.) तत्तुच्छम्, अनुगमादित्यस्य श्रीमद्भाष्ये टीकायां वा बाहुल्यादिति वा निरवकाशत्वादिति वा अर्थस्यानुक्तत्वात्। 'अनुगमादित्यस्य अनुवृत्तेरभ्यासादित्यर्थ.' इति टीकायामुक्तेः । नच 'तद्वैत्वं प्राणः' इत्यादि तु अनुक्तोपालम्भनरूपत्वादुपेक्ष्यमेव। 'विष्णुमेवानयन् देवाः' इति

वाक्यानुपलम्भवक्तुः तद्वाक्योक्तधर्माणां असत्वमभिप्रेतम् । विष्णुनिष्ठत्वाभावो वा एतादृशानुपूर्वीकवाक्यस्य तत्पुराणाघटकत्वमात्रं वा। नाद्यः, तादृशधर्माणां "तं देवाः प्राणयन्त, तं भूतिरिति देवा उपासांचक्रिरे" इत्याद्युदाहृतवाक्यैः सिद्धत्वात् । न द्वितीयः, "सर्वे वेदा यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्यः, आत्मेत्येवोपासीत" इत्यादिश्रुतिस्मृतिभिः, विष्णुनिष्ठत्वावगमात् । अद्वैतिभिरपि सर्ववेदप्रतिपाद्यत्वादीनां विष्णुनिष्ठतयाङ्गीकाराच्च । न तृतीयः, सर्ववेदप्रतिपाद्यत्वादिधर्मान् तेषां विष्णुनिष्ठतां चाङ्गीकृत्य तत्प्रतिपादकवाक्यासत्वकथनस्य नियोजकत्वात्, भागवतादिवत् समग्रस्कान्दपुराणस्यामुद्रितत्वेन लिखितस्य तु क्वचित् स्थले, क्वचित् स्थले कस्य चिद्भागस्य उपलभ्यमानत्वेन "कूपकूर्मः सधर्मा किं जानीते" इति उक्तदिशा त्वदनुपलम्भमात्रेण असत्वानिश्चयाच्च । उपलभ्यमानपुस्तकेषु अनुपलभ्यमानप्रमाणानां शङ्कररामानुजशाबरादिग्रंथेषु उपलभ्यमानत्वेन पुस्तकेषु अनुपलभ्यत्वमात्रस्यासत्वासम्पादकत्वस्योक्तत्वाच्च ॥

इति अद्वैतखण्डनपूर्वक चन्द्रिकामण्डने अन्तिमप्राणाधिकरणं

— सम्पूर्णम् —

॥ समाप्तश्चायं प्रथमः पादः ॥



# अद्वैतखंडनपूर्वकचंद्रिकामंडने परिशिष्ट प्रकरणम्



(रा.) यत्तु "इदं तु बोध्यं- माध्वमते ब्रह्मण इव ज्ञानानंदादि गुणैर्जीवस्यात्यंताभेदस्वीकारान्मुक्तिदशायां ज्ञानानंदादिगुणानां मुक्तस्य चाश्रयाश्रयिभावानुपपत्त्या ब्रह्मवन्मुक्तोपि निर्गुणः स्यात् इति ।

(खं.) तन्न गुणगुणिनोरभेदपक्षे घटोपलंभे शुक्लाद्यनुपलंभार्थ, भेदाभेदपक्षे तयोरविरोधार्थं, कालः, सदास्ति, देशः सर्वत्रास्ति, इत्यबाधितव्यहारार्थं त्वदंगीकृततत्तदसाधारणस्वरूपस्यैव स्वभावविशेषापरपर्यायविशेषतयास्मदंगीकृतत्वेन तेनैव ज्ञानादिगुणाभिन्नस्यापि मुक्तस्य ज्ञानाद्याश्रयत्वरूपसगुणत्वोपपत्तेः। अपरिच्छेद्यत्वस्य ब्रह्मानन्यत्वमेव बृहधातूत्तरप्रत्ययस्यापि आश्रय एवार्थः अत्यन्ताभेदे आश्रयाश्रयिभावः "स्वे महिम्नि प्रतिष्ठित" (छां. ७।२४।१) इत्यादाविव संभवतीति सिद्धांते दोषाभावादिति जिज्ञासाधिकरणे अभेदेऽप्याश्रयाश्रयिभावस्य त्वया खंडनाख्यग्रंथे ९५ तमे पत्रे स्वीकृतत्वाच्च । अनुभवरूपेपि मुक्ते अनुभवितृत्वरूपगुणाश्रयत्वस्य "एवं मुक्तस्य निरतिशयानंदाविद्यानिवृत्त्युपलक्षितशुद्धचिद्घनकैवल्यरूपात्मरूपत्ववत् उक्तकैवल्यरूपात्मानुभवितृत्वमपि भाष्यकृदभिमतं न तु मूककल्पं आनंदानुभवितृत्वशून्यं कैवल्यात्मकानंदत्वं यथासौ सविता सहस्रयुगपर्यंतं जगतोऽधिकारं चरित्वा तदवसाने उदयास्तमयवर्जितं कैवल्यमनुभवति यथा च वर्तमाना ब्रह्मविदः आरब्धभोगक्षये कैवल्यमनुभवंति इति यावदधिकाराधिकरणभाष्यप्रामाण्यात् ननु निर्दुःखनिरतिशयानंदात्मककैवल्यस्य तदनुभवस्य मुक्तस्यात्यंताभेदात् । स्वरूपातिरिक्तस्य कैवल्यानुभोगसाधनस्याभावाच्च तादृशकैवल्यानुभवितृत्वं मुक्तस्य न संभवतीति चेन्न "स्वयमेवात्मनात्मानं वेत्थ

त्वं पुरुषोत्तम" इति गीतातद्भाष्ययोरेकस्येव स्ववेतृत्व, स्ववेद्यत्व, स्ववेदनसाधनत्वनिर्देशदर्शनेन प्रकृतेपि तथा संभवात् कर्मकर्तृव्यपदेशाच्चेति सूत्रं तु ज्ञानाक्रियाव्यतिरिक्तक्रियानिरूपितकर्तृकर्मणोर्भेदपरं अन्यथोदाहृतगीतातद्भाष्यविरोधापत्तेरित्यलमिति, त्वत्कृतशांकरभाष्यगांभीर्यनिर्णयाख्यग्रंथे उपपादितत्वाच्च। नहि द्रष्टुर्दृष्टेर्विपरिलोपोविद्यते (बृ. ४-३-२३) इत्युपनिषद्व्याख्यानावसरे "तथायमप्यात्मा" विपरिलुप्तया स्वभावया दृष्ट्या नित्यदृष्टेत्युच्यत इति ज्ञानस्वभावस्यापि ज्ञानाश्रयत्वव्यवहारस्य शांकरभाष्ये स्वीकृतत्वाच्च। अद्वैतसिद्धावपि कालः सदाऽस्ति इत्यादिव्यवहारस्य स्वभावविशेषरूपास्मदंगीकृतविशेषेण निर्वाहस्योक्तत्वाच्च। यत्तु विशेषस्यांगीकारेणास्मन्मत (श्रीमन्मध्वमत) प्रवेशमाशंक्य तत्तदसाधारणस्वरूपस्यैव स्वभावविशेषशब्दार्थत्वेन त्वदुक्तविशेषानुक्तेरिति अस्मदंगीकृतविशेषास्वीकारकथनं तत् अस्मत्सिद्धांताज्ञानविजृंभितमेवेति उपेक्षणीयमेव। एतेन धर्मरूपस्य भवत्कल्पितविशेषस्य "एवं धर्मानि" ति श्रुत्या जीवात् पृथक्त्वासिध्या जीवाभिन्नतया जीवस्वरूपवदेवाश्रयाश्रयिभावव्यहाराप्रयोजकत्वादित्येतन्निरस्तं त्वन्मत इव तत्तदसाधारणस्वरूपापरपर्यायविशेषेणैव व्यवहारनिर्वाहोपपत्तेः। "एवं धर्मानिति" श्रुतेर्जीवविषयत्वाभावाच्च॥ न च "एवंधर्मानिति" श्रुतेर्जीवविषयत्वाभावे आनंदादिगुणानां जीवेनाभेदे प्रमाणाभाव इति वाच्यम्। "योविज्ञाने तिष्ठन् (बृ) बलमानंद ओजश्च सहोज्ञानमनाकुलं। स्वरूपाण्येव जीवस्य व्यज्यंते परमाद्विभोः प्रज्ञान घनः" (बृ) इत्यादि श्रुतिस्मृतिभिर्ज्ञानादीनां जीवस्वरूपत्वावगतेः।

एतेन "(रा) किंच तन्मते आनंदानुभवितृत्वानुपपत्तिः आनंदानुभवरूपधर्मं प्रति मुक्तस्याश्रयत्वाभावात् मध्वमते आनंदानुभवस्य मुक्तरूपत्वस्वीकारादित्युक्तं प्रत्युक्तम्।

(खं.) "स्वे महिम्नि प्रतिष्ठितः" ( ) इत्यादाविव विशेषबलादेव अभेदेपि आश्रयाश्रयिभावोपपत्तेरुक्तत्वात्। आनंदानुभवरूपेपि मुक्ते आनंदानुभवाश्रयत्वरूपानंदानुभवितृत्वस्य त्वयैव शांकरभाष्यगांभी-

र्थनिर्णयाख्यग्रंथे अंगीकृतत्वेन आनंदानुभवितृत्वानुपपत्त्युक्तेः स्वव्याघातकरत्वाच्च।"

(रा.) यदुक्तं, "न च वृत्तिज्ञानस्य जीवाद्भिन्नतया तस्य मोक्षदशायां आनंदानुभवरूपत्वं स्वीकृत्य तदाश्रयत्वरूपानंदानुभवितृत्वमुपपादनीयमिति वाच्यं। वृत्तिज्ञानस्य मनः परिणामत्वेन मुक्तौ मनोनाशेन वृत्तिज्ञानासंभवस्य भवद्भिरेवोक्तत्वात् प्रमातृस्वरूपज्ञानस्यैव भवद्भिस्तदंगीकारादिति।

(खं.) तन्न अनुक्तोपालंभनत्वेनोपेक्षणीयत्वात्

(रा.) यत्तु किंच माध्वमते मुक्तानां तारतम्योक्तिरप्ययुक्ता किं तत् तारतम्यं-प्रस्थमितव्रीह्याढकपरिमितव्रीह्योरिव संख्यातारतम्यकृतं? उत शौर्यपराक्रमगुणद्वययुक्तदेवदत्तशौर्यपराक्रमगांभीर्यादिगुणयुक्तविष्णुमित्रयोरिव गुणतारतम्यकृतं? आहोस्वित् कपालघटयोरिव परिमाणतारतम्यकृतं? अथवा घटपटयोरिव स्वरूपकृतं?। नाद्यः मुक्तानां प्रत्येकमेकत्वसंख्याश्रयत्वात्। न द्वितीयः मुक्तानां भवद्रीत्या आनंदादिगुणात्यंताभिन्नतया निर्गुणत्वात्। न तृतीयः मुक्तानां प्रत्येकमणुत्वेन परिमाणतारतम्याभावात्। न चतुर्थः तस्य परस्परभेदरूपत्वेन तस्मिन् तारतम्यव्यवहारासिद्धेः। सर्वैरपि मुक्तानां परस्परभेदस्य स्वीकृतत्वेन तत्साधनवैफल्याच्चेति।

(खं.) तन्न आनंदादिगुणाभिन्नस्यापि मुक्तस्यानंदाश्रयत्वरूपसगुणत्वस्योपपादित्वेन द्वितीयपक्षस्यादुष्टत्वात् इतरपक्षाणां चानंगीकारपराहतत्वात्। मुक्तानां परस्परभेदस्य त्वयैवानंगीकृतत्वेन 'सर्वैरपि मुक्तानां परस्परभेदस्य स्वीकृतत्वेन तत्साधनवैफल्याच्चेति' चतुर्थपक्षोक्तदोषस्यात्यंतासंगतेश्च।

(रा.) इक्षुक्षीरगुडादिरसानां मधुरमधुरतरमधुरतमानामिवमुक्तजीवस्वरूपाणां तारतम्यमाशंक्य उक्तरसानां मध्ये यस्य क्षीरप्रियस्य

क्षीररसे मधुरतमत्वबुद्धिः तत्र तु अन्यस्य मधुरत्वबुद्धिः इत्याद्यनुभव-सिद्धं तथाच तेषु मधुरत्वमधुरतरत्वमधुरतमत्वानां अनियततया स्वरू-पतारतम्यनियमाभावेन तद्दृष्टांतबलेन मुक्तानंदनियमस्य वक्तुमशक्य-त्वादिति यद्दूषणमुक्तं

(खं.) तन्न यथेक्षुरसेष्वेवैकोमधुरः एको मधुरतर एको मधुरतमः यथा वा समानपरिमाणेष्वपि दीपेषु एकः प्रकाशतरः एकः प्रकाशतमः यथा वा समपरिमाणेष्वेव रत्नेषु एकः प्रकाशतरः एकः प्रकाशतम यथा वा क्षीरेषु एकं क्षीरं मधुरं अपरं मधुरतरं अन्यच्च मधुरतम-मित्येकस्यैव पुरुषस्यानुभवसिद्धमित्येकजातीयेष्वेव मधुरमधुरतरमधुर-तमत्वादीनां नियततया तद्दृष्टांतबलेन मुक्तानामानंदादिनियमस्य वक्तुं शक्यत्वात्

(रा.) यत्तु किंच माध्वमते "तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनंदः । ते ये शतं मानुषा आनंदाः। स एको-मनुष्यगंधर्वाणामानंदः" इत्यादिश्रुतौ "श्रोत्रियस्य चाकामहतस्य" इति प्रतिपर्यायमकामहतशब्देन तत्तन्मुक्तं गृहीत्वा आनंदतारतम्यं बोध्यते इत्येतदनुपपन्नं एकमेवमुक्तं तत्तत्पर्यायवगताकामहतशब्देनानूद्य तस्य तत्तत्पर्यायोक्तानां मनुष्यादारभ्य हिरण्यगर्भपर्यंतं मुक्तानंदानां बोधनेन मुक्तभेदेनानंदभेदस्य तच्छ्रुत्या स्वरसतः प्रतीत्यभावात् इति ।

(खं.) तन्न श्रोत्रियस्य अकामहतस्येति विशेषणद्वयस्य वचन-व्यत्यासेन मनुष्यगंधर्वादिभिरन्वये ताभ्यां तेषां मुक्तत्वप्रतीत्या मुक्त-मनुष्यानंदापेक्षया मुक्तमनुष्यगंधर्वानंदस्य शतगुणितत्वं एवं मुक्तमनुष्य-गंधर्वापेक्षया मुक्तदेवगंधर्वानंदस्य शतगुणितत्वमित्येवं अन्यान्यमुक्तनां चतुर्मुखपर्यंतानां बोधनेन मुक्तभेदेनानंदभेदस्य तच्छ्रुत्या प्रतीतेरविकल-त्वात् अन्यार्थस्यासंभवाच्च ।

(रा.) यत्तु वस्तुवस्तु नेयं श्रुतिर्मुक्तविषया तस्मिन्नबद्ध-जीवत्वव्याप्यश्रोत्रियत्वधर्माविभावात् शतगुणितप्रकृतानंदस्य तत्तत्काम-

हतश्रोत्रिये असंभवात् अकामहतत्वं विशेषणं जडस्य घटादेरेव स्वतोऽकामहतत्वात् तत्रानंदाप्रसक्त्या श्रोत्रियत्वविशेषणं अकामहतत्व समुचितं श्रोत्रियत्वमेवोक्तशतगुणनंदस्य प्रयोजकमिति सिध्यर्थं श्रोत्रियत्वाकामहतत्वयोस्समुच्चयार्थश्चकार इति ।

(खं.) तत्र कामहतत्वं नाम तत्तत्कामनायां जातायां तद्विषयालाभप्रयुक्तव्यथावत्वं तदभावः अकामहतत्वं किंवा तृष्णा (कामा) भावः एतदुभयात्मकाकामहतत्वस्य बद्धजीवसंसारिणि काम्यमानवस्तुनः अलाभेन कामानामवर्जनीयत्वेन च असंभवेन बृहदारण्योपनिषदि आनंदतारतम्यप्रकरण एव श्रोत्रियोऽवृजिनोऽकामहत इति अवृजिनत्वविशेषेण "साधु युवाध्यायक" इति श्रोत्रियत्वावृजिनत्वे गृह्येते इति तैत्तिरीयशांकरभाष्ये श्रोत्रियत्वावृजिनत्वे द्वे (१०) इति सुरेश्वरकृततैत्तिरीयभाष्यवार्तिकेपि अस्मिन्नपि प्रकरणे अवृजिनत्वं स्वीकर्तव्यमित्युक्तत्वेन च अवृजिनत्वस्यापि अकामहतत्वादिवत् विशेषणत्वावगतेः सर्वपापाभावार्थकावृजिनत्वविशेषणस्य बद्धजीवे कथंचिदपि असंभवेन च अवृजिनत्वादिविशेषणानां मुक्तत्वव्याप्यतया बद्धजीवत्वविरोधितया चास्याः श्रुतेर्मुक्तविषयत्वात् शतगुणितप्रकृतानंदस्य तत्तत्कामहतश्रोत्रियेऽसंभवात् अकामहतत्वविशेषण' मिति वाक्येन श्रोत्रियत्वस्यैव शतगुणितप्रकृतानंदप्रयोजकत्वांगीकारे तत्तत्कामहतश्रोत्रियस्यापि तत्तदानंदप्रसंगवारणार्थं अकामहतत्वविशेषणमिति प्रयोजनकथनमसंगतमेव इंद्रराजादिपदकामनारहितश्रोत्रियस्यापि इंद्रराजादिसंबंधिसुखानुभवस्यादर्शनेन तद्विपरीतदर्शनेन च अकामहतत्वसहितश्रोत्रियत्वस्य उक्तशतगुणानंदं प्रति प्रयोजकत्वासंभवात् ।

(रा.) "अक्षण्वंतः कर्णवंतः सखायो मनोजवेष्वसमा बभूवुः" (ऋ. ८-२-२४) इति श्रुतौ मनोजवशब्दितमोक्षहेतुब्रह्मोपासनानां तारतम्यकथनेन तत्साध्यमुक्तावपि तारतम्यमस्तीति प्रतीयत इति अस्मदुक्तमित्याशंक्य मनोजवशब्दस्य मनोवेगपरत्वेन मोक्षहेतुब्रह्मोपासनपरत्वस्य विनाकारणमभ्युपगंतुमशक्यत्वादिति यदुक्तं दूषणम् ।

(खं.) तत्र मनोजवाः प्रज्ञाद्यास्तेष्वसमाः अतुल्या बभूवुः—भवंतीति अतुल्यत्वमुक्त्वा आदघ्नासः उपकक्षासः स्नात्वा—हृदा इत्यादिपदेन

केषांचित् मध्यमप्रज्ञत्वं केषांचित् अल्पप्रज्ञत्वं केषांचित् महाज्ञानित्वं उक्तमिति वेदभाष्यकारेणापि व्याख्याततत्वेन उपासनायाज्ञानरूपत्वेन अस्याः श्रुतेरुपासनातारतम्यबोधनपरत्वस्य निर्विवादत्वेन मनोवेगपरत्व-कथनस्य वेदभाष्याद्यनवलोकननिमित्तत्वात् प्रकृतेः मनोवेगरूपार्थस्य अनुपयुक्तत्वाच्च।

(रा.) किंच माध्वमते मुक्तेश्वरावुभावप्यंधौ निर्गुणत्वेन दर्शन-रहितत्वात् उभावपि समौ न्यूनाधिकभावसमर्पकगुणरहितत्वात्। न चेश्व-रस्य महत्वं मुक्तस्याणुत्वमित्यसाम्यमिति वाच्यं। तन्मते महत्वस्यापि ब्रह्मात्यंताभिन्नतया ब्रह्मरूपत्वात् अणुत्वस्यापि मुक्ताभिन्नतया तद्रूप-त्वात् महत्वाणुत्वयोरेव तयोरभावात् साम्यापत्तेरनिवार्यत्वादिति।

(खं.) तन्न मुक्तेश्वरयोरुभयोरपि आनंदानुभवितृत्वादिरूप-गुणवत्वस्य साधितत्वेन त्वयाप्यंगीकृतत्वेन च निर्गुणत्वाभावात्। "सहस्र शीर्षा पुरुषः सहस्राक्षः सहस्रपात् (पुरु.) यदात्मको भगवान् तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मकः शक्त्यात्मकः ऐश्वर्यात्मक" इत्यादिश्रुत्या ईश्वरस्य "स तत्र पर्येति जक्षन् क्रीडन् रममाणः" (छां०) "एतत्सामगायन्नास्ते" (तै०) इत्यादिश्रुत्या मुक्तजीवस्य इंद्रियवत्वोक्ते-र्दर्शनत्वस्योपपादितत्वाच्च। सर्वज्ञत्वासर्वज्ञत्वाल्पशक्तिपूर्णशक्त्यादिभि-र्विशेषत्वेन मुक्तेश्वरौ न सर्वांशेन समौ अणुत्वमहत्वयोर्जीवेश्वराभिन्न-त्वेपि विशेषबलेन जीवेश्वरधर्मतया ताभ्यामपि विशेषवत्वसंभवात्। इदं तु बोध्यं संकरमते एव ब्रह्मणो निर्गुणत्वेन अंधत्वं (न) खरेश्वरयोरु-पहितचैतन्यत्वेन साम्यं ईश्वरः खरचैतन्याभिन्नश्च। संकराभिमतब्रह्मणः 'निर्विशेषं स्वयंभातं निर्लेपमजरामरं। शून्यं तत्वमविज्ञेयं मनोवाचाम-गोचरं इत्यादि बौद्धाभिमतशून्यलक्षणोपेतत्वेन शून्याभेदः शून्यवाद्यभि-मतस्य जगतः अज्ञानकल्पितत्वस्य शून्यापरपर्यायब्रह्मज्ञाननिवर्त्यत्वस्य अहं तुच्छं अहं ब्रह्मेत्यादिशून्यापरपर्यायब्रह्मैक्योपासनायास्तया च ब्रह्मा-परपर्यायशून्यभावरूपमोक्षस्य च शून्यवाद्यभिमतव्यावहारिकसत्वादीनां चांगीकृतत्वेन मायावादी शून्यवाद्यभिन्नश्चेति।

(रा.) किंच जगत्स्रष्टृत्वगुणः ब्रह्मात्यंताभिन्न इति तैः स्वीकृतः स चानुपपन्नः। "तत्तेजोऽसृजते"ति स्रष्टृत्वस्यागंतुकत्वोक्त्या नित्यसिद्ध-ब्रह्मरूपत्वासंभवात् इति यदुक्तं।

(खं.) तन्न नित्यप्रकाशरूपस्यापि सवितुः "सविता प्रकाशते" इति व्यवहारविषयत्वात् जगत्सर्जनक्रियारूप (जगत्स्रष्टृत्वरूप) स्यापि ब्रह्मणः क्रियायाः व्यक्त्यभिप्रायेण "तत् (ब्रह्म) तेजोसृजत" इति व्यव-हारविषयत्वसंभवेन तादृशव्यवहारस्य सूर्यप्रकाशस्येव सर्जनक्रियारूपस्र-ष्टृत्वस्य आगंतुकत्वाज्ञापकत्वात्। स्वीकृतं हि शंकरेणापि "यद्वै तन्न पश्यति पश्यन् वै न पश्यति" (बृ) इत्युपनिषद्व्याख्यानावसरे "यथा-दित्यादयोनित्यप्रकाशस्वभावा एव संतः स्वाभाविकेन नित्येनैव प्रकाशेन प्रकाशयंति न ह्यप्रकाशात्मनः संतः प्रकाशं कुर्वंत प्रकाशयंतीत्युच्यंते किं तर्हि स्वभावेनैव नित्येन प्रकाशेन तथायमप्यात्मा अविलुप्तस्वभावया दृष्ट्या नित्यया द्रष्टेत्युच्यते इति नित्यज्ञानस्वरूपस्यापि द्रष्टा इत्यादि-व्यवहारविषयत्वं तादृशव्यवहारस्य ज्ञानसंबंध्यागंतुकत्वाज्ञापकत्वं च।

(रा.) स्रष्टृत्वस्याभिव्यक्त्यात्मना आगंतुकत्वं शक्त्यात्मना ब्रह्मस्वरूपत्वामित्याशंक्याभिव्यक्त्यात्मकस्य स्रष्टृत्वस्य ब्रह्मभिन्नत्वे 'एवं धर्मानि" ति श्रुतिविरोधापत्त्या तदभिन्नत्वस्यावश्यकतया आगंतु-कत्वोक्तिविरोधतादवस्थ्यात् आगंतुकव्यक्त्यात्मकस्रष्टृत्वात्यंताभिन्न तया ब्रह्मणोप्यागंतुकत्वापत्तेश्चेति तद्दूषणमुक्तम्।

(खं.) तन्न अभिव्यक्त्यात्मकस्यापि स्रष्टृत्वस्य अनागंतुकत्वा-भ्युपगमात् अभिन्नस्यापि विशेषबलेन शक्तिव्यक्तिरूपत्वोपपत्तेः।

(रा.) न च विशेषस्यापि पूर्वोक्तरीत्या ब्रह्मात्यंताभिन्नतया घट्टकुट्टीप्रभातापत्तिरिति वाच्यम्।

(खं.) कालः सदास्ति इत्यादि व्यवहारनिर्वाहार्थं अद्वैतसिद्धिकार त्वदाद्यद्वैत्यंगीकृततत्तदसाधारणवस्तुस्वरूपापरपर्यायवस्तुस्वभावविशेष-

स्यास्माभिर्विशेषतयांगीकृतत्वेन विशेषांगीकारपक्षे प्राप्तदोषाभासानां उभाभ्यां स्वनिर्वाहकतया समाधेयत्वात्।

(रा.) यत्तु किंच द्युभ्वाद्यधिकरणादिषु चेतनाचेतनात्मकसर्वजगदाधारत्वस्य ब्रह्मणि भवद्भाष्य एव कथितत्वात् कृत्स्नस्यापि जगतो-ब्रह्माश्रितत्वेन ब्रह्मधर्मतया "एवं धर्मान्" इति श्रुत्या ब्रह्मनिरूपितपृथग्धर्मत्वनिषेधेन ब्रह्मात्यंताभिन्नत्वात् जीवब्रह्मजडानामद्वैतापत्तिः। माध्वानां द्वैतिनइति शब्दश्च निरर्थकः स्यात्। उक्तरीत्या तन्मते जडस्य ब्रह्मणो जीवस्य चात्यंताभिन्नतया भेदरूपविषयासिद्धेरित्यलमिति।

(खं) तन्न चेतनाचेतनात्मकसर्वजगदाधारत्वस्य ब्रह्मधर्मत्वेन ब्रह्माभिन्नत्वेपि जगतः ब्रह्मधर्मत्वाभावेन ब्रह्मस्वरूपत्वाप्राप्तेः। न च जगतो ब्रह्माश्रितत्वात् ब्रह्मधर्मत्वमिति वाच्यम्। तथा सति घटोपि त्वदाश्रितः पटोपि त्वदाश्रित इति तयोरपि त्वत्धर्मत्वं स्यात्। यावत्धर्माणां धर्म्यभिन्नत्वानंगीकारात्स्व

(रा.) यत्तु मध्वभाष्यजिज्ञासाधिकरणे "स्त्रीशूद्रब्रह्मबंधूनां तंत्रज्ञानेऽधिकारिता" इति व्योमसंहितायामित्यस्ति। तत्र तंत्र-पंचरात्रादि इति जयतीर्थटीका तेन पंचरात्ररूपतंत्रोक्त ज्ञाने स्त्रीशूद्रद्विजाभासानामधिकारः न तु द्विजश्रेष्ठानां शिष्टानामिति स्पष्टं प्रतीयते इति।

(खं.) तन्न स्त्रीशूद्रब्रह्मबंधूनां त्रयी न श्रुतिगोचरा। इति भारतमाख्यानं कृपया मुनिनोदितं। इत्यादौ शूद्रादीनां वेदाधिकाराभावात् भारतनिर्माणं कृतमित्येतावन्मात्रेण द्विजश्रेष्ठानां भारतादौ नाधिकार इत्यस्येव स्त्रीशूद्रद्विजाभासानां तंत्रशब्दितपंचरात्रादिज्ञानेऽधिकारकथनेऽपि द्विजश्रेष्ठानां शिष्टानां नाधिकार इत्यस्यासिद्धेः। किंच "तंत्रज्ञानेऽधिकारिता। एकदेशे परोक्ते तु न ग्रंथपुरस्सरे" इति तस्मिन्नेव वाक्ये 'परोक्ते' इति पदेन परान् प्रति स्त्रीशूद्रद्विजाभासातिरिक्तान् द्विजश्रेष्ठान् शिष्टान् प्रति उक्ते स्त्रीशूद्रादीनां श्रवणेऽधिकारः न तु साक्षात् स्वान् प्रति

उक्त इति कथनेन द्विजश्रेष्ठानामधिकारो व्योमसंहितावचनेनैव गम्यत इति द्विजश्रेष्ठानामधिकाराभावप्राप्तिरिति कथनस्य व्योमसंहितावाक्यार्थाज्ञानविजृंभितत्वाच्च ।

(रा.) यत्तु मध्वभाष्ये तदंतरप्रतिपत्त्यधिकरणे 'भूतबंधस्तु संसारो मुक्तिस्तेभ्यो विमोचनं' इति वाराहे इति ग्रंथेन भूतबंधस्य संसाराख्यबंधत्वमुक्तं । आनंदमयाधिकरणे प्रमादात्मकत्वाद्बंधस्य विमुक्तत्वं च युज्यते' इति मध्वभाष्येण भूतसंबंधरूपबंधस्य प्रमादात्मकत्वमुक्तं । तत्र तत्वप्रकाशिका तदुक्तबंधस्याज्ञानमूलत्वेनास्वाभाविकत्वात् अस्वाभाविके चाविद्यमानपदप्रयोगादिति भावः इति तथाचाद्वैतिवद्बंधरूपसंसारस्याज्ञानमूलत्वं 'स्वीकृतवान्' माध्वः किमित्यद्वैतिनं द्वेष्टीति ।

(खं) तत्र सर्वप्रमाणविरुध्धानां जीव ब्रह्माभेद, ब्रह्मनिर्गुणत्व, जगन्मिथ्यात्व, स्वान्यपदार्थमिथ्यात्व, ब्रह्मवाच्यत्व, सत्तात्रैविध्य, ब्राह्मण्याद्यारोप, संध्यायज्ञादिवेदविहितक्रियाकर्तृत्वाभावादीनां प्रत्यक्षानुमानवेदाद्यागमानां अतत्वावेदकत्वलक्षणाप्रामाण्यस्य चास्मदनंगीकृतानां अद्वैतिभिरंगीकारेण प्रमाणविरुद्धवक्तृषु चार्वाकसौगतादिष्विव द्वेषस्य न्याय्यत्वात् । सत्यरूपभूतबंधस्य सत्यभूताज्ञानस्थित्यधीनस्थितिकत्वरूपाज्ञानमूलत्वांगीकारेपि अद्वैतिवत् बंधस्य मिथ्यात्वमिथ्याभूताज्ञानोपादानत्वादीनामनंगीकारेण बंधस्याज्ञानमूलत्वमिति शब्दश्रवणमात्रेण साम्योपपादनस्य अद्वैतिषु तत्प्रयुक्तद्वेष्यत्वाक्षेपस्य च स्वपरमताज्ञानविजृंभितत्वाच्च। यद्यपि शांकरभाष्यगांभीर्यनिर्णयाख्ये स्वकृतग्रंथे रामसुब्बशास्त्रिणा मायायास्तत्प्रयुक्तपदार्थानां च विद्यया नाशोनास्ति किंतु कर्तृत्वभोक्तृत्वादीनामेव नाश इति शांकराभिप्राय इत्यवोचि। केषांचित्सत्यानामपि अध्यस्तत्वांगीकाराद्द्वेषस्यापरिहारात् । ब्रह्मातिरिक्तनाश्यपदार्थांगीकारेण अद्वैतमतहानेरपसिध्धांतापत्तेश्च ।

(रा.) यत्तु "असंभवस्तु सतोऽनुपपत्तेः" इति सूत्रेमध्वभाष्यतट्टीकयोः सत इति पदं ब्रह्मासाधारणमित्यंगीकृतत्वाज्जगति सद्विलक्षणत्व-

मंगीकृतप्रायं "असद्व्यपदेशान्नेतिचेन्न धर्मांतरेण वाक्यशेषात्" इति सूत्रे भाष्यटीकयोरसत्वनिराकरणेन जगति असद्वैलक्षण्यं स्वीकृतं तन्मत-प्रविष्टास्तु अद्वैत्यंगीकृतसदसद्विलक्षणत्वमिथ्यात्वमाक्षिपंति । स्वभा-ष्यटीकाज्ञानादिति ।

(खं.) तन्न अद्वैतिमते हि जगति सद्विलक्षणत्वं नाम सत्वावच्छिन्न-प्रतियोगिताकभेदो वा, सत्वत्वाच्छिन्नप्रतियोगिताकाभावो वांगीकृतः। अस्माभिस्तु सतां बहुत्वात् सदंतरप्रतियोगिकभेद एव स्वीकृतः न तु सत्वत्वावच्छिन्नप्रतियोगिताकाभावः । एवमसद्विलक्षणत्वं नाम प्रति-पन्नोपाधौ त्रैकालिकनिषेधप्रतियोगितारूपासद्वैलक्षण्यं तत्ववादिभिरस्मा-भिरंगीकृतं । अद्वैतिभिस्तु जगतः प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रति-योगित्वांगीकारात् । तादृशनिषेधप्रतियोगिवैलक्षण्यं नांगीकृतं किंतु निरुपाख्यादिरूपासद्वैलक्षण्यमंगीकृतं तत्तु द्वैतवादिभिर्नांगीकृतं जगत् असन्नेति असद्विलक्षणज्ञानार्थं प्रतियोगितया असत्ज्ञानस्यावश्यकत्वेनासतः प्रतीतिविषयत्वस्यैवांगीकारात्। एवमाद्यत्यंतवैलक्षण्यात् श्रीमन्मध्व-मतप्रविष्टकर्तृकाद्वैत्यंगीकृतसदसद्विलक्षणत्वरूपमिथ्यात्वाक्षेपस्य स्वभा-ष्यटीकाज्ञानादित्युक्तेः । रामसुब्बाशास्त्रिण एव स्वपरभाष्यटीकाद्यज्ञान-ख्यापकत्वात्। अनुव्याख्यानसुधादिग्रन्थेषु अद्वैत्यभिमतसदसद्वैलक्षण्यस्य निपुणतरं स्पष्टं दूषितत्वेन तन्मतप्रविष्टास्त्वित्यादिना तेषामद्वैत्यभिमत-सदसद्वैलक्षण्यानुमोदनात्रिष्करणस्यात्यंतमसमंजसत्वाच्च ।

(रा.) मध्वमते सच्छब्दः स्वतंत्रपरः जगति च स्वातंत्र्या-भावेन स्वतंत्रविलक्षणत्वमास्तां न तावता अद्वैत्यभिमतसद्विलक्षणत्व-घटितमिथ्यात्वं माध्वाभिमतमित्याशंक्य अद्वैतभाष्ये वाक्यान्वयाधिकरणे यो हि ब्रह्मक्षत्रादिकं जगत् आत्मनोऽन्यत्र स्वातंत्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं जगत् पराकारोति, इति ग्रंथेन ब्रह्मण्येव स्वातंत्र्यस्य जगति तदभावस्य जगति स्वतंत्रविलक्षणत्वा-द्दर्शनप्रयुक्तस्वातंत्र्यदर्शने मिथ्यादर्शनत्वस्य च कथनेनाद्वैत्यभिमत-मिथ्यात्वस्य मध्वांगीकृतत्वे विवादासंगतेरिति समाधानमुक्तम् ।

(खं.) तन्न यदि वाक्यान्वयाधिकरणीयशांकरभाष्येण जगतः सत्यत्वं ईश्वरस्य स्वातंत्र्यादिकमद्वैत्यभिमतमिति सिध्येत् तदा अस्मदंगीकृतं जगतः सत्वं परमात्मनः स्वातंत्र्यं अद्वैतिभिरेवांगीकृतं न तु अद्वैत्यंगीकृतप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिरूपमिथ्यात्वं द्वैतिभिरंगीकृतमिति अद्वैतिनामेव द्वैतमतप्रवेशः। न तु द्वैतिनामद्वैतिमतप्रवेश इति फल्गुविवादं न कुर्मः। परमात्मनः स्वातंत्र्यसर्वोत्तमत्वादीनां जगतः सत्यत्वादीनां अस्मदभिमतानां सिद्धेश्च। परंतु वाक्यान्वयाधिकरणीयशांकरभाष्येण तदसिद्धेर्विवादस्य संगतत्वात्। तथाहि वाक्यान्वयाधिकरणीयशांकरभाष्यं तु "यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानंतरेण ग्रंथेन तदेवोपपादयति "ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद" इत्यादिना यो हि ब्रह्म क्षत्रादिकं जगत् आत्मनोन्यत्र स्वातंत्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्म क्षत्रादिकं जगत् पराकरोतीति भेददृष्टिमपोद्य "इदं सर्वं यदयमात्मा" इति सर्वस्य वस्तुजातस्य आत्माव्यतिरेकत्वमवतारयतीति अत्र यद्यपि आत्मनोन्यत्र स्वातंत्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तदेव मिथ्या दृष्टं ब्रह्म क्षत्रादिकं जगत् पराकरोतीति भेददृष्टिमपोद्य "इदं सर्वं यदयमात्मा" इति सर्वस्य वस्तु जातस्य आत्मा व्यतिरेकत्वमवतारयतीति अत्र यद्यपि आत्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यतीति वाक्येन झटिति जगतः सत्वेपि स्वातंत्र्याभावमात्रं प्रतीयते तथापि 'भेददृष्टिमपोद्य' "इदं सर्वं यदयमात्मा" इति सर्वस्य वस्तुजातस्य आत्माव्यतिरेकत्वमवतारयति इति उत्तरवाक्ये जगतो ब्रह्मणि अध्यस्तस्वरूपात्माव्यतिरेकस्य कथनात् सत्यत्वाध्यस्तत्वयोर्विरोधेन सत्यत्वं नाभिप्रेतमित्यवगम्यते 'भेददृष्टिर्निंदापूर्वकमभेदं वददिदं वाक्यमेकविज्ञानेन सर्वविज्ञानं वक्तीति वक्तुं अस्यार्थमाह यो हीति जगतो ब्रह्माधीनस्य प्रातीतिकमन्यत्वमनुज्ञातुं स्वातंत्र्येणेत्युक्तमिति च आनंदगिरिकृततट्टिप्पणीवाक्याभ्यां तद्भाष्यकारस्य तात्पर्यं नास्तीति स्पष्टमवगम्यते। योन्यत्रात्मनः आत्मस्वरूपव्यतिरेकेण आत्मैव न भवति ब्राह्मणजातिरिति तां "यो वेदे" त्यादि बृहदारण्यकोपनिषदीयसांकरभाष्यवाक्येनापि

जगतः ब्रह्मण्यारोपितत्वरूपब्रह्मव्यतिरेकेणासत्वोक्त्या जगतः सत्वाभावे संकरतात्पर्यमवगम्यते न तु स्वातंत्र्याभावमात्रे इति। तथाच जगतः सत्यत्वमंगीकृत्य स्वातंत्र्याभावमात्रेण सच्छब्दावाच्यस्वतंत्रपरमात्मभिन्नत्वेन सद्विलक्षणत्वंगीकृतमद्वैतिभिरित्यत्र ज्ञापकाभावादिति।

(रा.) यत्तु "तद्गुणसारत्वादिति" सूत्रे ज्ञानानंदादिब्रह्मगुण एवास्य यतः सारः स्वरूपं अतोऽभेदव्यपदेश इति मध्वभाष्येपि जीवब्रह्मणोः स्वरूपाभेदोऽद्वैतिवत्कथितः प्रतीयते मध्वमते आनंदादिगुणानां ब्रह्मात्यंताभिन्नत्वात् ब्रह्मात्यंताभिन्नानंदादिस्वरूपत्वं जीवस्योक्त्वा ज्ञानानंदादिब्रह्मगुणा एवेत्येवकारेण ब्रह्मभिन्नत्वनिराकारणात्। न च ज्ञानानंदादिगुणा एवेत्यत्र ज्ञानानंदादिगुणसदृशज्ञाननंदादिगुणा इत्यर्थः। टीकोक्तरीत्या ग्राह्य इति शंक्यं स्वायत्ते शब्दप्रयोगे भाष्यकारेण गौणवृत्यार्थसमर्पकज्ञानानंदादिगुणा इति निर्देशस्यायुक्तत्वापत्तेः। तस्मान्मध्वभाष्यकाररीत्या जीवब्रह्मणोर्भेदपक्षवदभेदपक्षोप्यस्तीति निष्प्रत्यूहमिति।

(खं.) तन्न नागायुतबलसदृशबलार्थकतया नागायुतबला इत्यादि बहुलप्रयोगदर्शनेन ज्ञानानंदादिब्रह्मगुणा इत्यनेन शक्तितुल्यया निरूढलक्षणया ब्रह्मगुणसदृशगुणानां बोधनात् निरूढलाक्षणिकप्रयोगे स्वायत्तन्यायानवकाशात्। आचार्यैरेव "तथापि तु चिदानंदपूर्वास्तत्सदृशा गुणाः। सास्वरूपमस्यापि मुक्तावप्यवशिष्यते" इति अनुव्याख्याने ब्रह्मगुणसदृशगुणस्वरूपत्वोक्तेश्च। श्रीमट्टीकाचार्यैरपि तथा व्याख्यातत्वाच्च। जीवब्रह्माभेदनिषेधकानां श्रीमदानंदतीर्थीयानां अनेकेषां वाक्यानां विद्यमानत्वाच्च। जीवब्रह्मभेदो नाचार्यसम्मत इति श्रीमन्मध्वभाष्यरीत्या जीवब्रह्मणोरभेदपक्षोस्तीति त्वदुक्तेः शब्दस्वभावाद्यज्ञानमूलत्वेनोपेक्षणीयत्वात्।

(रा.) यत्तु "तदभिध्यानाधिकरणे तस्याभिध्यानात् योजनात्तत्वभावाद्भूयश्चांते विश्वमायानिवृत्तिः"। इति अनादिबंधलयस्य तदभिध्याननिमित्तत्वाल्लिंगात्तत्कर्तृत्वं प्रतीयते किमुत सादेर्जगत इत्येतस्मा-

देव सर्वसंहारकर्ता विष्णुरिति माध्वभाष्येणाद्वैतमतइव मायाया अनादि-बंधरूपत्वं जीवगतब्रह्मसाक्षात्कारसंतुष्टभगवदभिध्यानरूपज्ञाननाश्यत्वं सादिप्रपंचरूपस्य संसारस्य कैमुतिकन्यायेन तदभिध्याननाश्यत्वं चोक्तं उक्तं च सुधायां "अस्यापरोक्षज्ञाने जाते अंते कर्मक्षयांते" इति अत्र मायाशब्देन मायाऽविद्याप्रकृतिरित्यादिशब्दाभिधेयमनाद्येव किमपि द्रव्य-मंगीकरणीयमिति चोक्तं। सुधाग्रंथे प्रकृतिरिति पदेन मायाया जगत्परि-णामिकारणत्वमद्वैतिवदुक्तं। अविद्याशब्दाभिलप्यत्वं चानाद्येव किमपि द्रव्यमिति अनादित्वं भावरूपत्वं च कथितं। "अज्ञानेनावृतं ज्ञानमि" ति गीताभाष्यप्रमेयदीपिकायां "स्वरूपज्ञानमविद्यावृतं वृत्तिज्ञानं त्वविद्यां शिथिलयति ब्रह्म प्रकाशयती" ति ग्रंथेनापि अद्वैतमतवदेव स्वरूपस्या-विद्यावृतत्वमविद्यायावृत्तिनाश्यत्वं च कथयति। एवं स्थिते माध्वः स्व-स्यापि वृत्तिरूपब्रह्मज्ञानविनाश्याविद्यावादित्वजगत्परिणामिकारणानादि-मायाबंधवादित्वादिसाम्येपि अद्वैतिनं मायावादित्वादिना दूषयन् स्वसि-द्धांतानभिज्ञ इति प्रतीयते इति।

(खं.) तन्न मायापदार्थस्य तस्य जगदुपादानत्वादिबंधरूत्वज्ञान-नाश्यत्वादीनामस्मदंगीकृतत्वेपि अद्वैतिवत् तस्य मिथ्यात्वसाक्षाद्ब्रह्म-ज्ञाननिवर्त्यत्वादीनामनंगीकारेण प्रत्युत सत्यत्वस्य मायापरपर्यायप्रकृते-रीश्वरप्रसादेनापि स्वरूपतोनाशमनंगीकृत्य जीवसंबंधवियोगमात्रस्य सत्यजगदुपादानत्वस्य एवमाद्यनेकाद्वैत्यनंगीकृतप्रमेयाणामंगीकारेण महा-वैलक्षण्यसद्भावेन मायापदोच्चारणमात्रेण साम्यमंगीकृत्य मायावादिनो दूषयितुः स्वसिद्धांतानभिज्ञत्वकथनस्यापह्नवनीयत्वात्

(रा.) यत्तु वाक्यान्वयाधिकरणे "कृष्णद्वैपायनस्यैव एकदेशवि-चिंतितं। स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यते" इति मध्वभाष्ये पुराणश्लोकमुदाहृत्योत्तरत्रोदाहृतानामृषिमतानां सर्वेषामपि सिद्धांत-त्वमेव न पूर्वपक्षत्वमित्युक्तं "स्वामिनः फलश्रुतेरित्यात्रेयः" इति सूत्र-भाष्यतत्वप्रकाशिकायां ज्ञानकर्मफलमिंद्रियाधिष्ठातॄणां स्वामिनां देवा-नामेव न कर्तुरित्यात्रेयमतस्य पूर्वपक्षत्वमेवेत्युक्तं। "आर्त्विज्यमित्यौडुलो-

मिस्तस्मै हि परिक्रियते" इति सूत्रे ऋत्विजामिव कर्तुर्यजमानस्यापि किंचित् कर्मफलमस्तीत्यस्य सिद्धांतत्वमुक्तमिति पूर्वोत्तरविरोध इति।

(खं.) तन्न तत्वप्रकाशिकायामात्रेयमतस्य पूर्वपक्षत्वमेवेत्येवकार-घटितवाक्यस्याभावात् "अस्वामित्वेपि प्रजानां ज्ञानफलसंभवात् न च श्रुतिमुनिमतविरोधः प्रजानामल्पफलाभ्युपगमात्तदभिप्रायकत्वाच्च श्रुत्या-देरल्पस्वेनिस्वप्रयोगदर्शनात् इत्यौडुलोमिराचार्यो मन्यत इति भावः इति तत्वप्रकाशिकायां न च श्रुतिमुनिमतविरोध इति वाक्येनात्रेयमतविरोध-माशंक्य अल्पस्वे निस्वप्रयोगदर्शनेन प्रजानामल्पफलं भवतीति अभिप्रा-येण प्रजानां फलं नास्तीति उक्तं न सामान्यतः फलाभावतात्पर्येणेति तादृशमतस्यापि विरोधपरिहारेण समंजसीकृतत्वात् "न चात्रेयमताव-लंबेन पूर्वपक्षिते सिद्धांतयत् सूत्रं पठित्वा व्याचष्टे" इति तत्वप्रकाशि-कायां 'आत्रेयमतावलंबेन पूर्वपक्षिते' इति कथमुक्तमिति वाच्यम्। उत्त-रवाक्ये स्पष्टं न च श्रुतिमुनि (आत्रेय) मतविरोधइति विरोधमाशंक्य अल्पत्वविवक्षया अभावप्रयोग इति तादृशमतविरोधपरिहारस्य कृतत्वात् पूर्वपक्षित इत्यस्य आपाततः शंकिते इत्यर्थस्यैव तदभिप्रेतत्वात् तत्वप्रका-शिकाव्याख्यात्राचार्येरन्यथैव व्याख्यातत्वाच्च। पूर्वोत्तरविरोधगर्वानवका-शेपि पूर्वोत्तरग्रंथविरोधकथनस्य श्रीमत्तत्वप्रकाशिकादिग्रंथानवलोकननि-बंधनत्वात्।

(रा.) यत्तु आभास एव चेति सूत्रे 'सोपाधिर्निरुपाधिश्च प्रतिबिंबो द्विधा स्मृतः। जीवः परस्यानुपाधिरिंद्रचापो यथा रवेः। इत्यप्रसिद्ध-श्रुतिमुदाहृत्य जीवस्य निरुपाधित्वे सति भगवत्प्रतिबिंबत्वं रविं प्रति इन्द्रचापस्येवेति माध्वभाष्ये कथितमस्ति। तत्र दृष्टांते रव्यभिमुखदेश इव इंद्रचापो रविप्रतिबिंबो दृश्यते तथा दार्ष्टांतिके भगवदभिमुखदेश एव भगवत्प्रतिबिंबो जीव इति वक्तव्यं यस्मिन् देशेऽभिमुखे रवेर्भगवतश्च प्रतिबिंबस्य एवोपाधिरिति प्रतिबिंबस्य निरुपाधिकत्वोक्तिर्युक्तिविरुद्धा प्रत्यक्षविरुद्धा च श्रुतिश्च न पठ्यमाना सर्वांगीकृता काचिदुपलभ्यते। अप्रसिद्धश्रुतिश्च स्वस्यासिद्धत्वान्न समीचीनयुक्तिं प्रत्यक्षं वा बाधितुं

शक्नोति 'यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततं' इति प्रत्यक्षश्रुतौ एतस्मिन् ब्रह्मणि एतज्जीवस्वरूपमाततं' यथा पुरुषे छाया आततेति मध्वभाष्यटीकाव्याख्या तया भूतलादिप्रदेशोपाधिकच्छायाया निदर्शनत्वोक्त्या जीवस्यापि सोपाधिकं भगवच्छायात्वं प्रतीयते न तु निरुपाधिकं प्रतिबिंबत्वमिति ।

(खं.) तन्न जीवस्य निरुपाधित्वे सति भगवत्प्रतिबिंबत्वं रविं प्रति इंद्रचापस्येवेति श्रीमन्मध्वभाष्येऽनुक्तेः । अप्रसिद्धश्रुतिमुदाहृत्येति यदुक्तं तन्न । शांकरभाष्येपि गुहाधिकरणे 'पैंगिरहस्य ब्राह्मणे' इति पैंगिश्रुतेरुदाहृतत्वात् । किंचाप्रसिद्धत्वं नाम त्वत्सवेतज्ञानाविषयत्वं वा सर्वसमवेतज्ञानाविषयत्वं वा । नाद्यः "अनंता वै वेदा" इति वेदानामनंतत्वात् अल्पज्ञेन त्वया अज्ञातत्वमात्रेण असत्वकथनायोगात् । न द्वितीयः। सर्वसमवेतज्ञाना विषयत्वस्य ज्ञातुमशक्यत्वात् । इदानीमस्मत्प्रत्यक्षसिद्धग्रंथाघटकत्वमात्रेणासत्वं वक्तुमशक्यं। वेदानामनंतत्वहानेः ।

(रा.) यच्च प्रत्यक्षविरुद्धा चेति तदप्ययुक्तं ।

(खं.) उपाधिविषयकप्रत्यक्षस्याप्रदर्शितत्वात् तादृशप्रत्यक्षस्य केनाप्यननुभूयमानत्वाच्च । बिंबप्रतिबिंबादीनां प्रत्यक्षायोग्यत्वाच्च ।

(रा.) भगवदभिमुखदेश एव भगवत्प्रतिबिंबो जीव इत्येतदपि असंगतं ।

(खं.) भगवतो व्याप्तत्वेन विश्वतोमुखत्वेन च सर्वदेशस्यापि भगवदभिमुखदेशत्वेन भगवदभिमुखदेश एवेति एवकाख्यावर्त्याभावात् । "यथैषा पुरुषे छाया एतस्मिन्नेतक्षततं" इति श्रुतिस्तु यथाच्छायायाः पुरुषाधीनत्वं तथा जीवजातस्य भगवदधीनत्वमित्यस्मिन्नर्थे उक्तत्वेन सोपाधिनिरुपाधिविषये अनुक्तत्वात् ।

(रा.) "मध्वादिष्वसंभवादनधिकारं जैमिनिरि"ति सूत्राक्षर-

स्वारस्यालोचने माध्वानां वेदांतानधिकारः प्रतीयते इति यदुक्तं रामसुब्बेन ।

(खं.) तदनुमतमेवास्माकम् तादृशसूत्रस्य देवादीनामधिकाराभाव इति पूर्वपक्षप्रापकतया त्वदीयभाष्ये व्याख्याततत्वेन माध्वानामधिकाराभावप्रतिपादकतया योजने माध्वानां देवत्वमुक्तं भवेदिति । किंचास्य सूत्रस्य पूर्वपक्षसूत्रत्वेन पूर्वपक्षे ब्रह्मण असत्वाकारणत्वयोर्वेदाप्रामाण्यादेर्देवानां वेदविद्याधिकाराभावस्य एवमनेकेषां प्रमाणविरुद्धानां कथितत्वेन तेषां यथा सिद्धांतसूत्रेणाप्रामाणिकत्वादिव्यवस्था क्रियते तथा "भावं तु बादरायणोस्ति हि" इति सिद्धांतसूत्रेण देवानां माध्वानां च तु शब्देन अप्रामाणिकं वेदांतानधिकारमपोह्याधिकारसद्भावस्य साक्षान्नारायणावतारभूतेन भगवता बादरायणेन साधितत्वेन "मध्वादिष्वसंभवादनधिकारं जैमिनिरिति पूर्वपक्षसूत्रेण माध्वानां वेदांतानाधिकारप्रतीतेः 'वेदांताधिकारदार्ढ्यसंपादकत्वेन भूषणत्वात् । इदं तु तत्वं जीवब्रह्मणोरैक्यं न क्वापि सूत्रकारो मुखतो वदति सर्वत्र भेदमेवातो नैक्यमिष्टं तत्राह 'प्रतिपाद्यंत्विति' प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" इत्यादिना इति शांकरभाष्यतद्व्याख्यानाभ्यां शास्त्रदृष्टयेति "आत्मेति सूत्रव्यतिरिक्तसर्वसूत्राणां तद्व्याख्येयभूतवेदानां च शंकरशांकरणां भेदपरत्वसम्मत्यवगत्या तयोरपि जीवब्रह्मैक्यबोधकपदाभावेन "त्यजेदेकं कुलस्यार्थ इति" न्यायेनानेकश्रुतिसूत्रसिद्धभेदविरुद्धार्थप्रतिपादकत्वासंभवेन च शास्त्रदृष्ट्येत्यस्य अंतर्यामिदृष्टयेति व्याख्यानसंभवेन "आत्मेति तूपगच्छंति" इति सूत्रे ईश्वरमिति विशेष्यवाचकपदाभावेन बहुश्रुतिसूत्रविरुद्धत्वेन ईश्वरमित्यध्याहारसंभवेन आत्मशब्दस्य द्युभ्वाद्यधिकरणीयत्वदीयभाष्यरीत्या जीवपरत्वासंभवेन ईश्वरपदाध्याहारेपि ईश्वर आत्मेति अहमिति अर्थासंभवेन ब्रह्म आत्मेति उपगच्छंतीत्युक्त संदर्भानुसारेणार्थसंभवेन सावकाशतया च जीवब्रह्मणोरैक्यबोधकत्वासंभवेन जीवब्रह्मभेदपरत्वस्यैवावश्यं वक्तव्यतया वेदार्थनिर्णायकसूत्राणां च तन्निर्णेयवेदानां च सर्वेषां भेदपरत्वात् । "अष्टवर्षं

ब्राह्मणमुपनयीत। तमध्यापयीते"ति वेदाधिकारप्रयोजकतया व्रतानां ब्राह्मण्यादीनां शांकरभाष्ये आरोपितत्वांगीकारेणाधिकारप्रयोजकब्राह्मण्याद्यभावाच्च। अद्वैतिभिः स्वप्रतिकूलयोः श्रुतिसूत्रयोरनधिकारोऽकामैरपि स्वीकरणीय इति सूत्रसिद्धांतार्थः। ॐ अंशो नानाव्यपदेशात् ॐ अन्यथा चापि दाशकितवादित्वमधीयत एके ॐ सूत्रार्थस्तु—जीवः परमात्मनोंशः नानाव्यपदेशात् पुत्रत्वेन भ्रातृत्वेन सखित्वेन नानाव्यपदेशात् अन्यथाचापि वक्ष्यमाणाभेदापेक्षया भेदेन दाशकितवादित्वं ब्रह्मणः दाशकितवादिस्वरूपत्वं अधीयते कथ्यते श्रुतौ तथाचाभेदेन व्यपदेशः प्राप्तः। एव भेदाभेदाभ्यां व्यपदेशाच्च जीवः परमात्मनोंश इति नानाव्यपदेशस्तु "मां रक्षतु विभुर्नित्यं पुत्रोहं परमात्मनः" इत्यादिरूपः श्रीमज्जयतीर्थटीका तु हेत्वंतरेणैतत्समर्थयति अन्यथेति ॥ अन्यथेति वक्ष्यमाणाभेदापेक्षया एतच्छ्रुतिद्वयेन जीवेशयोर्भेदाभेदावुच्येते ॥ न चान्यन्तरश्रुतिबाधो युक्तः। न च साक्षाद्भेदाभेदावुपपन्नौ विरोधात्। अतः श्रुतिद्वयान्यथानुपपत्त्या भेदमंगीकृत्याभेदस्थानेंशत्वं वक्तव्यमिति भावइति।

(रा.) यत्तु सा जयतीर्थटीका पूर्वोत्तरविरुद्धा अन्यथा चेति सूत्रपदस्य यदपेक्षयेत्याकांक्षाशांत्यर्थ वक्ष्यमाणाभेदेनेति लेखनेन दाशकितवादित्वमधीयत इत्यंशगृहीतदाशकितवादिश्रुतेरभेदार्थत्वमंगीकृतं। अन्यथावक्ष्यमाणाभेदापेक्षयेति लेखनानुपपत्तेः। अंते चाभेदस्थाने अंशत्वं वक्तव्यमिति लेखनेनाभेदनिर्देशस्यांशत्वार्थत्वमुक्तमिति अत्यंतविरोधादिति।

(खं) तन्न गंगायां घोष इत्यत्र गंगापदवाच्ये प्रवाहे घोषाधिकरणत्वबाधात् गंगापदस्य तीरार्थत्वं वक्तव्यमित्युक्ते पूर्वं प्रवाहः गंगापदबोध्य इत्युक्तं इदानीं तीरं गंगापदबोध्यमित्युच्यते अतो विरोध इति वक्तुरिवाभेदस्थानेंऽशत्वं वक्तव्यमित्यभेदबोधकतया प्रतीयमानपदस्यांशार्थकत्वमंगीकरणीयमित्युक्ते "ब्रह्मदाशाब्रह्मकितवा" इति वाक्येन प्रतीयमानाभेदापेक्षयेत्युक्तिमात्रेण तस्याभेदार्थत्वमुररीकृतमिति विज्ञाय विरोध इति वदतस्तवाप्यपहसनीयत्वात्।

(रा.) एतेन किंचाभेदस्थानें अंशत्वनिवेशे सौत्रान्यथाशब्दस्यांशत्वा-पेक्षयाऽन्यथात्वरूपानंशत्वार्थत्वं भवेत् अन्यथा पदव्याख्यानतयोदाहृता "अन्यः परोन्यो जीव" इति श्रुतिगतान्यशब्दस्यापि अनंशत्वार्थत्वं स्यात्। तथा सत्यंशत्वानंशत्वाभ्यां जीवस्य ब्रह्मांशत्वमुक्तसूत्रात् साधितं स्यात् अंशत्वे साध्ये अंशत्वानंशत्वयोर्हेतुत्वं वदतः सूत्रकारस्योपर्यपि महदसामं-जस्यं प्रसज्येत। तस्मादसंगतैव टीकेत्येतदपि परास्तं।

(खं.) अभेदबोधकतया प्रतीयमानवाक्यस्यांशपरत्वमंगीकरणीय-मित्युक्ते "ब्रह्मदाशाब्रह्मकितवा" इति वाक्येनापाततः प्रतीयमानाभेदा-पेक्षया अन्यथाचापि-भेदबोधकतया भासमानानां वाक्यानामपि सत्वादि-त्युक्तेः अनंशत्वबोधकानां वाक्यानां सत्वादिति सिद्धमित्यंगीकृत्यांशत्वा-नंशत्वाभ्यामंशत्वसाधनं विरुद्धमित्युक्तेराविपालगोपालगोपांगनासाधा-रणापहासविषयत्वात्

(रा.) यत्तु इतोऽप्यसंगता तट्टीका "यतो भेदेन तस्यायमभेदेन च गीयते। "अतश्चांशत्वमुद्दिष्टं भेदाभेदौ न मुख्यतः" इतिभाष्योदाहृत वाराहवचनेन भेदाभेदयोर्मुख्यतयोक्तश्रुतिनिर्दिष्टत्वाभावोक्त्यविशेषभेद-मंगीकृत्याभेदस्थानेंशत्वनिवेशोक्त्यसांगत्यात्। वैपरीत्यस्यापि वक्तुं शक्य-त्वाच्चेति।

(खं.) तन्न "पुत्रभ्रातृसखित्वेन स्वामित्वेन यतो हरिः। बहुधा गीयते वेदैर्जीवोंशस्तस्य तेन तु" इति तत्पूर्ववाक्य एव पुत्रत्वभ्रातृत्वादिना भेदविशिष्टस्यैवांशत्वांगीकारात्। तदनुरोधेन भेदाभेदयोर्मुख्यतयोक्त-श्रुतिनिर्दिष्टत्वाभावोक्तिसाम्येपि भेदमंगीकृत्याभेदस्थानेंशत्वनिवेशोक्तेः संगतत्वात् वैपरीत्यस्य वक्तुमशक्यत्वाच्च। अंतःकरणाद्यवच्छिन्नचिद्रूप-रूपदाशादीनां शुद्धचिद्रूपब्रह्मणाऽभेदासंभवेन "ब्रह्मदाशाब्रह्मकितवा" इत्याद्यभेदबोधकतया भासमानानां वाक्यानां गौणार्थत्वस्याभेदवादिना-प्यंगीकार्यत्वाद्भेदवाक्यानामंशत्वादिपरतया गौणत्वांगीकारे वाक्यद्वय-स्यापि गौणत्वस्वीकारापत्तेः भेदवाक्यानां मुख्यभेदपरत्वमंगीकृत्याभेद-

वादिनामपि अवश्यं गौणपरतया योजनीयानां "ब्रह्मदाशा" इत्याद्यभेद-बोधकतया भासमानानां वाक्यानामेवांशपरतया व्याख्यानस्यैकदेशापवादेन कल्प्यमाने च बाधकेन सर्वं बाधनं युक्तमिति न्यायविदः स्थिता इति न्यायानुसारेण युक्तत्वाच्च ।

(रा.) यत्तु न्यायामृते द्वितीयपरिच्छेदे भेदो न स्वरूपमात्रः किंत्वन्योन्याभावः स च वस्तुनः सविशेषाभिन्न इति वाक्यं दृश्यते तद-संगतपदार्थान्वयकमिति प्रतीयते । तरंगिण्या व्याख्यानांतरे च पद-योजनयोक्तवाक्यार्थानुक्तेरिति ।

(खं.) तन्न भेदोर्धर्मिस्वरूपेण निर्विशेषाभिन्नो न किंतु अन्योन्या-भावरूपः स च धर्मिणा सविशेषाभिन्न इति संगतपदार्थान्वयत्वस्य व्युत्प-न्नानां स्पष्टत्वेन तरंगिण्यां व्याख्यानांतरे च पदयोजनया वाक्यार्थानुक्तेर-दोषत्वात् ।

(रा.) सन्यायामृत एव सत्यं ज्ञानमिति लक्षणवाक्यस्थितसत्यपदं "अथ यत् सत् तदमृतं" अथ यत्ति तन्मर्त्यं " अथ यद्यं ते उभे यच्छति' इति छांदोग्यश्रुत्या बद्धमुक्तोभयनियंतृपरं तेन सत्यपदेन बद्धमुक्तोभय-नियंतृत्वं ब्रह्मणो लक्षणमुच्यते। रूढ्या योगबाधो न शंक्यः शास्त्रस्था वा तन्निमित्तत्वादिति न्यायेन शास्त्रात्प्रसिद्धेर्बलवत्वादिति लिखितमित्या-शंक्य यत्रार्यम्लेंच्छप्रसिद्ध्योः समावेशः तत्रार्यप्रसिद्धे रूढिप्रयोजकत्वं म्लेंछप्रसिद्धेर्वा तत्प्रयोजकत्वमिति विषये आर्यप्रसिद्धे रूढिप्रयोजकत्वं न म्लेंछप्रसिद्धेरित्यर्थपरशास्त्रस्था वा तन्निमित्तत्वादिति न्यायस्य रूढि-योगविषयत्वासंभवादिति दूषणमुक्तं ।

(खं.) तन्न आर्यप्रसिद्धेरेव रूढियोजकत्वं न तु म्लेंच्छप्रसिद्धे-रित्यत्र नियामिकाकांक्षायां "आर्या हि शब्दैकसमधिगम्य धर्माधर्मयो-रविप्लुतिलिप्सया शब्दार्थतत्वं विविच्य परिपालयंति न म्लेंछा दृष्टार्थ-व्यवहारस्य यथाकथंचिदपि सिद्धे"रिति आर्याणां शास्त्रानुसारेणार्थ-

स्वीकर्तृत्वादेव आर्यप्रसिद्धेरेव नियामकत्वमिति भाट्टदीपिकादावुक्तत्वेन शास्त्रानुसारेणार्थः स्वीकरणीय इति तदभिप्रायसिद्धेः। प्रकृतेपि सत्यमिति पदस्य शास्त्रानुसारेण मुक्तामुक्तनियामकत्वरूपयौगिकार्थ एव स्वीकार्य इति अभिप्रायेण शास्त्रस्थावेति न्यायस्वीकारोपपत्तेः ।

(रा.) यत्तु सर्वतंत्रस्वतंत्र भगवत्कलावतारश्रीमदश्वत्थनारायणशास्त्रिणां पौत्रेण तिरुविशलूर ग्रामाभिजनेन रामसुब्रह्मण्यशास्त्रिणा विरचितमद्वैतमंडणपूर्वकमध्वचांद्रिकाखंडनं समाप्तमिति ।

(खं.) तदसमंजसं अश्वत्थनारायणशास्त्रिणां भगवत्कलावतारत्वं किमद्वैतिमतानुसारेण सर्वेषामुपहितब्रह्मचैतन्यरूपत्वेन किंवा व्याणादीनामेव भगवत्कलात्वबोधकवाक्यविशेषानुसारेण । नाद्ये आकीरं सर्वेषां उपहितचैतन्यत्वेनोक्तविशेषणस्येतरव्यावर्तत्वाभावेन माहात्म्यानापादकत्वेन च वैयर्थ्यमेव । सर्वेषामुपहितचैतन्यरूपतायाः प्राङ्निरस्तत्वेनासंभवदुक्तिकता च । न द्वितीयः। भगवत्कलावतारत्वे प्रमाणानुपन्यासात् अभावाच्च विना प्रमाणं भगवत्कलातारत्वे अश्वादीनामपि भगवत्कलावतारत्वांगीकारापातात् ।। "अप्राप्ते शास्त्रमर्थवत्" इति न्यायात् ब्रह्म सत्यं जगन्मिथ्येति तव मते अर्थभूतस्य ब्रह्मणः स्वप्रकाशत्वेनाप्राप्तत्वाभावात्। कथंचिदप्राप्तत्वेपि शास्त्रीयपदानां ब्रह्मणि शक्त्यभावेन अशक्ये च प्रत्यक्षादिना अगम्ये लक्षणाया अप्यनुपपत्त्या तद्बोधकत्वानुपपत्तेः। ब्रह्मातिरिक्तस्य वेद्यत्वेपि तस्य मिथ्यात्वेन तत्प्रतिपादकत्वे शास्त्रस्याप्रामाण्यप्रसंगात् । तथा च त्वन्मतरीत्या शास्त्रित्वमपि न संभवत्येवेति नारायणशास्त्रिणां सुब्रह्मण्यशास्त्रिणा इति शास्त्रिपदमनर्थकमेव । किंच "न शास्ता न शास्त्रं" इति शंकरोक्त्यनुसारेण शास्त्राभावः शास्त्रित्वाभावोऽद्वैतिन इष्टः स्याच्चेन्न तदा अद्वैतिभिः साकमस्मद्विवादितेति । एव मद्वैतमंडनं नाम प्रमाणसिद्धताख्यापनं वा "दुर्घटत्वमविद्याया भूषणं न तु दूषणं। कथंचिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेदिति" अविद्याया दुर्घटत्वं वा। नाद्यः तत्त्वमस्यादिवाक्यायां अद्वैतिमते अखंडार्थपरत्वेन (संसर्गाविषयकधीजनकत्वेन) भेदाभेदपक्षयोरौदासीन्यात् भेदप्रतिपादकतया

अद्वैत्यभिमतानां तत्वमस्यादिपंचषातिरिक्तवाक्यानां भूयसां स्यात्स्व-धर्मत्त्रमिति न्यायेनाभेदबोधकत्वासंभवस्य निपुणतरमुपपादितत्वेन च प्रमाणसित्धस्वरूपमंडनासंभवात् । द्वितीयं दुर्घटत्व (युक्तादिप्रमाणविष-यत्व) रूपमंडनं अस्माकमनुमतमिति त्वदभिलषितं दुर्घटत्वमेवैतावता प्रबंधेन स्पष्टीकृतमस्माभिरिति संतोष्टव्यमेव । मंडनस्य दुर्घटत्वरूपत्वे तत् प्रतिद्वंद्वितया निर्दिष्टचंद्रिकाखंडनं नामचंद्रिकायाः सघटत्व (प्रमा-णादिसित्धार्थप्रतिपादकत्व) मुक्तं भवति। तदप्यस्माकमिष्टमिति श्रुति स्मृत्यादिभिः रामसुब्बवाक्येन च प्रमाणसित्घार्थप्रतिपादकत्वरूपसुघटत्वं प्रपंचितमस्माभिः । अस्मदभिमते अद्वैतस्य दुर्घटत्वरूपमंडने चंद्रिकाया-स्तत्प्रतिद्वंद्वियुक्त्यादिप्रमाणसित्धार्थप्रतिपादकत्वरूपमंडने च रामसुब्ब-शास्त्रिप्रभृत्यद्वैतिनः अस्माकमतीव सहायभूता इति भवदीयोपकारं स्म-रामः कदापि न विस्मराम इति श्रीरामः शरणं मम । इति अद्वैतखंडन-पूर्वकचंद्रिकासमर्थने रामसुब्बप्रदर्शितदोषाभासनिरासकभागः समाप्तः ॥
इति

श्रीः

# शुद्धिपत्रिका

| पृष्ठम् | श्रेणी | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३ | चंद्रिकायण्डनम् । | चंद्रिकामण्डनम् । |
| ५ | ७ | णद्वैति | अद्वैति |
| ७ | १ | व्रीयमाण | व्रियमाण |
| ९ | १४ | ग्रहकाणां | ग्राहकाणां |
| १५ | ३ | समन्व | समन्वय |
| १९ | १४ | पूर्वप्रकृतापक्ष | पूर्वप्रकृतापेक्षा |
| २१ | २ | य | X |
| २२ | २२ | व | य |
| ३८ | ७ | लक्षणयाः | लक्षणायाः |
| ४० | १२ | प | ष |
| ,, | ,, | ष्टि | ष्ट |
| ४२ | १ | ा | त्वं |
| ६१ | १९ | वा | या |
| ६२ | ११ | भेदे | भेद |
| ६५ | १८ | य | द |
| ६७ | १३ | श्रव | श्रवण |
| ,, | १५ | प्रच्छन्न | प्रच्छन्नं |
| ६८ | ७ | हुधा | बहुधा |
| ,, | ,, | अद्वैतिना | अद्वैतिनां |
| ६९ | १० | द्द | ट्ट |
| ७२ | ६ | दीनां | दीनाम् । |
| ७७ | ११ | वाक्यस्यार्थ | वाक्यस्यार्थः |
| ७८ | ३ | विषी | विषयी |
| ७८ | १३ | नि | ति । |

| पृष्ठम् | श्रणी | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७८ | १४ | निश्चयोः | निश्चययो |
| ८० | २ | मि | सि |
| ,, | ९ | ऽनुपन्नार्थमेव | अनुपपन्नार्थमेव |
| ९२ | २ | त | भूत |
| ,, | ४ | सि | भि |
| १०१ | १६ | प्रमागा सिद्धतय | प्रमाणासिद्धतया |
| ,, | २० | त्वदीन यामुक्त्या | त्वदीयया उक्त्या |
| ,, | २१ | श्व | श्च |
| १०४ | २ | र | रा |
| १०५ | ६ | त्व | व |
| ११८ | ६ | पंरात्र | पंचरात्र |
| १२२ | १५ | मोक्षनिष्ठ | निष्ठमोक्ष |
| १२५ | ६ | सादेक्षत्वे | सापेक्षत्वे |
| १३८ | ६ | द्व | द्वे |
| १४१ | १ | पव्यखनीयत्वेन | पन्यसनीयत्वेन |
| १४३ | १६ | एव | एष |
| १४५ | ३ | भय | भव |
| १४७ | १६ | अत्त्राधि | अत्राधि |
| १४८ | ८ | समाधिकर | समानाधिकर |
| ,, | १६ | वशेष्ये | विशेष्ये |
| १४९ | २२ | निरूपणानेनर | निरूपणानंतर |
| १५३ | ३ | न | X |
| १५४ | ९ | तंदक | नंदक |
| १५७ | २० | अवटित | अघटित |
| ,, | २२ | शाक्यते | शक्यते |
| १५९ | २४ | तक्ष्यत् | बक्ष्यत् |

| पृष्ठम् | श्रेणी | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६३ | १० | तल्पित | कल्पित |
| २११ | ७ | लोकेयं | लोकोऽयं |
| ,, | १० | प्रायोगेण | प्रयोगेण |
| २१२ | १४ | लिंगानेक्षया | लिंगापेक्षया |
| २१४ | २ | अगस्या | अवश्य |
| ,, | १२ | हेतत्वा | हेत्वा |
| २१७ | १३ | माकाशदं | माकाशायदं |
| २२३ | १५ | त्रिषयाणमनेन | विषया[illegible]ामनेन |
| २२७ | ३ | जट | जड |
| २२८ | २२ | विनाशऽपि | विनाशेऽपि |
| २३० | ७ | मानांतरणं | मानांतरसं |
| २३१ | १७ | पत्रनोत्पत्तर | पवनोत्पत्तेर |
| २३२ | १३ | भाधका | बाधका |
| ,, | २२ | तपर्थं | तदर्थं |
| २३३ | ९ | बाथा | बाधा |
| २३६ | २२ | ज्योषो | ज्योतिषो |
| २३८ | १ | दिवः पविश्यो | दिवः परविश्यो |
| ,, | १३ | दृष्टतयोः | दृष्टत्वयोः |
| २४० | ६ | अक्तारं | वक्तारं |
| ,, | १४ | विभागा | विभागाः |
| २४७ | १ | परिशिष्ट | परिशिष्ट- |
| २४८ | ३ | ज्ञानाक्रिया | ज्ञानक्रिया |
| २५० | १६ | पर्याय | पर्याया |
| २५१ | ४ | र्थश्वकार | र्थश्चकार |
| २६० | १६ | गंवा | गंधा |
| २६३ | १२ | चान्यन्तर | चान्यतर |
| Int XV | 24 | fore-ward | fore-word |